# INTRODUCTION

The first volume of the present work Paninisūtravyākya containing the Sūtras in the Purvardha of the Siddhānta-kaumudi was published in the year 1954. This is the continuation of the same containing the Sūtras of the Uttarardha beginning from Bhvādi and ending with the Linganuśāsanam. As promised in the earlier volume, the following Indices have been added to this work.

1. Index of Sūtras
2. ,, Vartikas
3. ,, Unadi Sūtras
4. ,, Linganuśasana Sūtras
5. ,, Ganas
6. ,, Gana Sūtras
7. ,, Verses and Passages cited as illustration
8. ,, Words given as examples

Since the authors referred to in this work are not many, a separate index for the same has not been prepared. In addition to the works mentioned in the previous volume, from which illustrations have been drawn, the following two more works *Viz.* Subhaşitatriśatī of Bhartrhari and Snugāvijayam of Sundararaja Kavi should be added to the list.

My thanks are due to the Sanskrit Pandits of the library Śrimans T. H. Viswanathan, N. S. Ramanujam, M. S. Vaidyanathan and V. R. Kalyanasundaram for preparing the press copy of the text and indices and correcting the proofs. My thanks are also due to the Rathnam Press for cooperating with me in completing the printing of this work without any delay.

Madras Govt.
Oriental Mss. Library.
30—4—1955.

**T. CHANDRASEKHARAN,**
*Curator.*

॥ श्रीरस्तु ॥

पाणिनिसूत्रव्याख्यायाः सूचीतिलकः प्रथमो भागः १९५४ तमे वर्षे प्रकाशितोऽस्ति । अधुना तदुत्तरावधिको द्वितीयो भागः स्वादिप्रकरणादिः लिङ्गानुशासनप्रकरणान्तः प्रकाश्यते । अस्मिंश्च भागे प्रतिज्ञानुसारं अधो-निर्दिष्टाः सूच्योऽष्टौ अन्ते संयोजिताः ।

(१) सूत्रसूची
(२) वार्तिकसूची
(३) उणादिसूत्रसूची
(४) लिङ्गानुशासनसूत्रसूची
(५) गणानुक्रमणी
(६) गणसूत्रसूची
(७) उदाहृतग्रन्थवचनसूची
(८) उदाहृतपदसूची

उदाहरणार्थोद्धृतग्रन्थानां तत्कर्तॄणां च बाहुल्याभावात् अस्मिन् तदर्थी सूचिका न संयोजिता । पूर्वभागे उदाहरणार्थोद्धृतग्रन्थैः सह सुभाषितत्रिशती स्नुषाविजयश्चेति ग्रन्थद्वयमधिकतया उदाहरणार्थमुद्धृतम् ।

एतद्ग्रन्थस्य सूचीनां च मुद्रापणे उपकृतवद्भ्यः श्रीयुतविश्वनाथ-रामानुजवैद्यनाथकल्याणसुन्दरमहोदयेभ्यः, अविलम्बेन मुद्रापयित्वा उपकृतवद्भ्यः रत्नमुद्रालयाधिकृतेभ्यश्च धन्यवादान् निवेदयामि ।

मद्रपुरी,
30 - 4 - '55.

इत्थं
ति. चन्द्रशेखरः

# ॥ विषयानुक्रमणिका ॥


| | पुटसङ्ख्या |
|---|---|
| भ्वादिप्रकरणम् | १ |
| अदादिप्रकरणम् | ६१ |
| जुहोत्यादिप्रकरणम् | ६८ |
| दिवादिप्रकरणम् | ७० |
| स्वादिप्रकरणम् | ७२ |
| तुदादिप्रकरणम् | ७४ |
| रुधादिप्रकरणम् | ७६ |
| तनादिप्रकरणम् | ७७ |
| क्र्यादिप्रकरणम् | ८० |
| चुरादिप्रकरणम् | ८२ |
| णिजन्तप्रकरणम् | ९४ |
| सन्नन्तप्रकरणम् | १०१ |
| यङन्तप्रकरणम् | १०४ |
| यङ्लुगन्तप्रकरणम् | १०८ |
| नामधातुप्रकरणम् | १०९ |
| कण्ड्वादिप्रकरणम् | १२६ |
| आत्मनेपदप्रकरणम् | १२७ |
| परस्मैपदप्रकरणम् | १८६ |
| भावकर्मप्रकरणम् | १९४ |
| कर्मकर्तृप्रकरणम् | १९६ |
| लकारार्थप्रकरणम् | १९९ |
| कृत्यप्रकरणम् | २१५ |
| कृदन्तप्रकरणम् | २३८ |
| उणादिप्रकरणम् | २८३ |

| | |
|---|---|
| उत्तरकृदन्तप्रकरणम् - - - | ५२१ |
| वैदिकप्रकरणम् - - | ५९४ |
| लिङ्गानुशासनप्रकरणम् - - - | ६९७ |
| | |
| सूत्रसूची - - - | 2 |
| वार्तिकसूची - - - | 36 |
| उणादिसूत्रसूची - - - | 45 |
| लिङ्गानुशासनसूत्रसूची - - | 56 |
| गणानुक्रमणी - - - | 60 |
| गणसूत्रसूची - - - | 64 |
| उदाहरणश्लोकसूची - - - | 65 |
| उदाहृतपदसूची - | 1[illegible]0 |


— : ※ : —

॥ श्रीः ॥

# ॥ पाणिनिसूत्रव्याख्या ॥

( सोदाहरणश्लोका )

उत्तरार्धम्

—:०:—

## ॥ तिङन्ते भ्वादिप्रकरणम् ॥

### २१५१ । वर्तमाने लट् । (३. २. १२३)

### २१५२ । लः कर्मणि च भावे चाकर्मकेभ्यः । (३. ४. ६९)

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ।

### २१५७ । अनुदात्तङित आत्मनेपदम् । (१. ३. १२)

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ।

भट्टिकाव्ये—VIII. 1.

> **अगाधत** ततो व्योम हनूमानुरुविग्रहः ।
> **अत्यशेरत** तद्वेगं न सुपर्णार्कमारुताः ॥ 1949 ॥

हनूमान् व्योमागाधत । गाधृ लङ् । अनुदात्तेत्त्वादात्मनेपदम् । अगाहतेति पाठान्तरम् । गाहेर्लङ् । पूर्ववदात्मनेपदम् । तद्वेगं गरुडादित्यपवना **नात्यशेरत** नातिशयितवन्तः । शीङो ङित्त्वादात्मनेपदम् । शीङो लङ् ।

माघे—II. 42.

> विधाय वैरं सामर्षे नरेऽरौ य उदासते ।
> प्रक्षिप्योदर्चिषं कक्षे **शेरते** तेऽभिमारुतम् ॥ 1950 ॥

**शेरते** । शीङ् । लट् । ङित्त्वादात्मनेपदम् । लट् ।

असिन्नेव ग्रन्थे श्लो० 1092. आजिहीते । ओहाङ् । ङित्वादात्मनेपदम् ।

२१५८ । स्वरितञितः कर्त्रभिप्राये क्रियाफले । (१. ३. ७८)

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ।

असिन्नेव ग्रन्थे श्लो० 363. स्वमाहात्म्यं गूहमानः आवृण्वानः ।

नैषधे—V. 22.

सम्पदस्तव गिरामपि दूरा यन्न नाम विनयं विनयन्ते ।
श्रद्दधाति क इवेह न साक्षादाह चेदनुभवः परमाप्तः ॥ 1951 ॥

तव सम्पदो विनयं विनयन्ते । नयतेर्लट् । अनेनात्मनेपदम् । 'कर्तृस्थे चाशरीरे कर्मणि' (सू. 2710) इत्यनेनेति केचित् । तदसत् । सम्पदां कर्तॄणामचेतनत्वेन कर्मणो विनयस्य इन्द्रियनिष्ठत्वेन चाकर्तृस्थत्वादिति ।

२१६५ । शेषे प्रथमः । (१. ४. १०८)

मध्यमोत्तमयोरविषये प्रथमः स्यात् ।

असिन्नेव ग्रन्थे श्लो० 288. भवान् रावणं हनिष्यति अवधीत् । 'अभिज्ञावचने लृट्' (सू. 2773) इति भूते लृट् । अदो हननं स्मरतीति काकुः । उभयत्राप्यनेन प्रथमपुरुषः ।

असिन्नेव ग्रन्थे श्लो० 634. भवान् युद्धे चैद्येन विजेष्यते । कर्मणि लृट् । शेषे प्रथमः ।

असिन्नेव ग्रन्थे श्लो० 824. हे राम ! भवान् सङ्क्रन्दनस्यापि श्रियोऽत्यन्तगो विनाशयिता स्यात् । शेषे प्रथमः ।

२१९७ । तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । (७. १. ३५)

आशिषि तुह्योस्तातङ् वा स्यात् । भवतु भवतात् ।

भट्टिकाव्ये—XX. 13.

तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम् ।
भवतादधियुक्ता त्वमत ऊर्ध्वं स्ववेश्मनि ॥ 1952 ॥

तृणेढु, भवतात् ।

## २२१९ । माङि लुङ् । (३. ३. १७५)

रघुवंशे—I. 37.

मा भूदाश्रमपीडेति परिमेयपुरस्सरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥ 1953 ॥

आश्रमपीडा मा भूत् मास्तु । आशीरर्थे लुङ् । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः ।

## २२२० । स्मोत्तरे लङ् च । (३. ३. १७६)

स्मोत्तरे माङि लङ् स्याल्लुङ् च ।

अस्मिन्नेव ग्रन्थे श्लो० 341. मा स्मोपालभथाः नोपालभस्व । अनेन उपाङ्पूर्वाल्लभेर्लङ् । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 702. त्वं प्रतिकूला मा स्म भूः । चकाराल्लुङ् । अडागमप्रतिषेधः ।

भट्टिकाव्ये—VII. 100.

विदित्वा शक्तिमात्मीयां रावणं विजिगीषवः ।
उक्तं पिपृच्छिपूणां वो मा स्म भूत सुपुप्सवः ॥ 1954 ॥

यूयं सुपुप्सवो मा स्म भूत । चकाराल्लुङ् । अडागमप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 381. अस्माकमुक्तं मृषा मा स्म बुध्वम् न जानीध्वम् । पूर्ववत् ।

भट्टिकाव्ये—XVII. 21.

मापराधोदियं किञ्चिदश्रयत्पत्युरन्तिकात् ।
सीतां राक्षस मा स्मैनां निगृह्णाः पापदुःखिताम् ॥ 1955 ॥

एनां मा स्म निगृह्णाः मा वधीः । अनेन वर्तमाने लङ् ।

भट्टिकाव्ये—XVII. 26.

मा स्म तिष्ठत तत्रस्थो वध्योऽसावहुतानलः ।
अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्जिते ॥ 1956 ॥

मा स्म तिष्ठत मा विलम्बध्वम् । गच्छतेत्यर्थः । लङ् । अडभावः ।

२२२३ । गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । ( २. ४. ७७ )

एभ्यस्सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ।

भट्टिकाव्ये—XV. 31.

सामर्थ्यं चापि सोऽस्तम्भीद्विक्रमं चास्य नास्तभन् ।
शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ 1957 ॥

केचिद्भयाद्वृक्षानध्यष्ठुः । अस्थात् अस्थातां अस्थुः ।

भट्टिकाव्ये—XV. 6.

तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर ।
सोऽस्नासीद्व्यलिपन्मांसमप्सासीद्वारुणीमपात् ॥ 1958 ॥

वारुणीमपात् पीतवान् । सिचो लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 563. अगात् । 'इणो गा लुङि' (सू. 2458) इति गादेशः ।

२२२८ । न माङ्योगे । ( ६. ४. ७४ )

अडाटौ न स्तः । मा भवान्भूत् । मा स्म भवत् भूद्रा ।

अस्मिन्नेव ग्रन्थे श्लो० 341. मा सोपालभथाः । अडागमप्रतिषेधः ।

भट्टिकाव्ये—VII. 103.

समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम् ।
मोपायध्वं भयं सीतां मोपायंस्त दशाननः ॥ 1959 ॥

भयं मोपायध्वम्, मोपायंस्त । उभयत्राप्यडभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 489. कस्यचित् मोपस्कृथाः । अडभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 270. माधिष्ठा निर्जनं वनं, माध्यवात्सीर्भुवम् । अडभावः ।

२२३२ । शेषे विभाषाऽकखादावषान्त उपदेशे । ( ८. ४. १८ )

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति प्रनिभवति ।

भट्टिकाव्ये—IX. 100.

प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषम् ।
प्रणिजानीहि हन्यन्ते दूता दोषे न सत्यपि ॥ 1960 ॥

प्रणिजानीहि अवगच्छ । जानातेरशेषधातोरुपदेशावस्थायामकखाद्यषान्तत्वात् अनेन वा णत्वम् । प्रणिशम्य, प्रणियातुम् । 'नेर्गदनद' (सू. 2285) इति णत्वम् ।

२२३७ । इजादेश्च गुरुमतोऽनृच्छः । ( ३. १. ३६ )

इजादिर्यो धातुर्गुरुमान् ऋच्छत्यन्यस्तत आम् स्याल्लिटि ।

भट्टिकाव्ये—XIV. 18.

ईक्षांचक्रेऽथ सौमित्रिमनुजज्ञे बलानि च ।
नमश्चकार देवेभ्यः पर्वतल्पं मुमोच च ॥ 1961 ॥

ईक्षांचक्रे दृष्टवान् । आम्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 678. हास्तिकानि वपुरुक्षांबभूवुः सिषिचुः । आम्प्रत्ययः ।

२२३९ । कृञ्चानुप्रयुज्यते लिटि । ( ३. १. ४० )

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते ।

२२४० । आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । ( १. ३. ६३ )

पूर्ववदनुप्रयोगः ।

भट्टिकाव्ये—VIII. 38.

अध्यासिसिषमाणेऽथ वियन्मध्यं क्षपाकरे ।
**कासांचक्रे** पुरी सौधैरतीवोद्भासिभिस्सितैः ॥ 1962 ॥

पुरी **कासांचक्रे** प्रचकाशे । 'कास्प्रत्ययात्' (सू. 2306) इत्याम् । कृञनुप्रयोगः । कास्ट आत्मनेपदम् । कासिवत् कृञस्तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1258. प्राच्यं प्राचि भवं पूर्वद्वारम् । **आंजिहिषांचक्रे** गन्तुमिष्टवान् । अहि गतौ आत्मनेपदम् । ततस्सनि 'पूर्ववत् सन' (सू. 2734) इत्यात्मनेपदम् । कृञनुप्रयोगस्याप्यात्मनेपदम् ।

भट्टिकाव्ये—XIV. 3.

**वादयाञ्चक्रिरे** ढक्काः पणवा दध्वनुर्हताः ।
काहलाः **पूरयांचक्रुः** पूर्णाः पेराश्च सस्वनुः ॥ 1963 ॥

ढक्काः वादकाः **वादयाञ्चक्रिरे** वादितवन्तः । वदेर्हेतुमण्ण्यन्तादात्मनेपदम् । कृञनुप्रयोगस्याप्यात्मनेपदम् । काहलाः **पूरयाञ्चक्रुः** पूरितवन्तः । 'पूरी आप्यायने' इति चौरादिकात्परस्मैपदम् । कृञनुप्रयोगस्यापि परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 273. अमी उद्धवरामकृष्णाः यानि उत्तुङ्गहेमपीठानि **अध्यासामासुः** अधितस्थुः । येषूपविष्टा इत्यर्थः । 'अधिशीङ्' (सू. 542) इति कर्मत्वम् । आस उपवेशने इत्यस्मात् लिट् । 'दयायासश्च' (सू. 2324) इत्याम्प्रत्यये 'कृञ्चानुप्रयुज्यते' (सू. 2239) इत्यस्तेरनुप्रयोगः । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' (सू. 2240) इति कृञ एव नियमात् अस्तेर्नात्मनेपदम् ।

माघे—I. 34.

**निवेशयामासिथ** हेलयोद्धृतं फणाभृतां छादनमेकमोकसः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरस्सु भूतलम् ॥ 1964 ॥

त्वं शिरस्सु **निवेशयामासिथ** निहितवान् । ण्यन्ताल्लिट् । अस्तेरनुप्रयोगः ।

### २२४८ । अत आदेः । (७. ४. ७० )

अभ्यासस्यादेरतो दीर्घः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1583. मृगा वाममानञ्चुः गतवन्तः । 'अञ्चु गतिपूजनयोः' लिट् ।

## २२६२ । इदितो नुम्धातोः । (७. १. ५८)

स्कुदि, स्कुन्दते । श्विदि, श्विन्दते । वदि, वन्दते । भदि, भन्दते । मदि, मन्दते । स्पदि, स्पन्दते । क्लिदि, क्लिन्दते ।

भट्टिकाव्ये—XV. 23.

> दग्धशैल इवाभासीत् प्राकंस्त क्षयमेघवत् ।
> प्राचकम्पदुदन्वन्तं राक्षसानप्यतित्रसत् ॥ 1965 ॥

उदन्वन्तमचकम्पत् कम्पितवान् । कपि चलने इत्यस्य ण्यन्तस्य चङि रूपम् ।

भट्टिकाव्ये—VII. 62.

> कुर्वन्तो ह्रवमाप्तानां पिपासावधकांक्षिणः ।
> द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतम् ॥ 1966 ॥

पिपासा पातुमिच्छा । तस्या वधोऽपनयनं तं कांक्षितुं शीलं येषामिति पिपासावधकांक्षिणः । 'काक्षि माक्षि कांक्षायां' इत्यस्मात् 'सुप्यजातौ णिनिस्ताच्छील्ये' (सू. 2988) इति ताच्छील्ये, 'साधुकारिणि' (वा. 2038 सू. 2988) इति वा णिनिः । इदित्त्वान्नुम् ।

भट्टिकाव्ये—II. 19.

> न तज्जलं यन्न सुचारुपङ्कजं
> न पङ्कजं तद्यदलीनषट्पदम् ।
> न षट्पदोऽसौ न जुगुञ्ज यः कलं
> न गुञ्जितं तन्न जहार यन्मनः ॥ 1967 ॥

गुजि अव्यक्ते शब्दे । नुम् ।

## २२६७ । वदव्रजहलन्तस्याचः । (७. २. ३)

नित्यं सिचि वृद्धिः । 'अतो हलादेर्लघोः' (सू. 2284) हलादेर्लघोरकारस्य इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् । यथा अखादीत् अखदीत् । 'अतो ल्रान्तस्य' (सू. 2330) इति नित्यं सिचि वृद्धिः ।

भट्टिकाव्ये—XV. 9.

अवादीन्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
मा ज्ञासीस्त्वं सुखी रामो यदकार्षीत्स रक्षसाम् ॥ 1968 ॥

तमवादीत् उक्तवान् । अनेन वृद्धिः ।

भट्टिकाव्ये—IX. 8.

अक्षारिषुः शराम्भांसि तस्मिन् रक्षःपयोधराः ।
न चाह्वालीन्न चाव्राजीत्त्रासं कपिमहीधरः ॥ 1969 ॥

अक्षारिषुः । अह्वालीत् । 'अतो हलादेः' (सू. 2284) इति विकल्पे प्राप्ते 'अतो ल्रान्तस्य' (सू. 2330) इति नित्यं सिचि वृद्धिः । नाव्राजीत् भयं न जगाम । अनेन वृद्धिः ।

## २२६९ । इरितो वा । ( ३. १. ५७ )

इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे । च्युतिर्, अच्युतत् अच्योतीत् । श्च्युतिर्, अश्च्युतत् अश्च्योतीत् ।

भट्टिकाव्ये—XV. 43.

ते तं व्याशिषताक्षौत्सुः पादैर्दन्तांस्तथाच्छिदन् ।
आर्जिजच्छरभो वृक्षं नीलस्त्वादित पर्वतम् ॥ 1970 ॥

दन्तैरच्छिदन् छिन्दन्ति स्म । छिदिर् । अङ् । पादैरक्षौत्सुः पिष्टवन्तः । क्षुदिर् संपेषणे । अङभावपक्षे रूपम् ।

भट्टिकाव्ये—XV. 91.

अच्छैत्तां च महात्मानौ चिरमश्रमतां न च ।
तथा तावास्यतां बाणानतानिष्टां तमो यथा ॥ 1971 ॥

तौ शरजालानि अच्छैत्ताम् छिन्नवन्तौ । छिदिर्, अङभावपक्षे रूपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 269. सैन्यं रक्तमच्युतत् । च्युतिधातोर्लुङि अङ् ।

भट्टिकाव्ये—VI. 28.

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवम् ।
इदं शोणितमभ्यग्रं सम्प्रहारेऽश्च्युतत्तयोः ॥ 1972 ॥

श्च्युतिर् अङ् ।

भट्टिकाव्ये—XV. 10.

उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत् ।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ 1973 ॥

रामो लङ्कामरुधत् आवृतवान् । रुधिर् आवरणे इत्यस्मात् लुङि अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 29. इमां पुरीमरौत्सीत् रुद्धवान् । रुधिधातोः लुङि सिचि वृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1104. मा रुदः । रुदिर्, लुङि अङ् । 'न माङ्' (सू. 2228) इति अडागमप्रतिषेधः ।

चम्पूरामायणे—I. 110.

ग.—अथ दशरथस्तनयैस्सह कृतविवाहैर्विदेहेभ्यः प्रतिनिवर्तमानः संवर्तसमयसमुज्जृम्भितहुतवहदुःसहरोषं भीषणदुर्वारपराक्रमं क्षत्रवर्गगर्वसर्वङ्कषपरश्वथधाराधीनरुधिरधाराकल्पितपितृतर्पणं दर्पवतामग्रेसरं उग्रप्रतापिनं तपस्समुचितं वल्कलं वसानमपि वासनावशादनतिपरिमुषितयुद्धश्रद्धं मध्येमार्गं भार्गवं मुनिं राममद्राक्षीत् ॥ 1974 ॥

दृशिर् लुङ् ।

भट्टिकाव्ये—XV. 12.

वीर्यं मा न दर्दशस्त्वं मा न त्रास्थाः क्षतां पुरीम् ।
तवाद्राक्ष्म वयं वीर्यं त्वमजैषीः पुरा सुरान् ॥ 1975 ॥

2

तव वीर्यमद्राक्ष्म दृष्टवन्तो वयम् । अङभावपक्षे रूपम् । अद्राक्षीत् अद्राष्टां अद्राक्षुः । अद्राक्षीः अद्राष्टं अद्राष्ट । अद्राक्षं अद्राक्ष्व अद्राक्ष्म । अङ्पक्षे, अदर्शत् अदर्शतां अदर्शन् इत्यादि ।

२२७० । **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिच-सञ्जस्वञ्जाम्** । (८. ३. ६५)

**एषां** सस्य षः स्यात् ।

भट्टिकाव्ये—IX. 71.

अभिष्यन्तं कपिं क्रोधादभिपुण्वन्निवात्मनः ।
सम्प्रहाररसमुद्भूतै रक्तैः कोष्णैरसृश्च्युतैः ॥ 1976 ॥

**अभिष्यन्तम**न्तयन्तम् । 'षोऽन्तकर्मणि' लट् । ततः शतृ । **अभिपुण्वन्निव** पुञ् । शतृ । उभयत्र षत्वम् । अभ्यषुण्वन् अभ्यपिञ्चन्निति च पाठे 'प्राक्सितात्' (सू. 2275) इति षत्वम् ।

भट्टिकाव्ये—XIV. 38.

सुग्रीवो मुमुदे देवास्साध्वित्यूचुस्सविस्मयाः ।
विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ 1977 ॥

**विभीषणोऽभितुष्टाव** अभितुष्टवान् । ष्टुञ् स्तुतौ । तुष्टाव । उपसर्गं विना षत्वम् ।

भट्टिकाव्ये—IX. 72.

संग्रामे तान**धिष्ठास्यन्**निषद्य पुरतोरणम् ।
अविषीदन्नवष्टभ्यान् व्यष्टम्भान्नरविष्वणान् ॥ 1978 ॥

**अधिष्ठास्यन्** आक्रमिष्यन् । षत्वम् ।

**अनर्घराघवे—IV. 23.**

साकं शक्तिधरेण तत्रभवतो देवाद्भवानीपते-
र्यस्सम्यक्श्रमवाप चापनिगमं सम्यञ्चि सामानि च ।

शूराणाञ्च तपस्विनाञ्च परमां काष्ठामधिष्ठास्नुभि-
स्तेजोभिर्भगवानसौ भृगुपतिर्दिष्ट्याद्य दर्शिष्यते ॥ 1979 ॥

**अधिष्ठास्नुभिः** । 'ग्लाजि' ( सू. 3119 ) इति क्स्नुः । अधिष्ठास्नुरिति अध्युपसर्गात्षत्वम् ।

चम्पूभारते—V. 11.

ग.— तावदनाकर्णितपूर्वगाण्डीवविस्फारश्रवणादहम्पूर्विकया युगपद**भिषेणयतो** दिविषदवध्यभावादध्यातमरणान् क्षिप्रं क्षुरप्रैर्विश्राणितविवरादुरसः कृतप्रयाणैः प्राणैः त्रिकोटिशो निवातकवचानपि प्रवातकवचानेव विरचय्य नभसि प्रमादपतितेन पतङ्ग-परिवेषेणेव स्फटिकप्राकारेण परिगुप्तिमतो हिरण्यपुराद्विदितबन्धुजनवृत्तान्ततया रोषादभि-गम्य कलहायमानान् कालकेयानपि कालगेहातिथीन् पाशुपतेन मन्त्रपूर्वं निमन्त्रया-ञ्चक्रे ॥ 1980 ॥

**अभिषेणयतः** सेनया अभिगमनं कुर्वतः । 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' II. viii. 96. इत्यमरः । 'सत्यापपाश' ( सू. 2563 ) इति णिचि ततः शतृ-प्रत्यये अनेन षत्वम् ।

माघे—VI. 64.

**अभिषिषेणयिषुं** भुवनानि यः
स्मरमिवाख्यत लोध्ररजश्च यः ।
क्षुभितसैन्यपरागविपाण्डुर
द्युतिरयं निरयन्नुदमूद्दिशः ॥ 1981 ॥

अभिषेणयति । 'सत्यापपाश' ( सू. 2563 ) इत्यादिना सेनाशब्दाण्णिच् । अनेन षत्वम् । अभिषेणयितुमिच्छु**मभिषिषेणयिषुम्** । सन्नन्तादुप्रत्ययः ।

रघुवंशे—III. 42.

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः ।
पुनः पुनस्सूत**निषिद्ध**चापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ 1982 ॥

**निषिद्धम्** । षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1628. **अभ्यपिञ्चत्** ।

माघे—II. 54.

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा **परिषिञ्चति** 1983 ॥

षिञ्चू, सिञ्चति । **परिषिञ्चति** ।

चम्पूरामायणे—V. 46.

निःश्रेयसप्रणयिनीं पदवीं निरोद्धुं
त्रैलोक्यपापपरिपाकमिवात्तरूपम् ।
सूर्येन्दुपावकमहांसि तपोबलेन
जित्वा यथेष्टम**भिषिक्त**मिवान्धकारम् ॥ 1984 ॥

**अभिषिक्तम्** ।

चम्पूरामायणे—I. 60.

अथ सेनान्यमिच्छद्भिरुक्तस्सत्रब्रह्मभिस्सुरैः ।
बह्निरह्नाय जाह्नव्यां **न्यषिञ्चद्**वीर्यमैश्वरम् ॥ 1985 ॥

**न्यषिञ्चत्** निषिक्तवान् ।

माघे—VII. 16.

अशिथिलमपरावसज्य कण्ठे दृढपरिरम्भनुदद्धिःस्तनेन ।
हृषिततनुरुहा भुजेन भर्तुर्मृदुममृदु[1] **व्यतिषक्तमे**कबाहुम् ॥ 1986 ॥

**षञ्ज सङ्गे, सक्तम्** । **व्यतिषक्तम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 302. विभुः रामः ते नाम्नोऽपि परिशेषं न **स्थापयिष्यति** । किमुत कायमित्यर्थः । अत्राप्रयुक्तकायपदार्थद्योतकत्वात् अपेः 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' (सू. 557) इति पदार्थे कर्मप्रवच-

1. व्यतिविद्धम् इति पाठान्तरम् ।

नीयत्वम् । रामः स्थाणुमपि जयेत् । तेनैव सम्भावनायां कर्मप्रवचनीयत्वम् । भवतो ग्रहणं क्रियत् । उभयत्राप्यनुपसर्गत्वान्न षः ।

अस्मिन्नेव ग्रन्थे श्लो० 303. हे नराशन ! अस्मानपि स्तुहि साधूक्तमिति प्रशंस ; अपि सेध निगृहाण । यथेच्छा तथा क्रियताम् । मया तु तथ्यमुक्तम् । अत्रान्ववसर्गे कामचारानुज्ञानेऽपेः कर्मप्रवचनीयसंज्ञा । त्वं कृशानौ दर्पमपि सिञ्चेः । अत्र गर्हायां कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाबाधनात् स्तौतिसेधसिचां षत्वं न भवति ।

अस्मिन्नेव ग्रन्थे श्लो० 1923. **परिसेसिचां** परितः पौनःपुन्येन सेचनम् । सिचेर्यङन्तात् स्त्रियामप्रत्यये टाप् । 'सिचो यङि' (सू. 2640) इति षत्वप्रतिषेधः ।

## २२७१ । सदिरप्रतेः । (८. ३. ६६)

प्रतिभिन्नादुपसर्गात्सदेस्सस्य षत्वं स्यात् ।

माघे—XIII. 64.

उदयाद्रिमूर्ध्नि युगपच्चकासतो-
र्दिननाथपूर्णशशिनोरसम्भवाम् ।
रुचिमासने रुचिरधाम्नि बिभ्रता-
वलघुन्यथ **न्यषदतां** नृपाच्युतौ ॥ 1987 ॥

**आसने न्यषदताम्** उपविष्टौ । षद्लृधातोर्लुङ् । पुषादित्वादङ् । अनेन षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1978. **अविषीदन्** अखिन्नस्सन् । **निषद्य** तोरणे स्थित्वा । उभयत्रापि सदेष्षत्वम् ।

भट्टिकाव्ये—IX. 91.

**विषसादेन्द्रजिद् बुद्ध्वा** बन्धे बन्धान्तरक्रियाम् ।
दिव्यबन्धो विषहते नापरं बन्धनं यतः ॥ 1988 ॥

बन्धे बन्धान्तरक्रियां **बुद्ध्वा विषसाद** । अनेन षत्वम् । 'सदेः परस्य लिटि' (सू. 2362) इत्यभ्यासात्परस्य षत्वप्रतिषेधः ।

किरातार्जुनीये—XII. 5.

न विसिस्मिये न विषसाद मुहुरलसतां नु चाददे ।
सत्त्वमुरुधृति रजस्तमसी न हतः स्म तस्य हतशक्तिपेलवे ॥ 1989 ॥

न विषसाद । पूर्ववत् ।

## २२७२ । स्तन्भेः । (८. ३. ६.)

सौत्रस्य सस्य षः स्यात् । अप्रतेरिति नानुवर्तते ।

रघुवंशे—II. 32.

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधरुद्धवीर्यः ॥ 1990 ॥

**प्रतिष्टम्भेन** प्रतिबन्धेन । 'प्रतिबन्धः प्रतिष्टम्भः' III. ii. 27. इत्यमरः । षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1978. पुरस्य तोरणं व्यष्टम्नात् अभिष्ठितवान् । 'प्राक्सिता' (सू. 2276) इति षत्वम् ।

## २२७३ । अवाच्चालम्बनाविदूर्ययोः । (८. ३. ६८)

अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1978. **अवष्टब्धान**विदूरस्थान् । षत्वम् ।

## २२७४ । वेश्च स्वनो भोजने । (८. ३. ६९)

व्यवाभ्यां स्वनतेस्सस्य षः स्याद्भोजने ।

अस्मिन्नेव ग्रन्थे श्लो० 1978. विष्वणन्तीति **विष्वणाः** । पचाद्यच् । नराणां विष्वणा इति समासः । नरान् सशब्दमभ्यवहरन्त इत्यर्थः । विपूर्वात्स्वनतेर्भोजनार्थे षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 850. क्रोष्टा डिम्भं व्यष्वणत् सशब्दं भुक्तवान् । षत्वम् । व्यस्वनच्च अस्वनच्च । अभोजनार्थत्वात्षत्वं न ।

२२७५ । परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । (८. ३. ७०)

परिनिविभ्यः परेषामेषां सस्य षः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1220. शिवैर्मरुद्भिर्निषेव्यमाणेन ।

भट्टिकाव्ये - IX. 73.

विषह्य राक्षसाः क्रुद्धाश्शस्त्रजालमवाकिरन् ।
यत्र व्यषहतेन्द्रोऽपि कपिः पर्यसहिष्ट तत् ॥ 1991 ॥

विषह्य सोढ्वा । सहेः षत्वम् । इन्द्रोऽपि न व्यषहत न सोढवान् । तच्छस्त्रजालं कपिः पर्यसहिष्ट परिसोढवान् । एतत्सूत्रानुवृत्तौ 'सिवादीनां' (सू. 2359) इति अड्व्यवायेऽपि सस्य वा षः ।

अस्मिन्नेव ग्रन्थे श्लो० 1988. न विषहते । सहेष्षत्वम् ।

माघे—XVII. 10.

दुरीक्षतामभजत मन्मथस्तथा
यथा पुरा परिचितदाहधाष्टर्यया ।
ध्रुवं पुनस्सशरममुं तृतीयया
हरोऽपि न व्यषहत वीक्षितुं दृशा ॥ 1992 ॥

न व्यषहत नाशक्नोत् । एतत्सूत्रानुवृत्तौ 'सिवादीनां वाड्व्यवायेऽपि' (सू. 2359) इति विकल्पान्न षः ।

अस्मिन्नेव ग्रन्थे श्लो० 1309. न विषेहिरे न सोढवन्तः ।

माघे—XIV. 29.

निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्गिरे ।
नाकिनः कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥ 1993 ॥

कथमपि विषेहिरे ।

कुमारसंभवे—VIII. 9.

यन्मुखग्रहणमक्षताधरं दानमव्रणपदं नखस्य यत् ।
यद्रतं च सदयं प्रियस्य तत्पार्वती विषहते स्म नेतरत् ॥ 1994 ॥

माघे—XIX. 22.

केशप्रचुरलोकस्य **पर्यस्कारि** विकासिना ।
शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ 1995 ॥

प्रद्युम्नेन युद्धस्य शिरः अग्रभूमिः **पर्यस्कारि** परिष्कृतम् । कर्मणि लुङ् । 'सम्परिभ्याम्' (सू. 2550) इति सुट् । 'सिवादीनाम्' (सू. 2359) इत्यड्-व्यवायेऽपि वा सस्य षः ।

किरातार्जुनीये—VI. 17.

अधिरुह्य पुष्पभरनम्रशिखैः परितः **परिष्कृत**तलां तरुभिः ।
मनसः प्रसक्तिमिव मूर्ध्नि गिरेश्शुचिमाससाद स वनान्तभुवम् ॥ 1996 ॥

**परिष्कृतम्** । पूर्ववत्सुट् । अनेन षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1294. शीतरुचेरंशुजालं दिशं **समस्कुरुत** अभूष-यत् । सुट् अडभ्यासव्यवायेऽपीति नियमात्सम्पूर्वः । अत्र षत्वं न ।

भट्टिकाव्ये—XVII. 47.

अतुष्यन्नमरास्सर्वे प्राहृष्यन् कपियूथपाः ।
**पर्यष्वजत** सौमित्रिं मूर्ध्न्यजिघ्रच्च राघवः ॥ 1997 ॥

राघवस्सौमित्रिं **पर्यष्वजत** आश्लिष्टवान् । 'प्राक्सितात्' (सू. 2276) इति अड्व्यवायेऽपि षत्वम् । 'परिनिविभ्य' (सू. 2275) इत्यादिना षत्वमिति जयमङ्गलाव्याख्यायाम् । 'उपसर्गात्सुनोति' (सू. 2270) इत्यत्र यदि ष्वञ्जधातुरुक्तः तदा प्राक्सितादिति षत्वम् । अस्मिन् सूत्रे यदि ष्वञ्जधातुरुक्तः तदा 'सिवादीनाम' (सू. 2359) इति षत्वम् ।

## २२७६ । प्राक्सितादड्व्यवायेऽपि । (८. ३. ६३)

'परिनिविभ्यस्सेवसित' (सू. 2275) इत्यत्र सितशब्दात्प्राक् ये सुनोत्यादयः तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत ।

अस्मिन्नेव ग्रन्थे श्लो० 1976. **अभ्यषुण्वन्** , **अभ्यषिञ्चन्** ।

अस्मिन्नेव ग्रन्थे श्लो० 1985. न्यषिञ्चत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1987. आसने न्यषदताम् उपविष्टौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1978. व्यष्टभ्नात् अधिष्ठितवान् ।

अस्मिन्नेव ग्रन्थे श्लो० 850. व्यष्वणत् ।

२२७७ । स्थादिष्वभ्यासेन चाभ्यासस्य । (८. ३. ६४)

प्राक्सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम् । निषिषेध निषिषिधतुः ।

अस्मिन्नेव ग्रन्थे श्लो० 726. अधितष्ठौ अधिष्ठितवान् । अभ्यासेन व्यवायेऽपि षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1981. अभिषेणयितुमिच्छुः अभिषिषेणयिषुः । अनेन धात्वभ्याससकारयोष्षत्वम् ।

२२७८ । सेधतेर्गतौ । (८. ३. ११३)

गत्यर्थस्य सेधतेः षत्वं न स्यात् ।

भट्टिकाव्ये—IX. 88.

दृष्ट्वा तामभनग्वृक्षान् द्विपो भन्परिसेधतः ।
परितश्चोद्विचिक्षेप क्रुद्धस्त्वयमिवानिलः ॥ 1998 ॥

परिसेधतः परित आधावतः । षिधू गत्यामिति धातोः अनेन षत्वप्रतिषेधः ।

२२७९ । स्वरतिसूतिसूयतिधूञूदितो वा । (७. २. ४४)

इड् वा स्यात् ।

२२८४ । अतो हलादेर्लघोः । (७. २. ७)

हलादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् । अस्वादीत् अस्वदीत् । बद स्थैर्ये । अबादीत् अबदीत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1041. **अरासिषुः** रसिताः । रसेःपरस्मैपदिनो लुङ्, न रासेः, तस्यात्मनेपदित्वात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1971. अन्धकारप्रतानानि**प्रो** विस्तारितवन्तौ । वृद्धिः ।

२२८५ । **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहति-शाम्यतिचिनोतिदेग्धिषु च** । (८. ४. १७)

उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु । प्रणिगदति ।

भट्टिकाव्ये—IX. 99.

**प्रण्यगादीत् प्रणिघ्नन्तं** पुनः **प्रणिनदन्निव** ।
ततः **प्रणिहितः** स्वार्थे राक्षसेन्द्रं विभीषणः ॥ 1999 ॥

**प्रणिघ्नन्तं** रावणं **प्रणिहितः** विभीषणः **प्रणिनदन्निव प्रण्यगादीत्** । सर्वत्र णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1960. हे दशग्रीव ! **प्रणिशाम्य** प्रशान्तो भव । रूपं **प्रणियातुमलम्** । सर्वत्र णत्वम् ॥

माघे—XI. 1.

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम् ।
**प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः**
**परिणतिमिति** रात्रेर्मागधा माधवाय ॥ 2000 ॥

मागधा माधवाय रात्रेः **परिणतिम्** । प्रभातमित्यर्थः । **प्रणिजगदुः** ।

अस्मिन्नेव ग्रन्थे श्लो० 1048. **प्रणिगदन्तः** ।

अस्मिन्नेव ग्रन्थे श्लो० 1224. **प्रणिपातः** प्रणतिः ।

अस्मिन्नेव ग्रन्थे श्लो० 494. अन्यद्विषन्ने **प्रणिहन्मि** । अन्यनिद्विषं त्वां हन्मीत्यर्थः । 'जासिनिप्रहण' (सू. 617) इति कर्मणि शेषे षष्ठी । अनेन नेर्णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 493. रामो राक्षसानां प्रणिहनिष्यति । पूर्ववत्षष्ठी । णत्वम् ।

२२८७ । उपसर्गादसमासेऽपि णोपदेशस्य । ( ८. ४. १४ )

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि ।

नैषधे—IV. 118.

द्रुतविगमितविप्रयोगचिह्णा-
मपि तनयां नृपतिः पदप्रणम्राम् ।
अकलयदसमाशुगाधिमग्नां
झटिति पराशयवेदिनो हि विज्ञाः ॥ 2001 ॥

**पदप्रणम्रां** पादपतिताम् । नमतेः णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 637. **परिणायकस्य** परिणेतुः । नयतेर्ण्वुल् । णत्वम् ।

माघे—IX. 71.

निपपात सम्भ्रमभृतः श्रवणादसितभ्रुवः प्रणदितालिकुलम् ।
दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वारिरुहम् ॥ 2002 ॥

**प्रणदितं** कूजत् । **प्रणुन्नं** प्रेरितम् । उभयत्र णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 55. तिथीः शुक्लकृष्णपक्षतिथीः प्रणयति प्रवर्तयतीति **तिथिप्रणीः** चन्द्रः । 'सत्सू' ( सू. 2975 ) इति क्विप् । अनेन णत्वम् ।

भट्टिकाव्ये—IX. 134.

**प्रणश्यन्नपि** नाशक्नोदत्येतुं बाणगोचरम् ।
त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ 2003 ॥

**प्रणश्यन् ।**

**२२९१ । जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । ( ३. १. ५८ )**

... [illegible] वा स्यात् । अग्रुचत् अग्रोचीत् । अम्लुचत् अम्लोचीत् । अगुचत् अगोचीत् । अम्लुञ्चत् अम्लोचीत् ।

भट्टिकाव्ये — XV. 50.

> उदरे चाजरन्नन्ये तस्य पातालसंनिभे ।
> आकर्णमुग्रसर्वांगान् प्रपलायितुमिच्छतः ॥ 2004 ॥

अन्ये तस्योदरे अजरन् जीर्णाः । अङ् ।

भट्टिकाव्ये — VI. 30.

> मन्युर्मन्ये ममास्तम्भीद्विषादोऽस्तभद्ध्वनिम् ।
> अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत् ॥ 2005 ॥

मम शोकः **अस्तम्भीत्** स्तब्धोऽभूत् । अङभावे रूपम् । विषादः ध्वनि-**मस्तभत्** स्तम्भ । अङ्पक्षेऽनुनासिकलोपः । प्रज्ञा **अजारीदिव** जीर्णेव । अङभावे सिचिवृद्धिरुसलोपश्च । बलं **चाजरत्** जीर्णम् । अङ् ।

भट्टिकाव्ये—VI. 31.

> गृध्रस्येहाश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण ।
> जिघत्सोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ 2006 ॥

गृध्रस्य पक्षौ **अश्वतां** शूनौ । श्वयतेर्लुङ्यङ् ।

भट्टिकाव्ये—XV. 80.

> मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वियत् ।
> बहूनामग्लुचत्प्राणानग्लोचीच्च रणे यशः ॥ 2007 ॥

वनवासिनां मांसेनास्य कुक्षी **अश्वताम्** शूनौ । अङ् । बहूनां प्राणानग्लुचत् हतवान् । ग्रुचुग्लुचुकुजुखुजु स्तेयकरणे अङ् । यशश्चाग्लोचीत् । अङभावपक्षे रूपम् ।

## २२९२ । अजेर्व्यघञपोः । ( २. ४. ५६ )

अजेर्वी इत्यादेशः । विवाय विव्यतुः विव्युः ।

## २२९८ । अकृत्सार्वधातुकयोर्दीर्घः । (७. ४. २५)

अजन्तस्याङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे, न तु कृत्सार्वधातुकयोः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1705. पतीयन्ती पतिमात्मन इच्छन्ती । 'सुप आत्मनः क्यच्' (सू. 2657) इति क्यचि अनेन दीर्घः । शतरि ङीप् ।

भट्टिकाव्ये—V. 73.

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का ।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥ 2008 ॥

वल्गूयति मन्तूयति ।

## २३०१ । तॄफलभजत्रपश्च । (६. ४. १२२)

एषामत एकारोऽभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च ।

अस्मिन्नेव ग्रन्थे श्लो॰ 387. त्रेपे लज्जितम् । भावे लिट् । एत्त्वाभ्यासलोपौ ।

भट्टिकाव्ये—XIV. 27.

सम्बभूवुः कबन्धानि प्रोहुश्शोणिततोयगाः ।
तेरुर्भटास्यपद्मानि ध्वजैः फेनैरिवाबभे ॥ 2009 ॥

आस्यपद्मानि तेरुः प्लुतानि । एत्त्वाभ्यासलोपौ ।

भट्टिकाव्ये—VII. 55.

भ्रेमुश्शिलोच्चयान्भीमांस्ते तेरुस्तरान्नदान् ।
आशंसवो लवं शत्रोस्सीतायाश्च विनिश्चयम् ॥ 2010 ॥

नदांस्तेरुः ।

भट्टिकाव्ये—XIV. 57.

उत्तेरिथ समुद्रं त्वं मदर्थेऽरीन् जिहिंसिथ ।
ममर्थ चातिघोरां मां धिग्जीवितलघूकृताम् ॥ 2011 ॥

समुद्रमुत्तेरिथ उत्तीर्णोऽसि । एत्त्वाभ्यासलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1376. राघवौ वनानि भेजतुः प्रापतुः । भजेर्लिट् । एत्वाभ्यासलोपौ ।

२३०३ । गुपूधूपविच्छिपणिपनिभ्य आयः । ( ३.१.२८ )

एभ्य आयप्रत्ययः स्यात्स्वार्थे ।

२३०४ । सनाद्यन्ता धातवः । ( ३. १. ३२ )

सनादयः कमेर्णिङन्ताः प्रत्ययाः अन्ते येषां ते धातुसंज्ञाः स्युः । गोपायति ।

किरातार्जुनीये—XVIII. 18.

आसेदुषां गोत्रभिदोऽनुवृत्त्या **गोपायकानां** भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैर्द्यौराचिता तारकितेव रेजे ॥ 2012 ॥

भुवनत्रयस्य **गोपायकानां** रक्षकानाम् । आयप्रत्ययान्ताण्ण्वुल् ।

माघे—IV. 52.

आच्छाद्य पुष्पपटमेष महान्तमन्त-
रावर्तिभिर्गृहकपोतशिरोधराभैः ।
स्वाङ्गानि धूमरुचमागुरवीं दधानै-
**र्धूपायतीव** पटलैर्नवनीरदानाम् ॥ 2013 ॥

एषोऽद्रिर्नीरदपटलैः स्वाङ्गानि धूपायतीव धूपैरभिवासयतीव । धूप सन्तापे इति धातोरायप्रत्ययः ।

२३०६ । कास्प्रत्ययादाममन्त्रे लिटि । ( ३. १. ३५ )

इत्याम्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 328. रावणः **कासाञ्चक्रे** कुत्सितमभिहितवान् । कासृ शब्दकुत्सायां इत्यस्मात् लिटि आम् । खगः तं **बेभिदाञ्चक्रे** अत्यर्थं भिन्नवान् । बेभिद्यतेर्यङन्तात् आम् ।

वा० । कास्यनेकाज्ग्रहणं कर्तव्यम् ।

भट्टिकाव्ये—XIV. 19.

चकासाञ्चक्रुरुत्तस्थुर्नेदुरानशिरे दिशः ।
वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्तरून् ॥ 2014 ॥

ते चकासाञ्चक्रुः शोभन्ते स्म ।

भट्टिकाव्ये—V. 107.

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः ।
भल्लेन पक्षौ लोलूयाञ्चक्रे क्रव्यात्पतत्रिणः ॥ 2015 ॥

क्रव्यात् राक्षसः भल्लेन पतत्रिणः पक्षौ लोलूयाञ्चक्रे भृशं लुलाव । लुनातेर्यङन्ताल्लिट्याम् ।

भट्टिकाव्ये—XIV. 12.

वि शिश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः ।
आज घ्रुर्मूर्ध्नि बालांश्च चुचुम्बुश्च सुतप्रियाः ॥ 2016 ॥

विशिश्वासयिषाञ्चक्रुः विश्वासयितुमिष्टवन्तः । ण्यन्तात्सन् । तस्माल्लिट्याम् ।

भट्टिकाव्ये—XIV. 91.

ऊहिरे मूर्ध्नि सिद्धार्था गावश्चालेभिरे भटैः ।
प्रचुक्ष्णुवुर्महास्त्राणि जिज्ञासाञ्चक्रिरे हयान् ॥ 2017 ॥

भटा हयान् जिज्ञासाञ्चक्रिरे ज्ञातुमिच्छां कृतवन्तः । 'ज्ञाश्रुस्मृदृशां सनः' (सू. 2731) इत्यात्मनेपदम् । 'कृञ्चानुप्रयुज्यते लिटि' (सू. 2239) इत्यनुप्रयोगः । 'आम्प्रत्ययवत्' (सू. 2240) इति पूर्ववदात्मनेपदम् ।

भट्टिकाव्ये—XIV. 53.

ध्वजानुद्दुधुवुस्तुञ्जान्मांसं चेमुर्जुगुः पपुः ।
कामयाञ्चक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥ 2018 ॥

निशाचराः कान्ताः कामयाञ्चक्रिरे । कमेर्णिङ् । कामयतेर्लिट्याम् । पूर्ववदनुप्रयोगः ।

भट्टिकाव्ये—XIV. 87.

स त्रिश्चेय प्रचुक्षोद दन्तैरोष्ठं चखाद च ।
प्रगोपायाञ्चकाराशु यत्नेन परितः पुरम् ॥ 2019 ॥

स राजा पुरं लङ्कां प्रगोपायाञ्चकार रक्षितवान् । गुपू रक्षणे आयप्रत्ययान्तादाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1705. शूर्पणखा लक्ष्मणं प्राप्य प्रार्थयाञ्चक्रे प्रार्थितवती । प्रार्थयतेर्णिच् । आत्मनेपदम् । अनुप्रयोगस्याप्यात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 253. पक्षी अरिं सन्त्रासयाञ्चकार भीषयाञ्चक्रे । संत्रासयति इति परस्मैपदम् । अतोऽनुप्रयुक्तोऽपि परस्मैपदम् ।

२३१२ । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । (३. १. ४८)

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे ।

भट्टिकाव्ये—XV. 87.

अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुपत् ।
अशिक्षिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ 2020 ॥

वज्रमतस्तम्भत् स्तम्भितवान् । स्तम्भेर्ण्यन्ताच्चङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1434. मुनिमभि न्यवीविशत् स्वाभिमुख्येनोपवेशितवान् । विशतेर्णौ चङ् ।

माघे—I. 16.

महामहानीलशिलारुचः पुरो निषेदिवान्कंसकृषस्य विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ 2021 ॥

अभिरामतामचूचुरत् चोरितवान् । चुर स्तेये इत्यस्मात् स्वार्थे ण्यन्ताच्चङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 984. आदिपूरुषो नारदं पर्यपूपुजत् परिपूजितवान् । णौ चङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 616. सः याममशिश्रियत् । श्रयतेर्लुङ् । चङि द्विर्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1331. तौ क्ष्मामाशिश्रियताम् आश्रितवन्तौ । चङ् ॥

भट्टिकाव्ये—VI. 17.

मा स्म द्राक्षीर्मृषा दोषं भक्तं मां मातिचिक्लिशः ।
शैलं न्वशिश्रियद्रामा नदीं नु प्रत्यदुद्रुवत् ॥ 2022 ॥

भक्तं मां मातिचिक्लिशः नातिक्लेशय । क्लिशेर्ण्यन्तात् सिपि चङ् । 'स्मोत्तरे लङ् च' (सू. 2220) इति चकाराल्लुङ् । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः । अशिश्रियत् आश्रिता । प्रत्यदुद्रुवत् प्रतिगता । पूर्ववत् चङ् ।

भट्टिकाव्ये—XV. 79.

तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्रादुद्रुवंस्ततः क्रुद्धास्सर्वे रावणयोऽङ्गदम् ॥ 2023 ॥

सर्वे रावणयो रावणस्यापत्यानि अङ्गदं प्रादुद्रुवन् गतवन्तः । चङ् ।

भट्टिकाव्ये—XV. 56.

अलोठिष्ट च भूपृष्ठे शोणितञ्चाप्यसुस्रुवत् ।
तमादायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ 2024 ॥

शोणितं स्रुतम् । चङ् ।

## २३१४ । णौ चङ्युपधाया ह्रस्वः । (७. ४. १)

## २३१७ । सन्यतः । (७. ४. ७९)

अभ्यासस्यात इकारस्यात्सनि ।

माघे—XX. 28.

स दिवं समचिच्छदच्छरौघैः कृततिग्मद्युतिमण्डलापलापैः ।
ददृशेऽथ च तस्य चापयष्ट्यामिषुरेकैव जनैस्सकृद्विसृष्टा ॥ 2025 ॥

दिवं समचिच्छदन् छादयन्ति स्म । छदेर्णौ चङ्युपधाया ह्रस्वः । सन्वद्भावादनेनाभ्यासस्येत्वम् ।

भट्टिकाव्ये— XV. 3.

केशानलुञ्चन्नुन्नस्य गजानङ्गेष्वचिक्रमन् ।
शीतैरभ्यषिचंस्तोयैरम्लानैश्चाप्यदन्दशुः ॥ 2026 ॥

गजानचिक्रमन् क्रमयन्ति स्म । चङि सन्वद्भावादभ्यासस्येत्वम् ।

२३२० । ष्ठिवुक्लमुचमां शिति । (७. ३. ७५)

एषामचो दीर्घः स्याच्छिति ।

वा० । आङि चम इति वक्तव्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 475. वाजिकुञ्जरं रक्तमग्रीवन् । अक्लाम्यन् । अनेन दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 70. हविर्भिताभिराचामति । दीर्घः ।

२३२१ । वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । (३. १. ७०)

एभ्यः श्यन्वा स्यात् कर्त्रर्थे सार्वधातुके परे ।

२३२२ । क्रमः परस्मैपदेषु । (७. ३. ७६)

क्रमेर्दीर्घः स्यात् परस्मैपदपरे शिति ।

माघे—I. 54.

बृहच्छिलानिष्ठुरकण्ठघट्टना-
द्विकीर्णलोलाग्निकणं सुरद्विपः ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं
न चक्रमस्याक्रमताधिकन्धरम् ॥ 2027 ॥

अस्याधिकन्धरं चक्रं नाक्रमत । आत्मनेपदम् वृत्तौ । अतो न दीर्घः ।

भट्टिकाव्ये—XVII. 34.

अधर्मान्नात्रसः पाप लोकवादान्न चाबिभेः ।
धर्मदूषण नूनं त्वं नाजाना नाशृणोरिदम् ॥ 2028 ॥

अधर्मान्नात्रसः न त्रस्तोऽसि । पक्षे शप् ।

अस्मिन्नेव ग्रन्थे श्लो० 210. त्रस्यन्ती बिभ्यती । विकल्पेन श्यनि शतरि ङीप् ।

भट्टिकाव्ये—XVII. 5.

अपूजयंश्चतुर्वक्त्रं विप्रानार्चंस्तथास्तुवन् ।
समालिपत शक्रारिर्यानञ्चाश्यलपद्वरम् ॥ 2029 ॥

यानमश्यलपदभीष्टवान् । श्यनो विकल्पितत्वात्पक्षे शप् ।

भट्टिकाव्ये—XVII. 77.

अश्च्योतद्रुधिरं तोयमलषच्चातिविह्वलम् ।
अशीयत नृमांसादां बलं सुग्रीवबाधितम् ॥ 2030 ॥

तोयमलषदभिलपितवत् । विकल्पेन शप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1801. अभिलष्यन्ती । श्यन् ।

चम्पूभारते—I. 83.

तीव्रोदयादविनयान् दधतां क्रमेण
दुर्योधनाद्यसुहृदां दुरहङ्कृतीनाम् ।
पट्टाभिषेकमभिलष्यति कालदेशो
कुट्टाकभावकुतुकं कुरुते स भीमः ॥ 2031 ॥

अभिलष्यति । लष कान्तौ । श्यनि शत्रादेशः ।

२३२२ । क्रमः परस्मैपदेषु । (७. ३. ७६)

क्रमेर्दीर्घः स्यात् परस्मैपदपरे शिति । क्राम्यति क्रामति ।

## २३२३ । स्नुक्रमोरनात्मनेपदनिमित्ते (७. २. ३६)

अत्रेवेट् । अक्रमीत् । 'वृत्तिसर्ग' (सू. 2711) इति आत्मनेपदं नित्यमेव । 'अनुपसर्गाद्वा' (सू. 2716) क्रामति क्रमते ।

अस्मिन्नेव ग्रन्थे श्लो० 63. चिक्रिमिषया क्रमितुमिच्छया । क्रमेस्सन्नन्तात् 'अ प्रत्ययात्' (सू. 3279) इत्यकारप्रत्यये टाप् । अनेन इडागमो न । वृत्त्यादिष्वर्थनिरिक्तार्थेऽपि 'अनुपसर्गाद्वा' (सू. 2716) इत्यात्मनेपदम् । अनात्मनेपदनिमित्त इति निषेधाद्नेट् ।

## २३२४ । दयायासश्च । (३. १. ३७)

दय अय आस् एभ्य आम् स्याल्लिटि ।

भट्टिकाव्ये—XIV. 42.

> राघवो न दयाञ्चक्रे दधुर्धैर्यं न केचन ।
> मम्रे पतङ्गवद्रौद्रे हेति च विचुक्रुशे ॥ 2032 ॥

राघवो न दयाञ्चक्रे । आम्प्रत्ययः ।

भट्टिकाव्ये—V. 106.

> हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।
> न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥ 2033 ॥

न दयांचक्रे नानुचकम्पे । विः पक्षी न पलायाञ्चक्रे न पलायितः ।

## २३२६ । उपसर्गस्यायतौ । (८. २. १९)

अयतिपरस्य उपसर्गस्य यो रेफः तस्य लत्वम् । दयतेरयतेश्च लिट्याम् ।

भट्टिकाव्ये—XIV. 41.

> कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे ।
> पलायाञ्चक्रिरे शेषा जिह्रियुः शूरमानिनः ॥ 2034 ॥

पलायाञ्चक्रिरे शेषाः । पूर्ववत् ।

माघे—III. 67.

निरन्तरालेऽपि विमुच्यमाने दूरं पथि प्राणभृतां गणेन ।
तेजोमहद्भिस्तमसेव दीपैर्द्विपैरसम्बाधमयाम्बभूवे ॥ 2035 ॥

द्विपैरयाम्बभूवे गतम् । भावे लिट् । आम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2015. देवगन्धर्वकिन्नरा उपासाञ्चक्रिरे । समीपे स्थिता इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 852. मृगपक्षिण आसाञ्चक्रिरे आसितवन्तः । आम् ।

अस्मिन्नेव ग्रन्थे श्लो० 613. मैथिली दशाननमुक्त्वा तूष्णीम् आसाञ्चक्रे ओपमास्त । आम् ।

अस्मिन्नेव ग्रन्थे श्लो० 273. अमी हेमपीठानि अध्यासामासुः अधितस्थुः । 'अधिशीङ्' (सू. 542) इति कर्मत्वम् । आस उपवेशने इत्यस्मात् लिट् । अनेन आम्प्रत्यये 'कृञ् च' (सू. 2239) इत्यस्तेरनुपयोगः । 'आम्प्रत्ययवत्' (सू. 2240) इति कृञ एवेति नियमात् अस्तेर्नात्मनेपदम् ।

२३२८ । दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । (३. १. ६१)

एभ्यश्च्लेश्चिण् वा स्यात् ।

भट्टिकाव्ये—XV. 67.

वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत्सहायुधम् ।
अदीपि तद्दस्तोऽसावधावीच्चारिसंमुखम् ॥ 2036 ॥

असावदीपि दीप्यते स्म । कर्तरि चिण् । 'चिणो लुक्' (सू. 2329) इति लुक् ।

भट्टिकाव्ये—XV. 88.

अध्यगीष्टार्थशास्त्राणि यमस्याह्वोष्ट विक्रमम् ।
देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥ 2037 ॥

यमस्याप्ययं विक्रममह्नोष्ट । अदीपिष्ट शोभितः । मयं नाज्ञानिष्ट न ज्ञातम् । चिण्वद्भावपक्षे रूपम् ।

भट्टिकाव्ये—VI. 32.

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात् ।
अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥ 2038 ॥

रामोऽदीपि दिदीपे । रक्तनेत्रोऽजनि जातः । त्रैलोक्यं दुःस्थमबोधि बुद्धवान् । दीप्तैस्तेजोभिर्हेतुभिरापूरि । सर्वत्र कर्तरि लुङ् चिण् । 'चिणो लुक्' (सू. 2329) इति लुक् ।

भट्टिकाव्ये—XV. 100.

विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ ।
अपारीत्स गृहीतोल्को हतशेषान्प्लवङ्गमान् ॥ 2039 ॥

विभीषणो रामलक्ष्मणौ चलन्तावबोधि । चिण् । 'चिणो लुक्' (सू. 2329) इति तशब्दस्य लुक् ।

भट्टिकाव्ये—XV. 101.

मा शोचिष्ट रघुव्याघ्रौ नामूषातामिति ब्रुवन् ।
अबाबुद्ध स नीलादीन्निहतान् कपियूथपान् ॥ 2040 ॥

अबाबुद्ध अवबुद्धवान् । चिणभावपक्षे रूपम् ।

माघे—XVI. 36.

यदपूरि पुरा महीपतिर्न मुखेन स्वयमागसां शतम् ।
अथ संप्रति पर्यपूपुरत्तदसौ दूतमुखेन शार्ङ्गिणः ॥ 2041 ॥

नापूरि । पूरयतेः कर्तरि लुङ् । चिणि तशब्दस्य लुक् ।

भट्टिकाव्ये—XV. 123.

समगतकपिसैन्यं संमदेनातिमात्रं
विटपहरिणनाथस्सिद्धिमौहिष्ट नित्याम् ।

नृपतिमतिररंस्त प्राप्तकामेव हर्षात्
रजनिचरपतीनां सन्ततोऽतायि शोकः ॥ 2042 ॥

शोकः सन्ततोऽतायि वर्धते स्म । कर्तरि चिण् ।

२३३१ । सन्लिटोर्जेः । (७. ३. ५७)

इति कुत्वम् ।

भट्टिकाव्ये——IX. 70.

बलान्यभिषिषिक्षन्त तरुभिः कपिवारिदम् ।
विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित् ॥ 2043 ॥

कपिवारिदं विजिगीषुः । जयतेस्सनि कुत्वम् ।

नैषधे—IV. 1.

अथ नलस्य गुणं गुणमात्मभूः
सुरभि तस्य यशःकुसुमं धनुः ।
श्रुतिपथोपगतं सुमनस्तया
तमिषुमाशु विधाय जिगाय ताम् ॥ 2044 ॥

कामो भैमीं जिगाय । लिटि कुत्वम् ।

भट्टिकाव्ये—XIV. 106.

एवं विजिग्ये तां सेनां प्रहस्तोऽतिदुदर्प च ।
शशाम न च संक्रुद्धो निर्जुगोप निशाचरान् ॥ 2045 ॥

प्रहस्तस्तां विजिग्ये जितवान् । 'विपराभ्यां जेः' (सू. 2685) इति तङ् । अनेन कुत्वम् ।

भट्टिकाव्ये—XIV. 46.

आचिचाय स तैस्सेनामाचिकाय च राघवौ ।
बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः ॥ 2046 ॥

मम मायामिन्द्रोऽपि न जिगाय । कुत्वम् ।

माघे—XIX. 82.

युद्धमित्थं विधूतान्यमानवानभियो गतः ।
चैद्यः परान्पराजिग्ये मानवानभियोगतः ॥ 2047 ॥

चैद्यः परान् पराजिग्ये जिगाय । 'विपराभ्याम्' (सू. 2685) इति तङ् । लिटि कुत्वम् ।

२३३६ । शल इगुपधादनिटः क्सः । (३. १. ४५)

इगुपधो यः शलन्तः तस्मादनिटः च्लेः क्सादेशः स्यात् । अधुक्षत ।

भट्टिकाव्ये—XV. 8.

अतुषत्पीठमासन्नं निरदिक्षच्च काञ्चनम् ।
अस्मेष्ट कुम्भकर्णोऽल्पमुपाविक्षदथान्तिके ॥ 2048 ॥

पीठं निरदिक्षत् आदिष्टवान् । दिशेः क्सः । पीठे उपाविक्षत उपविष्टः । विशतेः क्सः ।

अस्मिन्नेव ग्रन्थे श्लो० 412. प्रिये आत्मानं पत्युर्मे । सम्बन्धसामान्ये षष्ठी । मा घुक्षः मा संवृणु । गुहू संवरणे । लुङ् । क्सादेशः ।

२३४० । तीषसहलुभरुषरिषः । (७. २. ४८)

इड्वा स्यात् ।

माघे—I. 53.

अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥2049॥

सोढुं । नेट् ।

किरातार्जुनीये—VI. 37.

विगणय्य कारणमनेकगुणं
निजयाथवा कथितमल्पतया ।

असदृश्यदः सहितुमर्हसि नः
क्व वनेचराः क्व निपुणा मतयः ॥ 2050 ॥

सहितुं सोढुम् । अनेनेडागमः ।

२३४१ । उषविदजागृभ्योऽन्यतरस्याम् । (३. १. ३८)

एभ्यो लिट्याम्वा स्यात् ।

भट्टिकाव्ये—VI. 1.

ओषांचकार कामाग्निर्दशवक्त्रमहर्निशम् ।
विदांचकार वैदेहीं रामादन्यनिरुत्सुकाम् ॥ 2051 ॥

कामाग्निर्दशवक्त्रमोषाञ्चकार ददाह । रावणः वैदेहीं रामादन्यनिरुत्सुकां विदांचकार विवेद । उष दाहे परस्मैपदम् । विद ज्ञाने परस्मैपदम् । अतः 'आम्प्रत्ययवत्' (सू. 2240) इत्यनुप्रयोगः ।

भट्टिकाव्ये—VI. 2.

प्रजागरांचकारारेरीहाखनिशमादरात् ।
विभयां प्रचकारागो काकुत्स्थादभिशङ्कितः ॥ 2052 ॥

प्रजागरांचकार अप्रमत्तः स्थितः ।

अस्मिन्नेव ग्रन्थे श्लो० 1597. जातवेदा विश्वमुवोष ददाह । आम् न ।

भट्टिकाव्ये—XIV. 62.

विचेत राम्स्तत्कृच्छ्मोषाञ्चक्रे शुचाथ सः ।
मन्युश्चास्य समाविव्ये विरुराव च लक्ष्मणम् ॥ 2053 ॥

शुचा ओषांचक्रे दग्धः । कर्मणि लिट् । आम्प्रत्ययः । पूर्ववदनुप्रयोगः ।

किरातार्जुनीये—VII. 36.

अगूढहासस्फुटदन्तकेसरं
मुखं स्विदेतद्विकसन्नु पङ्कजम् ।

इति प्रलीनां नलिनीवने सखीं
विदाम्बभूवुस्सुचिरेण योषितः ॥ 2054 ॥

योषितः सखीं विदाम्बभूवुः । आम् । 'कृञ् च' (सू. 2230) इति कृभ्वस्तयोऽनुप्रयुज्यन्ते । 'आम्प्रत्ययवत्' (सू. 2240) इति कृञ एवात्मनेपदस्य नियमः । भ्वस्त्योर्न नियमः ।

२३४३ । पुषादिद्युताद्यॢदितः परस्मैपदेषु । (३. १. ५५)

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु ।

किरातार्जुनीये—XI. 20.

मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः ।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ 2055 ॥

त्वमर्थकामौ मा स्म पुषः । 'स्मोत्तरे लङ् च' (सू. 2220) इति चकाराल्लुङ् । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1971. तौ सौमित्र्यतिकायौ नाश्रमताम् न श्रान्तौ । श्रमिः पुषादिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2004. अश्विदन् प्रश्विन्नाः । पुषादित्वादङ् ।

भट्टिकाव्ये—VI. 26.

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः ।
अद्युतच्चेन्दुना सार्धं तां प्रब्रूत गता यतः ॥ 2056 ॥

हे पक्षिमृगशावकाः ! या सीता युष्मान् स्वेन धनेन पुष्ट्वा स्वपोषं 'स्वे पुषः' (सू. 3361) इति णमुल् अपुषत् । कषादित्वादनुप्रयोगः । पुषादित्वादङ् । इन्दुना सार्धमद्युतत् । इन्दुसाम्येन व्यद्योतिष्टेत्यर्थः । 'द्युद्भ्यो लुङि' (सू. 2345) इति विकल्पात्परस्मैपदम् । द्युतादित्वादङ् ।

भट्टिकाव्ये—VIII. 66.

अस्यदन्निन्दुमणयो व्यरुचन्कुमुदाकराः ।
अलोठिषत वातेन प्रकीर्णाः स्तबकोच्चयाः ॥ 2057 ॥

इन्दुमणयः अस्यदन् प्रसुस्रुवुः । कुमुदाकरा व्यरुचन् विचकसुरित्यर्थः । द्युतादित्वादङ् । स्तबकोच्चया अलोठिषत लुठन्ति स्म । 'द्युद्भ्यो लुङि' (सू. 2345) इति परस्मैपदविकल्पातङ् । अतोऽङ् न ।

भट्टिकाव्ये—I. 18.

> गेयी: पुनर्जन्म जयाय यस्वं
> रूपादिबोधान्न्यवृतच्च यत्ते ।
> तत्त्वान्यबुद्धाः प्रतनूनि येन
> ध्यानं नृपस्तच्छिवमित्यवादीत् ॥ 2058 ॥

यद्ध्यानं रूपादिबोधात् न्यवृतत् न्यवर्तिष्ट । 'द्युद्भ्यो लुङि' (सू. 2345) इति विकल्पात्परस्मैपदम् । द्युतादित्वादङ् ।

रघुवंशे—VI. 5.

> तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
> सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ 2059 ॥

व्यरुचत् व्यद्योतिष्ट । 'द्युद्भ्यो लुङि' (सू. 2345) इति विकल्पात्परस्मैपदम् । द्युतादित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 695. उपागमत् । लृदित्वादङ् ।

भट्टिकाव्ये—XV. 22.

> मूर्ध्ना दिवमिवालेखीत् खं व्यापद्वपुषोरुणा ।
> पादाभ्यां क्ष्मामिवामैत्सीत् दष्ट्याधाक्षीदिव द्विपः ॥ 2060 ॥

खं व्यापत् व्याप्तवान् । लृदित्वादङ् ।

भट्टिकाव्ये—XV. 7.

> व्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतद् गृहात् ।
> राजा यान्नं तमद्राक्षीदुदस्थाच्चैषदासनात ॥ 2061 ॥

प्रावृतत् प्रवृत्तः । 'द्युद्भ्यो लुङि' (सू. 2345) परस्मैपदम् । द्युतादित्वादङ् ।

भट्टिकाव्ये---XV. 16.

राघवस्यामुषः कान्तामागमस्तो न चार्दिषः ।
मा नानुभूः स्वकान् दोषान् मा मुहो मा रुषो गुणान् ॥ 2062 ॥

राघवस्य कान्तामसुषः [illegible] । [illegible] इदं यद्धर्तो नियोजनम् । मुष खण्डने । पुषादित्वादङ् । स्वकान् दोषान्मा नानुभूः । मा मुहः मोहं मा गमः । मा रुषः रोषं मा कार्षीः । मुहिरुषिभ्यां पुषादित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 240. गिरिमन्वसृपत् लक्षीकृत्य गतः । ऌदित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1534. रामः क्रियां **नामुचत्** न त्यक्तवान् । मुचेर्ऌदनुबन्धत्वादङ् ।

भट्टिकाव्ये---XV. 25.

अनंसीद्भूर्भरेणास्य रंहसा शाखिनोऽलुठन् ।
सिंहाः प्रादुद्रुवन्भीताः **प्राक्षुभन्** कुलपर्वताः ॥ 2063 ॥

शाखिनोऽलुठन् पतिताः । रुठ लुठ प्रतिघाते । द्युतादित्वादङ् । 'द्युद्भ्यो लुङि' (सू. 2345 ; इति परस्मैपदविकल्पः । कुलपर्वताः **प्राक्षुभन्** सञ्चलिताः । द्युतादित्वादङ् ।

भट्टिकाव्ये---XV. 27.

अस्पन्दिष्टाक्षि वामञ्च घोराश्चाराटिषुश्शिवाः ।
**न्यपप्तन्मुसले** गृध्रा दीप्तयापाति चोल्कया ॥ 2064 ॥

गृध्रा **न्यपप्तन्** उपविष्टवन्तः । ऌदित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1836. कथं वा त्वां **नावसन्** न भक्षितवन्तः । 'लुङ्सनोर्घस्ऌ' (सू. 2427) इत्यदेर्घस्ऌ । ऌदित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1817. अपुपत्स्वपोषम् । 'स्वे पुषः' (सू. 3361) इति णमुल् । 'अमैवाव्ययेन' (सू. 783) इति समासः । यथाविध्यनुप्रयोगः । पुषादित्वादङ् ।

## २३४५ । द्युद्भ्यो लुङि । (१. ३. ९१)

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादिसूत्रेण परस्मैपदेऽङ् । अद्युतत् अद्योतिष्ट । द्युतादिः—७. ४१.

अस्मिन्नेव ग्रन्थे श्लो० 2056. या सीता युष्मान् स्वेन धनेन पुष्ट्वा स्वपोषम् (णमुल्) अपुपत् । कषादित्वादनुप्रयोगः । पुषादित्वादङ् । इन्दुना सार्धमद्युतत् । विकल्पात्परस्मैपदम् । द्युतादित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1973. रणे शस्त्रैर्व्यद्योतिष्ट द्योतितवान् । विकल्पेन परस्मैपदविधानादात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 71. असौ नरशिखित्रयी सभावेद्यां व्यद्योतिष्ट दीप्यते स्म । पूर्ववत् ।

माघे—V. 21.

छायाविधायिभिरनुज्झितभूतिशोभै-
रुच्छ्रायिभिर्बहलपाटलधातुरागैः ।
दूष्यैरिव क्षितिभृतां द्विरदैरुदार-
तारावलीविरचनैर्व्यरुचन्निवासाः ॥ 2065 ॥

निवासा दूष्यैर्व्यरुचन् रोचन्ते स्म । रुच दीप्तौ । विकल्पाल्लुङि परस्मैपदम् । अङ् ।

माघे—XV. 7.

कनकाङ्गदद्युतिभिरस्य गमितमरुचत्पिशङ्गताम् ।
क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥ 2066 ॥

चैद्यस्य बाहुमण्डलं क्रोधमयशिखिशिखापटलैः परीतमिवारुचत् । विकल्पात्परस्मैपदम् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2059. अरुचत् । परस्मैपदम् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2061. गृहात्प्राघुतत् प्रवृत्तः । विकल्पात्परस्मैपदम् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2058. न्यवृतत् निवृत्तम् । वृतेर्द्युतादित्वात् विकल्पाल्लुङि परस्मैपदम् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2057. अस्यदच्छिन्दमानो व्यक्रन्दन्कुसुमाकराः । द्युतादित्वात्परस्मैपदम् । अङ् । स्तबकौघाया अश्लोठिपत कुर्वन्ति स्म । नङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2063. वृक्षा अलुठन् पतिताः । कुल्यपर्वताः प्राक्षुभन् सस्खलिताः । द्युतादित्वादङ् । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2024. अलोठिष्ट लुठने स्म । द्युतादिः । परस्मैपद-विकल्पेनात्मनेपदम् । नाङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1457. धैर्यं नाभ्रमन् न ध्वस्तमभूत् । द्युतादित्वात्परस्मैपदम् । अङ् ।

२३४७ । वृद्भ्यः स्यसनोः । ( १. ३. ९२ )

वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च ।

२३४८ । न वृद्भ्यश्चतुर्भ्यः । ( ७. २. ५९ )

भट्टिकाव्ये— VIII. 67.

सीतान्तिके विवृत्सन्तं वर्त्स्यन्निसिद्धि प्लवङ्गमम् ।
पतत्त्रिणः शुभा मन्द्रमानुवानास्त्ववजिह्लदन् ॥ 2067 ॥

सीतान्तिके विवृत्सन्तं वर्तितुमिच्छन्तम् । वृतु वर्तने इति धातोस्सन्नन्ताल्लटः शत्रादेशः । वर्त्स्यत्सिद्धिं वर्तिष्यमाणसिद्धिम् । 'वृद्भ्यः स्यसनोः' (सू. 2347) इत्युभयत्र विकल्पात्परस्मैपदम् । अनेनेट्प्रतिषेधः ।

भट्टिकाव्ये— VIII. 68.

वर्तिष्यमाणमात्मानं सीतापत्युरिवान्तिके ।
उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ 2068 ॥

सीता आत्मानं पत्युरन्तिके वर्तिष्यमाणमिव । 'वृद्भ्यः स्यसनोः' (सू. 2347) इति परस्मैपदविकल्पादात्मनेपदम् । इट्प्रतिषेधो न ।

भट्टिकाव्ये— VIII. 69.

निरवर्त्स्यन्न चेद्वार्ता सीताया वितथैव नः ।
अकल्प्स्यदुद्यतिस्सर्वा हनूमानित्यचिन्तयत् ॥ 2069 ॥

सीताया वार्तां न निरवर्त्स्यच्चेत् । विकल्पात्परस्मैपदम् । इट्प्रतिषेधः ।

भट्टिकाव्ये—XVI. 17.

इन्दोः स्यन्दिष्यते वह्निस्समुच्छोक्ष्यति सागरः ।
जलं वक्ष्यति तिग्मांशोः स्यन्त्स्यन्ति तमसां चयाः ॥ 2070 ॥

इन्दोः वह्निः स्यन्दिष्यते । परस्मैपदविकल्पात्तङ् । इट्प्रतिषेधो न । तिग्मांशो-स्तमसां चयाः स्यन्त्स्यन्ति । विकल्पात्परस्मैपदम् । अनेन इट्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1538. वर्त्स्यन्तौ वर्धिष्यमाणौ । 'वृद्भ्यः स्यसनोः' (सू. 2347) इति विभाषया परस्मैपदम् । अनेन इडभावः ।

भट्टिकाव्ये—XVI. 6.

रविस्तप्स्यति निश्शङ्कं वास्यत्यनियतं मरुत् ।
निर्वर्त्स्यत्यनुसङ्ग्रामः स्पन्त्स्यन्दुरुद्देष्यति ॥ 2071 ॥

अनुसङ्ग्रामः निर्वर्त्स्यति । परस्मैपदम् । नेट् ।

भट्टिकाव्ये—XVI. 7.

नीध्रं स्यन्दिष्यते मेधैरुध्रं वर्तिष्यते यमः ।
अनिकायस्य मरणे किं भविष्यन्ति नान्यथा ॥ 2072 ॥

मेधैस्तीध्रं स्यन्दिष्यते । भावे लृट् । आत्मनेपदम् । अत एवानेन इट्प्रति-षेधो न । तत्र परस्मैपदग्रहणमनुवर्तते । यम उग्रं वर्तिष्यते । आत्मनेपदे नेट्प्रतिषेधः ।

२३४०। अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु । (८. ३. ७२)

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते अनुस्यन्दते वा जलम् ।

भट्टिकाव्ये—IX. 74.

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान् ।
विष्कन्तृन्परिघेणाहन्नविष्कन्ना कपिद्विपः ॥ 2073 ॥

विष्यन्दमानरुधिरः कपिः । रक्तविस्यन्दपाटलान् । विभाषया षत्वम् । रक्तस्याप्राणित्वात् ।

माघे—IV. 58.

सायं शशाङ्ककिरणाहतचन्द्रकान्त-
निष्यन्दिनीरनिकरेण कृताभिषेकाः ।
अर्कोपलोल्लसितवह्निभिरह्नि तप्ता-
स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥ 2074 ॥

चन्द्रकान्तेभ्यो निष्यन्दिना प्रस्राविणा । षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 799. तदङ्गनिष्यन्दजलेन ।

## २३५० । कृपो रो लः । (७. २. १८)

रेफस्य लः स्यात् । कल्पते चक्लृपे ।

## २३५१ । लुटि च क्लृपः । (१. ३. ९३)

लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् ।

## २३५२ । तासि च क्लृपः । (७. २. ६०)

इतीट्प्रतिषेधः । ‘ क्लृपि सम्पद्यमाने ’ (वा. 1459 सू. 580) इति चतुर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 379. फलाय कल्पते आरोग्याय भवति । रेफस्य लः । चतुर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 377. कविरत्नतोऽपि सुभद्राकमनीयतायाः तुल्यै कथं कल्पेत पर्याप्तो भवेत् । अलमर्थयोगात् ‘ नमस्स्वस्ति ’ ( सू. 588 ) इति वा चतुर्थी ।

भट्टिकाव्ये—XXII. 20. & 21

नैवं विरहदुःखेन वयं व्याधानितास्महे ।
श्रमोऽनुभविता नैवं भवद्भ्यां च वियोगजः ॥ 2075 ॥

एवं युवां मम प्रीत्यै कल्प्तास्थः कपिराक्षसौ ।
गन्तुं प्रयतितास्थे प्रातः सह मया यदि ॥ 2076 ॥

मम प्रीत्यै हे कपिराक्षसौ युवां कल्प्तास्थः सम्पादितास्थः । रेफस्य: लः । 'लुटि च क्लृपः' (सू. 2351) इति परस्मैपदम् । अनेन इट्प्रतिषेधः । 'क्लृपि' (वा. 1459. सू. 580) इति चतुर्थी ।

भट्टिकाव्ये—XVI. 11.

आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः ।
प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हणे हते ॥ 2077 ॥

तस्यार्थः प्रकल्प्स्यति सम्पत्स्यते । चकारात् स्यसनोरपि परस्मैपदविकल्पः । अनेनेट्प्रतिषेधः ।

भट्टिकाव्ये—XVI. 12.

कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।
देवान्तक त्वया त्यक्तो रिपोर्यास्यामि वश्यताम् ॥ 2078 ॥

हरेरिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति । आत्मनेपदपक्षे नेट्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 2069. नः उद्यतिः उद्यमः समुद्रलङ्घनादिः वितथा अकल्प्स्यत् अभविष्यत् । क्लृ । लत्वम् । लुटि चेति चकारात् स्यसनोरपि वा परस्मैपदम् । इट्प्रतिषेधः ।

## २३५४ । फणां च सप्तानाम् । (६. ४. १२५)

एषां वा एत्वाभ्यासलोपौ स्तः । राजृ दीप्तौ, राजति राजते । रेजतुः रराजतुः । रेजे रराजे । भ्राजे बभ्राजे । स्यमु, स्येमतुः सस्यमतुः । स्वन, स्वेनतुः सस्वनतुः ।

माघे—XVII. 51.

उपाहितैर्वपुषि निवातवर्मभिः
स्फुरन्मणिप्रकरपरार्ध्यकान्तिभिः ।
निरन्तरं नरपतयो रणाजिरे
रराजिरे शरनिकराचिता इव ॥ 2079 ॥

रराजिरे । विकल्पादेत्वाभ्यासलोपाभावः ।

भट्टिकाव्ये—XIV. 7.

जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः ।
बबन्धुरङ्गुलित्राणि सन्नेहुः परिनिर्ययुः ॥ 2080 ॥

रेजुः शोभन्ते स्म । एत्वाभ्यासलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 296. भ्रेजिरे रेजिरे । कर्तरि लिट् । एत्वाभ्यासलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1720. योधाः भ्रेजिरे दीप्यन्ते स्म । एत्वाभ्यासलोपौ । विभीषणोऽपि बभ्राजे । तदभावः ।

भट्टिकाव्ये—XIV. 77.

ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम् ।
चस्वनुराजुहूर्षुश्च स्येमुश्चुकुर्दिरे तथा ॥ 2081 ॥

स्येमुः शब्दं कृतवन्तः । एत्वाभ्यासलोपौ ।

भट्टिकाव्ये—XIV. 83.

पस्पन्दे तस्य वामाक्षि सस्यमुश्चाशिवाः खगाः ।
तान्वव्राजावमत्यासौ बभासे च रणे शरैः ॥ 2082 ॥

खगाः सस्यमुः शब्दं कृतवन्तः । एत्वाभ्यासलोपाभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1963. पेराः सस्वनुः । एत्वाभ्यासलोपाभावः ।

भट्टिकाव्ये—XIV. 4.

मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः ।
घण्टाः शिशिञ्जिरे दीर्घं जह्लादे पटहैर्भृशम् ॥ 2083 ॥

मृदङ्गा धीरमास्वेनुः गम्भीरं ध्वनिताः । एत्वाभ्यासलोपौ । गोमुखैः स्वेने ध्वनितम् । भावे लिट् ।

२३५५ । पतः पुम् । (७. ४. १९)

अङि परे । अपप्तत् ।

२३५६ । वा जॄभ्रमुत्रसाम् । (६. ४. १२४)

एषामेत्वाभ्यासलोपौ वा स्तः ।

भट्टिकाव्ये—XIV. 112.

तुतुपुर्वानरास्सर्वे नेशुश्चित्रा निशाचराः ।
जेरुराशा दशास्यस्य सैन्यं नीलं नुनाव च ॥ 2084 ॥

दशास्यस्य आशा मनोरथाः जेरुः जीर्णाः । एत्वाभ्यासलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2010. भ्रेमुः बभ्रमुः । एत्वाभ्यासलोपौ ।

भट्टिकाव्ये—XIV. 9.

शूलानि भ्रमयाञ्चक्रुर्बाणानाददिरे शुभान् ।
भ्रेमुस्तुकूर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ 2085 ॥

पदातयो भ्रेमुः इतस्ततो याताः । पूर्ववत् ।

किरातार्जुनीये—XV. 1.

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥ 2086 ॥

भूतान्यर्जुनशरेभ्यस्तत्रसुः बिभ्युः । विकल्पादेत्वाभ्यासलोपाभावः ।

२३५८ । सोढः । ( ८. ३. ११५ )

सोढ्रूपस्य सहेःसस्य षत्वं न स्यात् । परिसोढा ।

भट्टिकाव्ये --IX. 89.

अप्रतिस्नव्यविकान्तमनिस्तब्धो महाहवे ।
विसोढवन्तमस्त्राणि व्यनदन्मन्त् दनस्वनिः ॥ 2087 ॥

अस्त्राणि विसोढवन्तम् । 'परिनिविभ्यः' ( सू. 2275 ) इत्यादिना षत्वे प्राप्तेऽनेन प्रतिषेधः ।

२३५९ । सिवादीनां वाड्व्यवायेऽपि । ( ८. ३. ७१ )

परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यषहत पर्यसहत । 'उपसर्गात्सुनोति' ( सू. 2270 ) इत्येतदारभ्य 'परिनिविभ्यः सेवसित-सयसिवुसहसुट्स्तुस्वञ्जाम्' ( सू. 2275 ) इत्यत्र सितशब्दात्प्राक् ये सुनोत्यादयस्तेषा-मड्व्यवायेऽपि षत्वं नित्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1991. यदिन्द्रोऽपि न व्यपहत न विसोढवान् तत्कपिः पर्यसाहिष्ट परिसोढवान् । पर्यषहिष्टेति वा । परिनिविभ्य इत्यनुवृत्तौ अनेनाड्-व्यवायेऽपि वा षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1992. हरोऽपि तृतीयया दृशा सशरममुं पुनर्वीक्षितुं न व्यषहत नाशक्नोत् । पूर्ववत् षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1995. युद्धस्य शिरः अग्रभूमिः कुसुमलक्ष्मणा प्रद्युम्नेन पर्यस्कारि परिष्कृतम् । परिपूर्वात्करोतेः कर्मणि लुङ् । 'संपरिभ्यां करोतौ भूषणे' ( सू. 2550 ) इति सुट् । 'परिनिविभ्यः' ( सू. 2275 ) इत्यादिना षत्वे अनेन विकल्पः ।

२३६० । पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमन-यच्छपश्यर्छधौशीयसीदाः । ( ७. ३. ७८ )

पादीनां पिबादयः स्युः इत्संज्ञकशकारादौ प्रत्यये परे ।

अस्मिन्नेव ग्रन्थे श्लो० 1875. या त्वां पिबति पानं करोति । पिबादेशः ।

भट्टिकाव्ये—III. 44.

वस्त्रान्नपानं शयनञ्च नाना कृत्वावकाशे रुचिसंप्रक्लृप्तम् ।
तान्प्रीतिमानाह मुनिस्ततस्सा निवध्वमाध्वं पिबतात्त शेध्वम् ॥2088॥

हे जनाः ! अस्मिन्नाश्रमे पिबत पेयजातं धयत । पूर्ववत्पिबादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1997. राघवस्सौमित्रिमजिघ्रत् । घ्रा गन्धोपादाने इत्यस्य जिघ्रादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 511. ध्वनीनां उद्धतैः ध्वनीन् कुर्वद्भिः । ध्मा शब्दाग्निसंयोगयोः इत्यस्य धमादेशः । पुष्पगन्धानामाजिघ्रैः पुष्पगन्धान् जिघ्रद्भिः । पूर्ववत् जिघ्रादेशः । सर्वत्र 'पाघ्राध्माधेट्दृशः शः' (सू. 2899) इति शप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1032. कम्बूनधमत् । ध्मो धमादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 811. नाडीः सिराः धमन्त्यापूरयन्तीति नाडिन्धमान् । 'नाडीमुष्टयोश्च' (सू. 2945) इति खश् ।

माघे—I. 12.

पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तटित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥ 2089 ॥

उदतिष्ठत् । ष्ठा गतिनिवृत्तौ इत्यस्य तिष्ठादेशः ।

माघे—XIV. 60.

ध्येयमेकमपथे स्थितं धियः स्तुत्यमुत्तममतीतवाक्पथम् ।
आमनन्ति यमुपास्यमादराद्दूरवर्तिनमतीव योगिनः ॥ 2090 ॥

योगिनो यं ध्येयमेकमामनन्ति कथयन्ति । म्नाधातोर्मनादेशः ।

भट्टिकाव्ये—XVII. 30.

तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम् ।
सोऽजुहोत्कृष्णवर्त्मानमामनन्मन्त्रमुत्तमम् ॥ 2091 ॥

स इन्द्रजित् मन्त्रमुत्तममामनन् आवर्तयन् । म्ना आवर्तने इत्यस्मात् शतरि मनादेशः ।

भट्टिकाव्ये—XVIII. 5.

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः ।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः ॥ 2092 ॥

अनुजीविनः प्रियमामनन्ति साध्विदमित्युपदिशन्ति । मनादेशः । तं सम्पदो न ऋच्छन्ति । अर्तेः ऋच्छादेशः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 333. अन्ये पुष्पफलं वन्दीभिः समप्रायच्छन्त । वन्दीकृताभ्यः स्त्रीभ्यो ददुरित्यर्थः । दाण् दाने इत्यस्य यच्छादेशः । 'अशिष्ट' (सू. 568) इति तृतीया । 'दाणश्च' (सू. 2728) इति तङ् ।

भट्टिकाव्ये—XVII. 27.

ब्रह्मादधाद्वधं तस्य तस्मिन्कर्मण्यसंस्थिते ।
प्रायच्छदाज्ञां सौमित्रेर्यूथपानां च राघवः ॥ 2093 ॥

राघवस्सौमित्रेर्यूथपानां च गन्तुमाज्ञां प्रायच्छत् दत्तवान् । दाण् दाने इत्यस्य यच्छादेशः ।

भट्टिकाव्ये—XVIII. 2.

भूमौ शेते दशग्रीवो महार्हशयनोचितः ।
नेक्षते विह्वलं मां च न मे वाचं प्रयच्छति ॥ 2094 ॥

मे वाचं प्रतिवचनं न प्रयच्छति न ददाति । दाणो यच्छादेशः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 815. सूर्यं न पश्यतीत्यसूर्यम्पश्या । 'असूर्य' (सू. 2951) इति खश् । दृशेः पश्यादेशः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 206. न सूर्यं पश्यतीत्यसूर्यम्पश्या । पूर्ववत् ।

भट्टिकाव्ये—XVIII. 6.

प्राज्ञास्तेजस्विनस्सम्यक् पश्यन्ति च वदन्ति च ।
तेऽवज्ञाता महाराज क्राम्यन्ति विरमन्ति च ॥ 2095 ॥

पश्यन्ति । दृशेः पश्यादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 475. मृगा वाममार्छन् गताः । अर्तेः ऋच्छादेशः । ऋच्छ गतौ इत्यस्य वा रूपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 366. बुद्धिमानपि शीयते विनश्यति । शद्लृ शातने शप् । शिति शीयादेशः । 'शदेश्शितः' (सू. 2362) इति तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2030. नृमांसादां बलमशीयत । लङ् । पूर्ववत् शीयादेशः । तङ् ।

भट्टिकाव्ये—VIII. 36.

आशुश्रुपन् स मैथिल्या वार्तां हर्म्येषु रक्षसाम् ।
शीयमानान्धकारेषु समचारीदशङ्कितः ॥ 2096 ॥

शीयमानान्धकारेषु चन्द्रोदयान्नश्यत्तिमिरेषु । शद्लृ शातने इति धातोः शिद्धाविनः 'शदेः शितः' (सू. 2362) इति तङ् । लटः शानच् । शदेः शीयादेशः ।

भट्टिकाव्ये—XVII. 84.

मण्डलान्याटतां चित्रमच्छिन्तां शस्त्रसंहतीः ।
जगद्विस्मापयेतां तौ न च वीरावसीदताम् ॥ 2097 ॥

तौ वीरौ नासीदतां नावसन्नौ । षद्लृ धातोस्सीदादेशः ।

भट्टिकाव्ये—XVIII. 7.

लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि ।
तदर्थं सेवते चाप्तान् कदाचिन्न स सीदति ॥ 2098 ॥

स कदाचिन्न सीदति अवसन्नो भवति । पूर्ववत्सीदादेशः ।

भट्टिकाव्ये—XVIII. 3.

विपाकोऽयं दशग्रीव सन्दृष्टोऽनागतो मया ।
त्वं तेनाभिहितः पथ्यं किं कोपं न नियच्छसि ॥ 2099 ॥

कोपं न नियच्छसि नापनयसि । निपूर्वोऽयं यमिरपनयने वर्तते । 'इषुगमियमां छः' (2400) इति छः । न दाणो यच्छादेशः ।

## २३६१ । सदेः परस्य लिटि । (८. ३. ११८)

सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद ।

अस्मिन्नेव ग्रन्थे श्लो० 1988. इन्द्रजित विषसाद । षद्लृ लिट् । परस्य षत्वप्रतिषेधः । पूर्वस्य तु 'सदिरप्रतेः' (सू. 2271) इति षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1989. न विषसाद । पूर्ववत् ।

## २३६२ । शदेश्शितः । (१. ३. ६०)

शिद्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद शेदतुः शेदुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2096. शीयमानान्धकारेषु नश्यत्तिमिरेषु । शद्लृ शातन इति धातोः शिद्भाविनः अनेन तङ् । लटः शानच् । 'पाघ्रा' (सू. 2360) इत्यादिना शदेः शीयादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 2030. नृमांसादां बलमशीयत । शद्लृ शातने इत्यस्मात् लङ् । पूर्ववत्तङ् । शीयादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 366. वृद्धिमानपि शीयते विनश्यति । तङ् । शीयादेशः ।

## २३६३ । गमहनजनखनघसां लोपः क्ङित्यनङि । (६. ४. ९८)

एषामुपधाया लोपः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 316. शात्रवान्निघ्नानं निहननशक्तम् । हन्तेरुपधालोपः ।

हन्धातुः परस्मैपदम् । 'ताच्छील्यवयोवचनशक्तिषु चानश्' (सू. 3109) इति चानश् । न तु शानच् ।

भट्टिकाव्ये—V. 102.

न विसिष्माय न जिह्राय न चक्राम न विव्यथे ।
आघ्नानो विध्यमानोऽपि रणान्निववृते न च ॥ 2100 ॥

**आघ्नानः** स्वयमेव परं घ्नन् । 'आङो यमहनः' (सू. 2695) इत्यकर्मकाद्धन्तेस्तङ् । अनेनोपधालोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 827. पतिं हन्तीति **पतिघ्नम्** । 'लक्षणे' (सू. 2969) इति टक् । उपधालोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 828. हस्तिनो हन्तुं शक्तो **हस्तिघ्नः** । 'शक्तौ हस्ति' (सू. 2971) इति टक् । उपधालोपः । शत्रून् हन्तीति शत्रुघ्नान् । 'अमनुष्यकर्तृके' (सू. 2970) इति टक् । गिरीन् । [illegible] शत्रुघ्न इत्यादि मूलविभुजादित्वात्सिद्धम् ।

भट्टिकाव्ये—VII. 65.

सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः ।
परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ 2101 ॥

स्तम्बो हन्यते येन पादन्यासेन स **स्तम्बघ्नः** । 'स्तम्बे क च' (सू. 3260) इति करणे कः । उपधालोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 969. तौ रामलक्ष्मणौ विराधाख्यं तं वसुधायां **निचख्नतुः** निखातवन्तौ । खनेर्लिट् । उपधालोपः ।

भट्टिकाव्ये—VIII. 15.

तीव्रशुष्मप्रतापोऽयमशक्यस्सोढुमातपः ।
**आघ्नान** इव मन्दाग्रैरलातैस्सर्वतोमुखैः ॥ 2102 ॥

अलातैराघ्नान इव । 'आङो यमहनः' (सू. 2695) इत्यकर्मकादात्मनेपदम् । उपधालोपः ।

भट्टिकाव्ये—XIV. 32.

> उच्चखनाते नलेनाजौ स्फुरत्तपनाक्षिणी ।
> जम्बुमाली जहौ प्राणान् आत्मा मायिनिना हतः ॥ 2103 ॥

अक्षिणी उच्चखनाते । लिट् ।

२३६६ । ऋद्धनोः स्ये । (७. २. ७०)

ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति ।

भट्टिकाव्ये—XVI. 1.

> ततः प्ररुदितो राजा रक्षसां हतबान्धवः ।
> किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ 2104 ॥

करिष्यामि । करिष्यते । कृञो लृट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2078. लङ्का शत्रुनिरुपहनिष्यते विलोप्स्यते । कर्मणि लृट् ।

भट्टिकाव्ये—IX. 49.

> स त्वं हनिष्यन्दुर्बुद्धिं कपिं व्रज ममाज्ञया ।
> मा नाज्ञी राक्षसीं मायां प्रस्तावीर्मा न विक्रमम् ॥ 2105 ॥

हनिष्यन् । लृट् । शतृ ।

२३७५ । विभाषा धेट्श्व्योः । (३. १. ४९)

इति चङ् वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2007. जठरमशिश्वियत् शूनम् । चङि रूपम् । मांसेनाश्वाश्वतां कुक्षी । 'जॄस्तम्भु' (सू. 2291) इति वा अङ् ।

भट्टिकाव्ये VI. 18.

> है वाचं देहि धैर्यं नः तव हेतोरसुस्रुवत् ।
> त्वं नो मतिमिवाधासीः नष्टा प्राणानिवादधः ॥ 2106 ॥

त्वं नः मतिमयंसीरिव । 'यमरम' (सू. 2377) इति सगिटौ । प्राणान् अदधः पीतवानिव । चङि रूपम् ।

२३७७ । यमरमनमातां सक् च । (७. २. ७३)

इति सगिटौ ।

भट्टिकाव्ये—XV. 66.

यैरघानि नगे बाली मारीचो दूषणस्तथा ।
अवामंस्त स तान् दर्पान् प्रोदयंसीच्च मुद्गरम् ॥ 2107 ॥

स कुम्भकर्णः मुद्गरं प्रोदयंसीत् उद्यतवान् । यमेस्सगिटौ ।

अस्मिन्नेव ग्रन्थे श्लो० 753. कृताकृतेभ्यः हेमरूपेभ्यो व्यरंसीत् विरतः । रमेर्लुङ् । 'व्याङ्परिभ्यो रमः' (सू. 2749) इति परस्मैपदम् । अनेन सगिटौ । 'जुगुप्साविराम' (वा. 1079 सू. 587) इति पञ्चमी ।

अस्मिन्नेव ग्रन्थे श्लो० 2063. अस्य भरेण भूरनंसीत् नता । णमु प्रह्वत्वे इत्यस्मात् लुङ् । सगिटौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1958. कुम्भकर्णः अस्नासीत् स्नातवान् । ष्णा शौचे इत्यस्मात् लुङ् । मांसमप्सासीत् । प्सा भक्षणे इत्यस्मात् लुङ् । उभयत्र आदन्तत्वात्सगिटौ ।

भट्टिकाव्ये—XV. 26.

उत्पाताः प्रादुरासंस्तस्य द्यौरश्चोतिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकुवत द्विजाः ॥ 2108 ॥

वायवोऽवासिषुः वान्ति स्म । वा गतिगन्धनयोः इत्यस्मात् लुङ् । सगिटौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1965. अभासीत् भाति स्म । भा दीप्तौ इत्यस्मात् सगिटौ ।

भट्टिकाव्ये—XV. 108.

> प्राणिषुर्निहताः केचित् केचित्तु प्रोदभीष्मिषुः ।
> तमोऽन्येऽहासिषुर्वीरा व्यजृम्भिषत चापरे ॥ 2109 ॥

अन्ये तमो मोहमहासिषुः त्यक्तवन्तः । ओ हाक् त्यागे इत्यस्मात् आदन्तत्वात्सगिटौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1041. गोत्रानुसारक्षणात्सम्यगनुकूले नायासिषुः नागमन् । या प्रापणे इत्यस्मात् लुङ् । सगिटौ ।

भट्टिकाव्ये—VII. 26.

> विद्युत्वारं रवेर्भासो विभ्राजं शशलाञ्छनम् ।
> रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ 2110 ॥

नाज्ञासिषं न ज्ञातवानस्मि । ज्ञा अवबोधने इत्यस्मात् लुङि सगिटौ ।

अस्मिन्नेव ग्रन्थे श्लो० 472. भरताग्रजो रामोऽग्लासीत् ग्लानिं गतः । ग्लायतेर्लुङ् ।

२३८२ । सर्तिशास्त्यर्तिभ्यश्च । (३. १. ५६)

एभ्यश्च्लेरङ् स्यात् कर्तरि लुङि ।

अस्मिन्नेव ग्रन्थे श्लो० 340. रामः आयोधने लक्ष्मणायाशिषत् अवोचत् । शासु अनुशिष्टौ । लुङ् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1841. स राजा यं नृपं लघुन्यपि कर्मणि अशिषत् आज्ञापितवान् । पूर्ववदङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1950. सीतां जिघांसू राक्षसावारताम् आगतौ । ऋ गतौ । लुङ् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1080. मरुत्सुतः कुम्भकर्णमन्वारत् अनुगतः । अर्तेः लुङ्यङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1414. त्वय्युपागते सति ममाभीष्टास्सङ्कल्पा मनोरथास्समारन्त । सम्यगृतास्सत्या बभूवुरित्यर्थः । सम्पूर्वादर्तेर्लुङि 'समो गम्' (सू. 2699) इति तङि अङ् ।

२३८५ । स्तुसुधूञ्भ्यः परस्मैपदेषु । (७. २. ७२)

एभ्यः सिच इट् स्यात्परस्मैपदेषु ।

अस्मिन्नेव ग्रन्थे श्लो० 2105. विक्रमं मा न प्रस्तावीः । प्रस्तुहीत्यर्थः । प्रपूर्वात् ष्टुञो लुङ् । इट् । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः ।

२३८६ । श्रुवः शृ च । (३. १. ७४)

श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति शृणुतः ।

रघुवंशे—I. 39.

मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ 2111 ॥

शृण्वन्तौ । श्रु श्रवणे लट् । शतृप्रत्ययः ।

२३९१ । वृतो वा । (७. २. ३८)

वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यात् ।

माघे—XVI. 37.

यदनर्गलगोपुराननस्त्वमितो वक्ष्यसि किञ्चिदप्रियम् ।
विवरिष्यति तच्चिरस्य नः समयोद्वीक्षणरक्षितां क्रुधम् ॥ 2112 ॥

तत् अप्रियम् विवरिष्यति । दीर्घविकल्पः ।

माघे—XVII. 59.

धुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परैः ।
यतः क्षितेरवयवसम्पदोऽणवस्त्विषां निधेरपि वपुरावरीषत ॥ 2113 ॥

अणवः सूक्ष्माः क्षितेरवयवसम्पदः त्विषां निधेरपि वपुरावरीषत आच्छादि-तवत्यः । वृञो लुङि तङ् । इटो दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 641. नवपरिमलगन्धः केनोपायेन वरीतुमाच्छा-दयितुम् । इटो दीर्घः । शक्यः ।

माघे—XIII. 7.

अवलोक एव नृपतेः स्म दूरतो
रभसाद्रथादवतरीतुमिच्छतः ।
अवतीर्णवान्प्रथममात्मना हरि-
र्विनयं विशेषयति सम्भ्रमेण सः ॥ 2114 ॥

**रथादवतरीतुं** । विकल्पाद्दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 17. शीतालुः शीतभीरुः अत एव सरस्यवतरि-तुमनिच्छुः । दीर्घविकल्पः ।

## २३९३ । गुप्तिज्किद्भ्यस्सन् । ( ३. १. ५ )

**गुपेर्निन्दायां,** तिजेः क्षमायां, कितेर्व्याधिप्रतीकारेऽर्थे नित्यं सन् स्यात् ।

किरातार्जुनीये— II. 43.

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ 2115 ॥

**तितिक्षा** क्षमा । तिज निशाने इति धातोरनेन क्षमार्थे सन्प्रत्ययः ।

अनर्घराघवे—IV. 15.

ग—मिथिलां प्रविश्य बलादाकृष्यमाणे कलत्रे कथं **तितिक्षेत** रघुराजपुत्रः ॥ 2116 ॥

## २३९४ । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । ( ३. १. ६ )

मानेर्जिज्ञासायां, बधेश्चित्तविकारे, दानेरार्जवे, शानेर्निशानेऽर्थे नित्यं सन् अभ्यासेकारस्य दीर्घश्च ।

अनर्घराघवे--IV. 15.

ग—लोकोत्तरं हि किमप्युन्मीलयन्तो जगति राज्योपभोगेभ्योऽपि बीभत्सन्ते महानुभावाः ॥ 2117 ॥

बीभत्सन्ते जुगुप्सन्ते । राज्योपभोगान्निन्दन्तीत्यर्थः । 'जुगुप्साविराम' (वा. 1079 सू. 587) इत्यादिनापादानता । अनेन सन् दीर्घश्च ।

उत्तररामचरिते—I. ४.

ग--एते हि हृदयमर्मच्छिदः संसारभावा येभ्यो बीभत्समानाः सन्त्यज्य सर्वान्कामान् अरण्येऽपि विश्राम्यन्ति मनीषिणः ॥ 2118 ॥

येभ्यो बीभत्समानाः जुगुप्समानाः । पूर्ववत् ।

२३०६ । दंशसञ्जस्वञ्जां शपि । (६. ४. २५)

२३०७ । रञ्जेश्च । (६. ४. २६)

एषां शपि नलोपः ।

किरातार्जुनीये— VIII. 16.

सलीलमासक्तलतान्तभूषणं
समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीडं नुनुदे नितम्बिना
घनेन कश्चिज्जघनेन कान्तया ॥ 2119 ॥

कुसुमावतंसकं समासजन्त्या शिरसि प्रतिदधत्या । सञ्जेर्नलोपः ।

भट्टिकाव्ये—XVIII. 23.

शक्ति संस्वजने शक्रो गोपायति हरिः श्रियम् ।
देवबन्धः प्रमोदन्ते चित्रीयन्ते घनोदयाः ॥ 2120 ॥

शक्रः शक्तिं संस्वजते गृह्णाति । स्वञ्जेर्नलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 1997. राघवः सौमित्रिं पर्यष्वजत् आश्लिष्टवान् । पूर्ववदनुनासिकलोपः । 'प्राक् सितादड्व्यवायेऽपि' (सू. 2276) इति वचनात् 'परिनिविभ्यः' (सू. 2275) इत्यादिना षत्वम् ।

२३९८ । वेः स्कन्देरनिष्ठायाम् । (८. ३. ७३)

षत्वं वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2073. विष्कन्तॄन् विष्कन्दनशीलान् चञ्चलान् । ताच्छील्ये तृन् । शत्रून्विष्कन्ता स्वयमचञ्चलः सन् । पूर्ववत्तृन् । उभयत्रापि षत्वम् ।

२३९९ । परेश्च । (८. ३. ७४)

अस्मात्परस्य स्कन्देस्सस्य षो वा । योगविभागादनिष्ठायामिति न सम्बध्यते । परिष्कन्दति परिस्कन्दति । परिष्कण्णः परिस्कन्नः । षत्वपक्षे णत्वम् ।

भट्टिकाव्ये—IX. 75.

मेघनादः परिष्कन्दन् परिष्कन्दन्तमाश्रिषम् ।
अबध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ 2121 ॥

मेघनादः **परिष्कन्दन्** परितो भ्रमन् । **परिष्कन्दन्तं** कपिम् । वा षत्वम् । **अपरिस्कन्दम्** । 'परिस्कन्दः प्राच्यभरतेषु' (सू. 3026) इति निपातः ।

२४०० । इषुगमियमां छः । (७. ३. ७७)

एषां छः स्याच्छिति परे ।

भट्टिकाव्ये—XVII. 28.

तां प्रत्यैच्छन्नसुसम्प्रीतास्ततस्ते सविभीषणाः ।
निकुम्भिलां समभ्यायन्नचरुध्यन्त च राक्षसैः ॥ 2122 ॥

ते तामाज्ञां **प्रत्यैच्छन्** । प्रतीष्टवन्तः । इषु इच्छायां इत्यस्य छः ।

अस्मिन्नेव ग्रन्थे श्लो० 1292. दशरथो मिथिलामगच्छत् । गमेर्लङ् । छः ।

अस्मिन्नेव ग्रन्थे श्लो० 2099. हे दशग्रीव ! कोपं न नियच्छसि नापनयसि । यमेर्लट् ।

२४०३ । निसस्तपतावनासेवने । (८. ३. १०२)

षः स्यात् । निष्टपति ।

अस्मिन्नेव ग्रन्थे श्लो० 28. आत्मानं निष्टपन्तीमिव सन्तापयन्तीमिव । षत्वम् ।

२४०६ । ऋदृशोऽङि गुणः । (७. ४. १६)

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1030. कुम्भकर्णमन्वारत् अनुगतः । 'सर्ति' (सू. 2382) इत्यङि गुणः ।

२४०९ । वचिस्वपियजादीनां किति । (६. १. १५)

सम्प्रसारणं स्यात्किति ।

अस्मिन्नेव ग्रन्थे श्लो० 1977. देवाः सम्भित्यूचुः । सम्प्रसारणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 842. इष्टं इष्टिः यागः । यजेर्भावे क्तः । सम्प्रसारणम् ।

२४१२ । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । (६. १. १६)

एषां किति ङिति च सम्प्रसारणं स्यात् ।

अनर्घराघवे— IV. 41.

पुरमथनधनुर्विमर्दनोत्थं प्रदहदहर्दिवमस्ति तीव्रमर्चिः ।
रघुजनककुटुम्बयोः पूरैः परमिह शान्तिमुशन्ति शस्त्रभाजः ॥ 2123 ॥

पुरमथनधनुर्विमर्दनोत्थं तीव्रमर्चिरहर्दिवं प्रदहदन्ति । शशभाजोऽस्मदादयो रघुजनककुटुम्बबान्धैः परमर्चिषः शान्तिमुशन्ति इच्छन्ति । वश कान्तौ । सम्प्रसारणम् ।

२४१३ । लिटि वयो यः । ( ६. १. ३८ )

वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः ऊयुः ।

२४१४ । वश्चास्यान्यतरस्यां किति । ( ६. १. ३९. )

वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः ऊवुः ।

अस्मिन्नेव ग्रन्थे श्लो० 387. सायकाः खमूयुः आवृतवन्तः, वसुधाञ्च ऊवुः छादितवन्तः । वेञ् तन्तुसन्ताने इत्यस्मात् लिटि तस्य वयिरादेशः । यकारस्य वकारादेशः ।

२४१८ । लिपिसिचिह्वश्च । ( ३. १. ५३ )

एभ्यः च्लेरङ् स्यात् ।

भट्टिकाव्ये—XV. 109.

अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा ।
एवं तेऽचेन्दिपुम्सर्वे वीर्यं चाधिपनाधिकम् ॥ 2124 ॥

**अलिपन्** लिप्तवन्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 1958. **व्यलिपत्** समालिप्तवान् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2026. शीतैस्तोयैर**भ्यषिञ्चन्** । 'प्राक्सितादड्व्यवायेऽपि' ( सू. 2276. ) इति षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1967. त्वं कस्मान्मा**माह्वः** आहूतवान् । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2004. सखीना**ह्वन्** आहूतवन्तः । अङ् ।

भट्टिकाव्ये—VI. 21.

इह सा **व्यलिपद्**गन्धैः स्नान्तीहा**भ्यषिचज्**जलैः ।
इहाहं द्रष्टु**माह्व** तां स्मरन्नेवं मुमोह सः ॥ 2125 ॥

**अलिपत । अभ्यपिचत् । आह्वम् ।**

२४१९ । आत्मनेपदेष्वन्यतरस्याम् । ( ३. १. ५४ )

अह्वत अह्वास्त ।

अस्मिन्नेव ग्रन्थे श्लो० 737. चेदिराट् मुरारिमाह्वत मस्पर्धमाकारयामास । '**स्पर्धायामाङः**' ( सू. 2074 ) इति तङि लुङ् । अनेनाङादेशः ।

भट्टिकाव्ये— II. 51.

> उद्भ्रमो राघवमाह्वतैवं धनुस्सबाणं कुरु मानियासीः ।
> पराक्रमज्ञः प्रियसन्नतिस्तं नम्रः क्षितीन्द्रोऽनुनिनीपुरूचे ॥ 2126 ॥

असौ राघवमाह्वत । पूर्ववदङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1039. ते वानराः कुम्भकर्णमाह्वन्त स्पर्धमाना आहूतवन्तः । पक्षेऽङ् ।

भट्टिकाव्ये—XV. 28.

> आक्लिष्ट तानसंमान्य दर्पात्स प्रधनक्षितिम् ।
> ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे ॥ 2127 ॥

कुम्भकर्णः शत्रूनाह्वास्त आहूतवान् । पूर्ववत्तङ् । अङभावपक्षे रूपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1220. या पूः अमरावतीमाह्वास्त आहूतवती । सिजादेशः ।

भट्टिकाव्ये—VI. 22.

> तस्याल्लिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन् ।
> अलिप्तेवानिलः शीतो वने तं न त्वजिह्लदत् ॥ 2128 ॥

**अलिपत । अलिप्त ।**

भट्टिकाव्ये—VI. 23.

> स्नानेऽभ्यपिचताम्भोभी रुदन् दयितया विना ।
> तथाभ्यपिक्त वारीणि पितृभ्यः शोकमूर्च्छितः ॥ 2129 ॥

अभ्यषिचत । अभ्यषिक्त ।

**२४२० । विभाषा श्वेः । ( ६. १. ३० )**

श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । शुशाव शुशुवतुः । शिश्वाय शिश्वियतुः ।

भट्टिकाव्ये—XIV. 79.

रक्तं प्रचुश्च्युतुः क्षुण्णाः **शिश्वियुः** शूरविक्षताः ।
अभ्यतां **शुशुवुर्बाणान्** भुजाः साक्षुब्धमुष्टयः ॥ 2130 ॥

केचित् **शिश्वियुः** । असंप्रसारणपक्षे रूपम् । भुजाः **शुशुवुः** गताः । गत्यर्थे द्रष्टव्यम् । संप्रसारणपक्षे रूपम् ।

भट्टिकाव्ये—III. 30.

आबद्धभीमभ्रुकुटीविभङ्ग-
**श्शोश्वीयमानारुणरौद्रनेत्रः** ।
उच्चैरुपालब्ध स कैकयीं च
शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥ 2131 ॥

स भरतः **शोश्वीयमाने** अतिरोदनाद्भृशं शूने । श्वयतेर्यङन्तात् लटः शानजादेशः । विकल्पादसंप्रसारणे रूपम् ।

॥ इति तिङन्तभ्वादिप्रकरणम् ॥

—:o:—

॥ श्रीरस्तु ॥

## ॥ अथादादिप्रकरणम् ॥

--:०%०:--

### २४२३ । अदिप्रभृतिभ्यः शपः । ( २. ४. ७२ )

लुक् स्यात् । अत्ति अत्तः अदन्ति ।

### २४२४ । लिट्यन्यतरस्याम् । ( २. ४. ४० )

अदो घस्लृ वा स्याल्लिटि । जघास । 'गमहन' (सू. 2363) इत्युपधालोपः । जक्षतुः । आद आदतुः ।

भट्टिकाव्ये—XIV. 40.

विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याशिनो हतान् ।
सुस्रुवुः शोणितं रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥ 2132 ॥

क्रव्याशिनः शृगालादयः हतान् जक्षुः भक्षितवन्तः । अदेर्घस्लृ । उपधालोपः ।

माघे—XVIII. 76.

नैरन्तर्यच्छिन्नदेहान्तरालं दुर्भक्षस्य ज्वालिना वाशितेन ।
योद्धुर्व्रणप्रोतमादीप्य मांसं पाकापूर्वस्वादमादे शिवाभिः ॥ 2133 ॥

शिवाभिर्मांसमादे जघसे । भक्षितमित्यर्थः । विकल्पादत्तेः घस्लादेशः ।

### २४२७ । लुङ्सनोर्घस्लृ । ( २. ४. ३७ )

अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1836. व्यालाः श्वापदाः त्वां कथं वा नाघसन् नाभक्षयन् । घस्लादेशो अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2006. सीतां घस्तुमतु वा इच्छोः जिघत्सोः बिभक्षयिषोः । घसेः अदेर्वा सन्नन्तादुप्रत्ययः । अदेरपि लुङ्सनोर्घस्लृ ।

माघे—VI. 49.

विगतसस्यजिघत्समघट्टयत्
कलमगोपवधूर्न मृगव्रजम् ।
श्रुततदीरितकोमलगीतक-
ध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ 2134 ॥

जिघत्सा घस्तुमत्तुं वा इच्छा ।

अस्मिन्नेव ग्रन्थे श्लो० 169. जिघत्साम् । पूर्ववत् ।

२४३१ । हन्तेर्जः । ( ६. ४. ३६ )

आदेशः ।

नैषधे—IV. 59.

कुरु करे गुरुमेकमयोघनं
बहिरितो मुकुरञ्च कुरुष्व मे ।
विशति तत्र यदैव विधुस्तदा
सखि सुखादहितं जहि तं द्रुतम ॥ 2135 ॥

विधुं जहि मारय । हन्तेर्लोटि सिपि हिरादेशो जादेशश्च ।

२४३२ । आर्धधातुके । ( २. ४. ३५ )

इत्यधिकृत्य ।

२४३४ । लुङि च । ( २. ४. ४३ )

इति वधादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 412. मारीचं न्यवधिषम् अमीमरम् । हन्तेर्वधादेशः ।

२४३६ । चक्षिङः ख्याञ् । ( २. ४. ५४ )

२४३७ । वा लिटि । ( २. ४. ५५ )

माघे—XV. 95.

सम्प्रत्युपेयाः कुशली पुनर्युधः
सम्मेष्टमाशीर्गिरि मर्तुरीरिता ।
मद्यः प्रसाद्य द्वितयेन नेत्रयोः
प्रत्याचचक्षे गलदम्भसा प्रियाः ॥ 2136 ॥

आशीराशीर्वादः । गलदम्भसा नेत्रयोः द्वितयेन प्रत्याचचक्षे प्रत्याख्यातः । विकल्पान्न चक्षिङः ख्याञादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 880. सा शूर्पणखा रामोपक्रममाचख्यौ । ख्याञादेशः ।

२४३८ । अस्यतिवक्तिख्यातिभ्योऽङ् । ( ३. १. ५२ )

च्लेरङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1594. सर्वेषामिषुभृतां यशांसि निरास्थत् निरस्तवान् । अस्यतेरङ् । थुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1971. तौ बाणानास्थताम् क्षिप्तवन्तौ । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 284. मुनिः वेदिं परितः राक्षसान् निरास्थत् निरस्तवान् ।

भट्टिकाव्ये—I. 19.

आख्यन्मुनिस्तस्य शिवं समाधे-
र्विघ्नन्ति रक्षांसि वने क्रतूंश्च ।
तानि द्विषद्वीर्यनिराकरिष्णु-
स्तृणेढु रामस्सह लक्ष्मणेन ॥ 2137 ॥

मुनिराख्यत् ।

भट्टिकाव्ये—XV. 35.

अनर्दिषुः कपिव्याघ्रास्सम्यक् चायुत्सताहवे ।
नानमर्दीदवादीच्च निरास्थच्च तत्राहतान् ॥ 2138 ॥

निरास्थत् ।

भट्टिकाव्ये—XV. 39.

अद्राष्टां ते रघुव्याघ्रावाख्यच्चैनं विभीषणः ।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः ॥ 2139 ॥

आख्यत् कथितवान् ।

नैषधे—V. 20.

वीक्ष्य तस्य विनये परिपाकं पाकशासनपदं स्पृशतोऽपि ।
नारदः प्रमदगद्गदयोक्त्या विस्मितः स्मितपुरस्सरमाख्यत् ॥ 2140 ॥

२४४२ । शीङो रुट् । (७. १. ६)

रुडागमः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 751. रक्षांसि शेरते ।

अस्मिन्नेव ग्रन्थे श्लो० 1949. सुपर्णकुमारास्तास्तत्रैगं नात्यशेरत । लङ् । तेऽप्येनमतिशयितुं न शेकुरित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1950. ते कक्षेऽग्निं निक्षिप्य शेरते ।

२४५० । ब्रुवः पञ्चानामादित आहो ब्रुवः । (३. ४. ८४)

ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः ।

२४५१ । आहस्थः । (८. २. ३५)

इति थादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1444. त्वमात्थ ब्रवीषि । ब्रुव इति सिपः थादेशः ब्रुवश्चाहादेशः । अनेन हकारस्य थकारः ।

२४५५ । इणो यण् । (६. ४. ८१)

इति यत्वम् ।

२४५६ । दीर्घ इणः किति । (७. ४. ६९)

भट्टिकाव्ये—III. 40.

ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन्विशश्राम समेत्य रामः ।
च्युताशनायाः फलवद्भिभूत्या व्यास्यन्नुदन्यां शिशिरैः पयोभिः ॥2141॥

निकेतमीयुः जग्मुः । यणादेशः । अभ्यासदीर्घः ।

## २४५८ । इणो गा लुङि । ( २. ४. ४५ )

'गातिस्था' ( सू. 2223 ) इति सिचो लुक् । अगात् अगातां अगुः । अस्मिन्नेव ग्रन्थे श्लो० 563. मधुपावलिः अगान्निरगात् निर्गता । गादेशः । अस्मिन्नेव ग्रन्थे श्लो० 334. आगात् आगतः।

## २४५९ । गाङ् लिटि । ( २. ४. ४९ )

इङो गाङ् स्याल्लिटि । अधिजगे अधिजगाते अधिजगिरे ।

## २४६० । विभाषा लुङ्लृङोः । ( २. ४. ५० )

इङो गाङ् वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2014. अर्थशास्त्राण्यध्यगीष्ट अधीतवान् । गाङादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 3[illegible]. स नृपो वेदानध्यैष्ट अधीतवान् । गाङभावपक्षे रूपम् ।

## २४६४ । विदो लटो वा । ( ३. ४. ८३ )

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद विदतुः विदुः । पक्षे वेत्ति वित्त इत्यादि ।

## २४६५ । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । ( ३. १. ४१ )

लोटि आम्प्रत्ययादिनिपातः ।

भट्टिकाव्ये—VI. 4.

विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत्स्वकान् ।
रक्षांसि रक्षितुं सीतामशिषश्च प्रयत्नवान् ॥ 2142 ॥

विदाङ्कुर्वन्तु जानन्तु । विध्यर्थे लोट् । आम्प्रत्ययादिनिपातः ।

माघे—II. 111.

कृत्वा कृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम् ।
विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ 2143 ॥

२४७२ । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । (८. ३. ८७)

उपसर्गेभ्यः प्रादुसश्च परस्यास्तेस्सस्य षः स्याद्यकारेऽचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति ।

माघे—VIII. 12.

आलापैस्तुलितरवाणि माधवीनां
माधुर्यादमलपतत्रिणां कुलानि ।
अन्तर्धामुपययुरुत्पलावलीषु
प्रादुःष्यात्क इव जितः पुरः परेण ॥ 2144 ॥

परेण जितः क इव पुरो जेतुरग्रे प्रादुःष्यात् प्रादुर्भवेत् । षत्वम् ।

भट्टिकाव्ये—IX. 81.

प्रादुष्षन्ति न संत्रासा यस्य रक्षस्समागमे ।
तस्य क्षत्रियदुष्पूतेरयं प्रणिधिरागतः ॥ 2145 ॥

यस्य रक्षस्समागमे संत्रासा न प्रादुष्षन्ति प्रादुर्भवन्ति । अस्तेस्सस्य षत्वम् ।

२४७४ । रुदादिभ्यः सार्वधातुके । (७. २. ७६)

रुद्, स्वप्, श्वस् अन्, जक्ष् एभ्यो वलादेस्सार्वधातुकस्येट् स्यात् । रोदिति ।

भट्टिकाव्ये—XVIII. 10.

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः ।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ ॥ 2146 ॥

लोकत्रयपतिः क्षितौ स्वपिति । अहं केनोपायेन समाश्वसिमि शोकं त्यजामि । **प्राणिमि** जीवामि । इट् ।

भट्टिकाव्ये—XVIII. 19.

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः ॥ 2147 ॥

मघवान् मखेषु हविर्जक्षिति भक्षयति । इट् ।

## २४७७ । सुविनिर्दुर्भ्यः सुपिसूतिसमाः । (८. ३. ८८)

इति षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2145. तस्य क्षत्रियदुष्षूतेः । सूयत इति सूतिः । सूयतेः कर्मणि स्त्रियां क्तिन् । षत्वम् ।

भट्टिकाव्ये—IX. 82.

दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः ।
चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम् ॥ 2148 ॥

**सुषुप्तम्** सुष्ठु सुप्तम् ।

## २४८२ । इद्दरिद्रस्य । (६. ४. ११४)

दरिद्रातेरिकारः स्यात् ।

भट्टिकाव्ये—XVIII. 31.

नेदानीं शक्रयक्षेन्द्रौ बिभीतो न दरिद्रितः ।
न गर्वं जहितो दृप्तौ न क्लिश्नीतो दशानन ॥ 2149 ॥

शक्रयक्षेन्द्रौ न **दरिद्रितः** दरिद्रौ न भवतः ।

॥ इत्यदादिप्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ जुहोत्यादिप्रकरणम् ॥

:०:

२४८९ । जुहोत्यादिभ्यः श्लुः । ( २. ४. ७५ )

२४९० । श्लौ । ( ६. १. १० )

धातोर्द्वे स्तः । जुहोति जुहुतः ।

२४९१ । भीह्रीभृहुवां श्लुवच्च । ( ३. १. ३९. )

एभ्यो लिड्याम् वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2052. रावणो बिभयांप्रचकार अतिमात्रं बिभाय । प्रोपसर्गव्यवधानं तृक्षांप्रचक्रुरितिवत् समाधेयम् । प्रबिभयाञ्चकारेति पाठे छन्दोभङ्गः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 612. न जिह्रयाञ्चकार न जिह्राय । ऊर्जं न बिभरामास न बभार ।

भट्टिकाव्ये—IV. 5.

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः ।
शरभङ्गः प्रविश्यारात्सुतीक्ष्णमुनिकेतनम् ॥ 2150 ॥

शरभङ्गो रामस्य पुरो वपुः ज्वलने जुहवाञ्चकार आजुहाव ।

अस्मिन्नेव ग्रन्थे श्लो० 26. शुष्मणि तैर्हवींषि जुहवांबभूविरे । जुहोतेः कर्मणि लिट् ।

२४९२ । भियोऽन्यतरस्याम् । ( ६. ४. ११५ )

इत्वं वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2149. शक्रयक्षेन्द्रौ न बिभीतः न भयं कुरुतः। इत्वाभावपक्षे रूपम्।

माघे—V. 5.

आरक्ष मग्नमवमत्य सृणिं शिताग्र-
मेकः पलायत जवेन कृतार्तनादः।
अन्यः पुनर्मुहुरुदप्लवदस्तभार-
मन्योन्यतः पथि बताबिभितामिभोष्ट्रौ॥ 2151॥

इभोष्ट्रावन्योन्यतः अबिभितां भीतवन्तौ। ञि भी भये। लङ्। इत्वम्।

२४९८। जहातेश्च। (६. ४. ११६)

इत् स्याद्वा। पक्षे ईत्वम्। जहितः जहीतः।

अस्मिन्नेव ग्रन्थे श्लो० 2149. गर्वं जहितः परित्यजतः। इत्वम्।

२४९९। आ च हौ। (६. ४. ११७)

जहातेर्हौ परे आ स्याच्चादिदीतौ। जहाहि जहिहि जहीहि।

भट्टिकाव्ये—XX 10.

जहीहि शोकं वैदेहि प्रीतये धेहि मानसम्।
रावणे जहिहि द्वेषं जहाहि प्रमदावनम्॥ 2152॥

शोकं जहीहि। द्वेषं जहिहि। प्रमदावनं जहाहि। रूपत्रयम्।

॥ इति जुहोत्यादिप्रकरणम्॥

---

॥ श्रीरस्तु

## ॥ अथ दिवादिप्रकरणम् ॥

—:०:—

२५०५ । दिवादिभ्यः श्यन् । ( ३. १. ६९ )

दीव्यति ।

२५०९ । विभाषा लीयतेः । ( ६. १. ५१ )

इति पक्षे आत्वम् ।

भट्टिकाव्ये—VIII. 44.

अपलापयमानस्य शत्रुंस्तस्याभवन् मतिः ।
मिथ्या कारयते चारैः घोषणां राक्षसेश्वरः ॥ 2153 ॥

अपलापयमानस्य ।

२५१४ । श्लिष आलिङ्गने । ( ३. १. ४६ )

इत्यालिङ्गनार्थे श्लेः क्सादेशः स्यात् नान्यत्र । अश्लिक्षत्कन्यां देवदत्तः । समश्लिषज्जतुकाष्ठम् ।

अस्मिन्नेव ग्रन्थे श्लो० 412. प्रियं मा न श्लिक्षः । आलिङ्ग इत्यर्थः । ' न माङ्योगे ' ( सू. 2228 ) इत्यडागमप्रतिषेधः । श्लिष्यतेर्लुङि क्सादेशः ।

माघे—XV. 6.

क्षणमाश्लिषद्घटितशैलशिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविधूतिमसावधिकावधूनितसमस्तसंसदम् ॥ 2154 ॥

असौ चैद्यः उपहितविधूतिं अधिकावधूनितसमस्तसंसदं स्तम्भं क्षणमाश्लिषत् अंसेनाश्लिष्टवान् । पुषादित्वाच्च्लेरङादेशः । आलिङ्गनार्थे क्सादेशः स्यात् ।

माघे.—VIII. 20.

नेच्छन्ती सममुमुना सरोऽवगाढुं
रोषस्यः प्रतिजलमीरिता सखीभिः ।

आश्लिक्षद्भयचकितेक्षणं नवोढा
बोढारं विपदि न दूषितातिभूमिः ॥ 2155 ॥

२५१७ । मस्जिनशोर्झलि । (७. १. ६०)

नुम् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1957. अपरेऽम्बुधौ न्यमाङ्क्षुः निमग्नाः । नुम् ।

भट्टिकाव्ये—XVI. 26.

विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः ।
असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ 2156 ॥

एषा पुरी विनङ्क्ष्यति । लृट् । नुम् ।

भट्टिकाव्ये—IV. 33.

पर्यशाप्सीद्द्विविष्टासौ संदर्श्य भयदं वपुः ।
अविस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ 2157 ॥

निनङ्क्षुः नष्टुमिच्छुः । नशेस्सनि नुम् ।

२५१९ । शमामष्टानां दीर्घः श्यनि । (७. ३. ७४)

प्रणिशाम्यति ।

अस्मिन्नेव ग्रन्थे श्लो० 1960. हे दशग्रीव ! प्रणिशाम्य प्रशान्तो भव । शाम्यतेर्लोट् । दीर्घः ।

भट्टिकाव्ये—XVII. 39.

व्यजिघृक्षत्सुग्रीवस्तस्य प्रामाद्यद्गुणिनां हिते ।
आशङ्कत सुहृद्बन्धूनवृद्धान्वृद्धमन्यत ॥ 2158 ॥

प्रामाद्यत् प्रमादं गतः । मदी हर्षे इत्यस्मात् लङ् । दीर्घः ।

॥ इति दिवादिप्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ स्वादिप्रकरणम् ॥

—:o:—

### २५२३ । स्वादिभ्यः श्नुः । (३. १. ७३)

सुनोति सुनुतः ।

### २५२४ । सुनोतेः स्यसनोः । (८. ३. ११७)

स्ये सनि च परे सुञः षो न स्यात् । विसोष्यति ।

भट्टिकाव्ये—IX. 90.

तेऽभिज्ञाय निसोष्यन्तं रक्तैः रक्षांसि सव्यथाः ।
अन्यैरप्यायतैर्मत्तुर्वरत्राशृङ्खलादिभिः ॥ 2159 ॥

ते राक्षसा रक्तैर्निसोष्यन्तं प्लावयिष्यतम् । षत्वप्रतिषेधः ।

### २५२५ । विभाषा चेः । (७. ३. ५८)

अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च । प्रगिचिकाय चिचाय चिक्ये चिच्ये ।

अस्मिन्नेव ग्रन्थे श्लो० 2046. स इन्द्रजित् सर्पास्त्रैर्वानराणां सेनामाचिचाय छन्नवान् । अकुत्वपक्षे रूपम् । राघवौ चाचिकाय । कुत्वपक्षे रूपम् ।

भट्टिकाव्ये—XIV. 47.

आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः ।
तौ मुमुहतुरुद्विग्नौ वसुधायां च पेततुः ॥ 2160 ॥

तेन इन्द्रजिता राघवौ आचिक्याते छन्नौ । कर्मणि लिट् ।

### २५३१ । हेरचङि । (७. ३. ५६)

अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय ।

भट्टिकाव्ये—XIV. 36.

गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः ।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः ॥ 2161 ॥

इन्द्रजिता गदा जिघ्ये प्रहिता । हिनोतेः कर्मणि लिट् । कुत्वम् ।

२५३२ । राधो हिंसायाम् । (६. ४. १२३)

एत्वाभ्यासलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2014. वानरा भूधरान् रेधुः उन्मूलितवन्तः । एत्वाभ्यासलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1101. यदुयोधैर्द्विषन्तो रेधिरे जिहिंसिरे । राध्यतेः कर्मणि लिट् । एत्वाभ्यासलोपौ ।

॥ इति स्वादिप्रकरणम् ॥

---

॥ श्रीरस्तु ॥

## ॥ अथ तुदादिप्रकरणम् ॥

—:o✵o:—

### २५३४ । तुदादिभ्यः शः । ( ३. १. ७७ )

तुदति । तुदते ।

### २५३७ । स्फुरतिस्फुलत्योर्निर्निविभ्यः । ( ८. ३. ७६ )

षत्वं वा स्यात् । निष्फुरति निःस्फुरति ।

अस्मिन्नेव ग्रन्थे श्लो० 2121. विस्फुरन् दीप्यमानः । षत्वाभावपक्षे रूपम् ।

भट्टिकाव्ये—IX. 76.

विष्फुलद्भिर्गृहीतोऽसौ विष्फुलः पुरुपाशनैः ।
विष्कम्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात ॥ 2162 ॥

विष्फुलद्भिर्हर्षाच्चलद्भिः । विष्फुलति दीप्यतीति विष्फुलः । पचाद्यच् । विभाषा षत्वम् ।

### २५३८ । म्रियतेर्लुङ्लिङोश्च । ( १. ३. ६१ )

अस्मिन्नेव ग्रन्थे श्लो० 1418. कृतान्तोऽपि म्रियेत । अनेन तङ् ।

### २५३९ । किरतौ लवने । ( ६. १. १४० )

छेदेऽर्थे सुट् । उपस्किरति ।

वा० । अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम् । ( 3699. )

### २५४० । हिंसायां प्रतेश्च । ( ६. १. १४१ )

उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति ।

अनर्घराघवे—II. 56.

विधानमानुश्रविकं गृहेषु नः
प्रतिस्किरन्ती किमियं प्रतीक्ष्यते ।
सुबाहुमुख्यैः सममाततायिभि-
र्गृहाण चापं निगृहाण ताटकाम् ॥ 2163 ॥

**प्रतिस्किरन्ती** नाशयन्ती । सुट् ।

माघे—I. 47.

सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंह सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै-
रुरोविदारं **प्रतिचस्करे** नखैः ॥ 2164 ॥

**प्रतिचस्करे** हतः । किरतेः कर्मणि लिट् ।

॥ इति तुदादिप्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ रुधादिप्रकरणम् ॥

—:o:—

२५४३ । रुधादिभ्यः श्नम् । (३. १. ७८)

२५४५ । तृणह इम् । (७. ३. ९२)

भट्टिकाव्ये—XVIII. 33.

तृणेह्मि देहमात्मीयं त्वं वाचं न ददासि चेत् ।
द्राघयन्ति हि मे शोकं स्मर्यमाणा गुणास्तव ॥ 2165 ॥

देहं तृणेह्मि हन्मि ।

२५४६ । अञ्जेः सिचि । (७. २. ७१)

इति इट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2105. मायां मा नाञ्जीः ।

॥ इति रुधादिप्रकरणम् ॥

—:o:—

॥ श्रीरस्तु ॥

## ॥ अथ तनादिप्रकरणम् ॥

—:o:—

### २५५० । संपरिभ्यां करोतौ भूषणे । (६. १. १३७)

### २५५१ । समवाये च । (६. १. १३८)

संपरिपूर्वस्य करोतेस्सुट् स्यात् भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति सङ्घीभवन्तीत्यर्थः । संपूर्वस्य कचिदभूषणेऽपि सुट् 'संस्कृतं भक्षाः' (सू. 1217) इति ज्ञापकात् । 'परिनिविभ्यः' (सू. 2275) इति षः । परिष्करोति । 'सिवादीनां वा, (सू. 2359) इति वा षत्वम् । पर्यष्कार्षीत् पर्यस्कार्षीत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1294. शीतरुचेः स्फुरदंशुजालं माघवनीं ककुभं **समस्कुरुत** अभूषयत् । कात्पूर्वस्सुडागमः 'अड्भ्यासव्यवायेऽपि' (सू. 2553) इति नियमात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1995. युद्धस्य शिरः अग्रभूमिः कुसुमलक्ष्मणा प्रद्युम्नेन **पर्यस्कारि** भूषितम् । परिपूर्वात्करोतेः कर्मणि लुङ् । **अनेन सुट्** । 'सिवादीनां वा' (सू. 2359) इति षत्वविकल्पः ।

अस्मिन्नेव ग्रन्थे श्लो० 1584. द्विजः **संस्कृता** योग्यत्वमापादिता । संपूर्वस्य कचिदभूषणेऽपीष्यत इति सुट् ।

रघुवंशे—XV. 31.

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
**सञ्चस्कार**ोभयप्रीत्या मैथिलेयौ यथाविधि ॥ 2166 ॥

वाल्मीकिः मैथिलेयौ यथाविधि **सञ्चस्कार** संस्कृतवान् ।

अस्मिन्नेव ग्रन्थे श्लो० 26. प्रणयनादि**संस्कृते** ।

विश्वगुणादर्शे—347.

विश्रुताश्रितवात्सल्यं वीरं विजयराघवम् ।
नमस्कुरुत यो गृध्रं समस्कुरुत दाहतः ॥ 2167 ॥

यो रामः गृध्रं दाहतः समस्कुरुत दाहसंस्कारं चक्रे ।

२५५२ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । (६. १. १३९)

उपात्कृञः सुट् स्यादेष्वर्थेषु । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहारः आकांक्षितैकदेशपूरणम् । उपस्कृता कन्या । अलङ्कृतेत्यर्थः । उपस्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुंक्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूत इत्यर्थः ।

अस्मिन्नेव ग्रन्थे ग० 1253. मस्करी रैवतकगिरिमुपस्कुरुते अलंकरोति । डुकृञ् करणे उभयपदी ।

अस्मिन्नेव ग्रन्थे श्लो० 489. कस्यचिन्मोपस्कृथाः । अध्वश्रमार्थं न किञ्चित्खाद्यपेयादिकमुपस्कर्तव्यम् । प्रतियत्ने सुट् । सतो गुणान्तराधानं प्रतियत्नः । करोतेर्लुङ् । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः । 'गन्धन' (सू. 2705) इत्यादिना प्रतियत्ने तङ् । 'कृञः प्रतियत्ने' (सू. 614) इति कर्मणि षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 477. रामलक्ष्मणौ इहागमस्योपास्कृषाताम् आगमनमुपस्कृतवन्तौ । दृढीकृतवन्तावित्यर्थः । लुङ् । पूर्ववत् सुट् । तङ् । षष्ठी ।

विश्वगुणादर्शे—472.

उपस्कारैः स्फारैरुपचितरसामोदभरम-
प्यवैत्यन्नं गेहे कृतमनतिभोग्यं बुधजनः ।
अभूयःसंस्कारिण्यपि हविषि देवालयभवे
त्वनल्पं भोग्यत्वं पुनरघहरत्वञ्च मनुते ॥ 2168 ॥

उपस्कारैः व्यञ्जनैः ।

२५५३ । सुट् कात्पूर्वः । ( ६. १. १३५ )

वा० । अड्भ्यासव्यवायेऽपि । ( 3698–9. )

अस्मिन्नेव ग्रन्थे श्लो० 2166. समस्कार ।

अस्मिन्नेव ग्रन्थे श्लो० 1294. समस्कुरुत ।

॥ इति तनादिप्रकरणम् ॥

---

॥ श्रीरस्तु ॥

## ॥ अथ क्र्यादिप्रकरणम् ॥

—:०:—

२५५४ । क्र्यादिभ्यः श्ना । ( ३. १. ८१ )

२५५५ । स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च । ( ३. १. ८२ )

चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते ।

भट्टिकाव्ये—XVII. 19.

सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्वरक्षसाम् ।
निधनायाजुहूषत्तं व्यष्टभ्नाद्रघुनन्दनः ॥ 2169 ॥

रघुनन्दनो लक्ष्मणं व्यष्टभ्नात् निवारितवान् । श्नाप्रत्ययः ।

भट्टिकाव्ये—XVII. 45.

तस्मान्निरपतद्भूरि शिलाशूलेष्टिमुद्गरम् ।
माहेश्वरेण सौमित्रिरस्तभ्नात्तत्सुदुर्जयम् ॥ 2170 ॥

सौमित्रिस्तन्माहेश्वरेण अस्तभ्नात् स्तम्भितवान् । श्नाप्रत्ययः ।

भट्टिकाव्ये—XVII. 82.

आस्कन्दल्लक्ष्मणं बाणैरत्यक्रामच्च तं द्रुतम् ।
राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः ॥ 2171 ॥

इषुवृष्टिभिरस्कुनात् छादितवान् । स्कुञ् आप्रवणे । श्नाप्रत्ययः ।

भट्टिकाव्ये—XVII. 83.

अपौहद्बाणवर्षं तद्बले रामो निराकुलः ।
प्रत्यस्कुभ्नोद्दशग्रीवं शरैराशीविषोपमैः ॥ 2172 ॥

दशग्रीवं बाणैः प्रत्यस्कुभ्नोत् प्रतीपं छादितवान् । श्नुप्रत्ययः ।

२५५६ । वेः स्कभ्नातेर्नित्यम् । ( ८. ३. ७७ )

वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नोति विष्कभ्नाति ।

अस्मिन्नेव ग्रन्थे श्लो० 2162. विष्कम्भितुं विचलितुम् ।

॥ इति क्र्यादिप्रकरणम् ॥

—o✿o—

———

॥ श्रीरस्तु ॥

## ॥ अथ चुरादिप्रकरणम् ॥

—:o:—

**२५६३ । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । ( ३. १. २५ )**

एभ्यो णिच् स्यात् ।

**वा० ।** अर्थवेदयोरप्यापुग्वक्तव्यः । ( 1758. )

सत्यं करोत्याचष्टे वा सत्यापयति । अर्थापयति । वेदापयति । पाशं विमुञ्चति विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायति उपवीणयति । तूलेन अनुकुष्णाति अनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । 'उपसर्गात्सुनोति' ( सू. 2270 ) इति षः । अभ्यषेणयत् । 'प्राक्सितात्' ( सू. 2276 ) इति षः । अभिषिषेणयिषति 'स्थादिष्वभ्यासेन च' ( सू. 2277 ) इति षः । लोमान्यनुमार्ष्टि अनुलोमयति । त्वचं गृह्णाति त्वचयति । चर्मणा संनह्यति संचर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति । चुर स्तेये चोरयति । स्वार्थे णिच् ।

चम्पूभारते—I. 21.

तूर्णं प्रधाव्य तुरगं स्वयमन्यतोऽसौ
पाण्डुः कुलं परिववार लुलाययूनाम् ।
अग्रे विशालकरधूननदुर्विधत्वात्
सत्यापितद्विरदभावविपर्ययाणाम् ॥ 2173 ॥

सत्यापयतेः कर्मणि क्तः ।

रघुवंशे—VIII. 33.

अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥ 2174 ॥

शिवमुपवीणयितुं वीणया उपगातुम् । वीणाशब्दादुपगानार्थे णिच् । ततस्तुमुन् ।

किरातार्जुनीये—X. 38.

श्रुतिसुखमुपवीणितं सहायै-
रविरललाञ्छनहारिणश्च कालाः ।
अविहितहरिसूनुविक्रियाणि
त्रिदशवधूषु मनोभवं वितेनुः ॥ 2175 ॥

उपवीणितं वीणया उपगानम् । वीणाशब्दाण्णिजन्ताद्भावे क्तः ।

चम्पूभारते—V. 57.

संद्रष्टुं तव पादमूलमधुना सर्वैः समं बन्धुभिः
देव भ्रातरमागतं वनतले लेशेन हेतोर्विना ।
पापः कश्चन गायको दिविषदां हा हन्त बध्वा दृढं
निःशङ्करुपवीणितो निजभटैरग्रं नयत्युच्चकैः ॥ 2176 ॥

उपवीणितः वीणयोपगीतः । कर्मणि क्तः ।

चम्पूभारते—IV. 94.

ग— तथाविध एवासौ चिरादाचरितचेतनः स्वागताचारदर्शनैरुत्थाय पुरतो घण्टाक्वणक्वणात्कारसहचरेण कण्ठगर्जितेन कम्बोः कल्पितसुधारसमोक्षे महोक्षे निषेदिवांसं भुजमूलप्रसारितगिरिजापाणियुगलनखराङ्कुरयोरगीङ्किगुणीकृतहारमणिरमणीयवक्षसं पारिषदगणाञ्जलिकमलवनमध्यराजहंसायमानं मार्दवभरितशार्दूलचर्मनिर्मितपरमयनपर्यङ्कोप-रिभागतिर्यगर्पितचरणपल्लवसंवाहनपरेण शिलादकुमारेण च दर्पदुर्ललननिवारणाय मुख-बन्धनकनकशृङ्खलेन निरुध्य मुहुर्मुहुः करपुटास्फालितककुदशृङ्गेण भृङ्गिणा च लक्ष्यमा-णोभयपक्षभागं गाण्डीवदण्डताडनात्पीडितचूडाशशिनमाश्वासयितुमवतरद्भिरुडुनिकरैरिव सुरतरुकुसुमवर्षपरम्पराभिरभिरामं जटाभस्मकुराभीरधारानिर्झरैरिव चतुर्भिराम्नायपुरुषैः परिपठ्य-मानशतरुद्रीयविरुदमन्त्रसम्भारं सन्निधिमवलम्बमानैरम्बुरुहमृणालिमस्तुरगैः करुणावीक्ष्य-माणभक्तजनरक्षणापदानप्रकरणं कर्णपूरीकृततमालमञ्जरीमधुमिषेण कटाक्षात् साक्षात्कृपा-मिव वर्षन्तं प्रज्वलद्भिः परिष्कारपन्नगफणारत्नैर्नूत्नैः शारदाभ्रैरिवानुरज्यमानावयवं अवतंस-शशिकलापरिगलितकिरणधारापातशीतासहिष्णुतयेव दन्तपटगर्भवर्तिना स्मितेन सूचित-

हृदयप्रसादं भगवन्तं महादेवमुद्वीक्ष्य पक्ष्मतटरूढविटपिसमुत्पाटनपटुभिः प्रमोदाश्रुपूरैर्नदीमातृकायमाणपुलकाङ्कुरः सविनयमुपसृत्य पादारविन्दयोः सहस्रकृत्वः प्राणंसीत् ॥ 2177 ॥

**उपवीण्यमानम्** । उपवीणयतेः कर्मणि लटश्शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1000. **मैमीमुपावीणयत्** वीणयोपगायति स्म । णिचि लङ् ।

चम्पूभारते—VIII. 29.

ग— तदनु निखिलमहरारम्भकृत्यमवसाय्य बालातपेन वलाहक इव घुसृणमसृणितेन पटीरपङ्केन चर्चितकलेवरः पङ्केरुहशङ्किनीभिरञ्चललिखितराजहंसराजिभिरवकृष्यमाणेनेव पीताम्बरभागेन परिचुम्बितप्रपदपल्लवः निजोदरान्तरनवकाशतया बहिर्निर्गतैर्जगदण्डशिशुभिरिव मुक्ताफलैः प्रत्युप्तमेखलामुखभागो वर्षाहेमन्तसमययोरप्यविनश्वरं लक्ष्मीलीलाकमलमुपश्लोकितुमागतेन दिनमणिबिम्बेनेव कौस्तुभेन देदीप्यमानभुजान्तरो दनुजपरिषदुत्पातरक्तपरीवेषेणेव पद्मरागकेयूरेण परिमण्डितभुजदण्डो निर्गत्य सुयोधनदुर्वासितायाः नगरभुवः स्पर्शनं परिहर्तुमिव द्वारि सविनयमुपागतेन दारुकेण संयोजितमणिपादुकः किञ्चिदवनमितपूर्वकायेन विदुरेण वितीर्यमाणहस्तावलम्बो गुरुकृपप्रमुखैर्ब्रह्मसङ्घैः प्रतिपाद्यमानां जयाशिषं शिरसा प्रतिगृह्णानः कुशलप्रश्नकोरकितमोदाभ्यां कुरुराजदेवव्रताभ्यां सदनाभिगमनाय संप्रार्थ्यमानश्चिरतरावसरं प्रतिपालयतामक्षौहिणीपतीनामञ्जलिकमलवनावलिमवलोकनेन सम्भावयमानो मुकुन्दो वन्दिवृन्दपरिपठ्यमानकंसादिविजयविरुदावलिप्रचन्यमन्थुरेण मञ्जुकुसुमगन्धसम्पदन्धीकृतपुष्पन्धयझङ्कारसहचरवादित्रघोषेण मेघवर्त्मनुन्मिषन्तीभिस्सौदामिनीभिरिव कनकवेत्रलताभिराकुलीकृतेन महता राजपथेन सुयोधनादिभिश्चतुर्भिरध्यासितपूर्वं सभामण्डपं शनैः शनैरवजगाहे ॥ 2178 ॥

**उपश्लोकितुं** श्लोकैरुपस्तोतुम् ।

अनर्घराघवे—I. 10.

ग— उपक्रममाणश्च स कविः स्वनिर्भासशब्दब्रह्माणमाचार्यं प्राचेतसं गिरं च देवतामेवमुपश्लोकितवान् ॥ 2179 ॥

**उपश्लोकयतेः क्त्वसुमप्रत्ययः** ।

अस्मिन्नेव ग्रन्थे ग० 1980. **अभिषेणयतः** सेनयाभियतः । अभिषेणयतेर्लटः शतृप्रत्ययः ।

चम्पूरामायणे—VI. 75.

ग— अनुपद**मभिषेणयति** विभीषणे तेनाविनीतेन भीषणेन विमुक्तां शक्तिमर्धचन्द्रेण दारयन्नपारयन् सोढुमदसीयमविनयममर्षाकुलस्सौमित्रिरमोघं माघवनममुञ्चदस्त्रम् ॥ 2180 ॥

सेनया अभियन् **अभिषेणयन्** तस्मिन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1981. भुवनान्य**भिषिषेणयिषुं** अभिषेणयितुं सेनया अभियातुमिच्छुम् । 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' II. viii. 96. इत्यमरः । सेनाशब्दाण्णिचि सन्नन्तादुप्रत्ययः । 'स्थादिषु' (सू. 2277) इति धात्वभ्याससकारयोः षत्वम् ।

माघे—XV. 75.

दधतो भयानकतरत्वमुपगतवतस्समानताम् ।
धूमपटलपिहितस्य गिरेः **समवर्मयन्** सपदि मेदिनीभृतः ॥ 2181 ॥

**समवर्मयन्** संवर्मयन्ति स्म । सम्यग्वर्माण्यामोचयन्नित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 919. **संवर्मितं** सम्यक्कवचितम् । संवर्मयतेः क्तः ।

अनर्घराघवे—V. 15.

पतिते व्यसने दैवाद्दारुणे दारुणात्मनि ।
**संवर्मयति** वज्रेण धैर्यं हि महतां मनः ॥ 2182 ॥

भट्टिकाव्ये—XIV. 24.

भल्लैश्च बिभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा ।
गदाभिश्**चूर्णयाञ्चक्रुः** शितैश्चक्रैश्च चिच्छिदुः ॥ 2183 ॥

**चूर्णयाञ्चक्रुः** चूर्णितवन्तः । अनेन णिच् । चूर्ण प्रेरणे इति चौरादिकाद्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 967. हे भैमि ! भवत्या किं वा अर्थाप्यते ।

अनर्घराघवे—III. 59.

पौराणीभिरनेकविक्रमकथागाथाभिरर्थापिता-
स्ते वीरस्य जयन्ति राक्षसपतेः दोःस्तम्भदम्भोलयः ।
यानुत्प्रेक्ष्य विशोषयन्मदमयं मैरेयमैरावणो
भूषास्रग्भिरभूदमात्यमधुपश्रेणीषु साधारणः ॥ 2184 ॥

**अर्थापिताः** । णाविष्ठवद्भावात् पृथुं करोति प्रथयति । मृदुं करोति म्रदयति । भृशं कृशं दृढं भ्रशयति क्रशयति द्रढयति । स्रग्विणं स्रजयति । श्रीमतीं श्रीमन्तं वा श्रययति । पयस्विनीं पयसयति । स्थूलं स्थवयति । दूरं दवयति । युवानं युवयति । कनयति । अन्तिकं नेदयति । बाढं साधयति । वृद्धं ज्यापयति । वर्षयति । प्रियं प्रापयति । स्थिरं स्थापयति । स्फिरं स्फावयति । उरुं वरयति वारयति । बहुलं बंहयति । गुरुं गरयति । दीर्घं द्राघयति । वृन्दारकं वृन्दयति ।

अस्मिन्नेव ग्रन्थे श्लो० 1851. **नेदयत्** अन्तिकस्थं कुर्वन् । अन्तिकशब्दात् तत्करोतीतिण्यन्तात् लटः शत्रादेशः । णाविष्ठवद्भावात् 'अन्तिकबाढयोर्नेदसाधौ' (सू. 2014) इति नेदादेशः । **दवयत्** दूरीकुर्वन् । दूरशब्दात्तत्करोतीति ण्यन्तात् लटः शत्रादेशः । णाविष्ठवद्भावात् 'स्थूलदूर' (सू. 2015) इत्यादिना यणादिपरलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 1852. को मां **स्रजयति** स्रग्विणं करोति । णाविष्ठवद्भावात् विनो लुक् । को वा ममासनं **नेदयति** अन्तिकं करोति ।

अस्मिन्नेव ग्रन्थे श्लो० 1416. क्षुद्रा नः **क्षोदयन्ति** । क्षुद्रशब्दात् तत्करोतीति ण्यन्ताल्लट् । णाविष्ठवद्भावात् 'स्थूलदूर' (सू. 2015) इत्यादिना यणादिपरलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 1455. **संबंहयन्तीं** सम्यग्बहुलीकुर्वन्तीम् । सम्पूर्वाद्बहुलशब्दात्तत्करोतीति ण्यन्ताल्लटश्शतरि ङीप् । णाविष्ठवद्भावात् 'प्रियस्थिर' (सू. 2016) इत्यादिना बहुलशब्दस्य बंहादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1604. **भूमयन्ति** स्वसामर्थ्यम् । बहोर्भावो भूमा । पृथ्वादित्वादिमनिच् । 'बहोर्लोप' (सू. 2017) इति भूरादेशः । भूमास्यास्तीति भूमवत् । 'तदस्यास्ति' (सू. 1894) इति मतुप् । भूमवत्कुर्वन्ति भूमयन्ति । भूमवच्छब्दात् तत्करोतीति णिचि लट् । णाविष्ठवद्भावात् 'विन्मतोर्लुक्' (सू. 2020) इति मतुपो लुक् । **कनयन्ति** अल्पां कुर्वन्ति । अल्पशब्दात्तत्करोतीति ण्यन्ताल्लट् । णाविष्ठवद्भावात् 'युवाल्पयोः' (सू. 2019) इति वा कनादेशः ।

## २५६४ । णिचश्च । (१. ३. ७४)

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । **चोरयते** ।

भट्टिकाव्ये—VIII. 61.

अवाद्वायुः शनैर्यस्यां लतां **नर्तयमानवत्** ।
नायासयन्त संत्रस्ता ऋतवोऽन्योन्यसम्पदः ॥ 2185 ॥

यस्यामशोकवनिकायां वायुर्लतां **नर्तयमानवत्** नृत्यं कारयन्निव । नृतिश्चलने वर्तते । ततश्च 'निगरण' (सू. 2753) इति परस्मैपदं प्राप्तं 'न पादमि' (सू. 2755) इत्यादिना प्रतिषिद्धम् । अनेनात्मनेपदम् । ऋतवोऽन्योन्यसम्पदं नायासयन्त नोपपीडयन्ति स्म । आङ्पूर्वाद्यमेः चित्तवत्कर्तृकत्वात् 'अणावकर्मकात्' (सू. 2754) इति परस्मैपदं प्राप्तं 'न पादमि' (सू. 2755) इति प्रतिषिद्धम् । अनेनात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 242. यस्यां शशी वापीर्ज्योत्स्नामृतं **अपाययत** पायितवान् । 'निगरण' (सू. 2753) इति प्राप्ते तिपि 'न पादमि' (सू. 2755) इत्यादिना प्रतिषिद्धे अनेन तङ् ।

भट्टिकाव्ये—VIII. 63.

**प्रादमयन्त** पुष्पेषु यस्यां बन्द्यः समाहृताः ।
परिमोहयमाणाभी राक्षसीभिस्समावृताः ॥ 2186 ॥

यस्यां बन्द्यः पुष्पेषु **प्रादमयन्त** शमितवत्यः । तन्मतस्याचरणात् परिमोहयमाणाभिः व्यामोहयन्तीभिः । दमिपरिमुहोः 'अणौ' (सू. 2754) इत्यादिना प्राप्तस्य परस्मैपदस्य 'न पादमि' (सू. 2755) इत्यादिना प्रतिषेधे अनेनात्मनेपदम् ।

भट्टिकाव्ये—VIII. 64.

यस्यां वासयते सीतां केवलं स रिपुः स्मरात् ।
न त्वरोचयतात्मानं चतुरो वृद्धिमानपि ॥ 2187 ॥

दशाननो यस्यां सीतां वासयते स्म वासितवान् । आत्मानं नारोचयत । रोचिवास्योः 'अणौ' (सू. 2754) इत्यादिना प्राप्तस्यापि परस्मैपदस्य 'न पादमि' (सू. 2755) इति प्रतिषेधे अनेन तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. रघूत्तमे मोदयध्वमानन्दयत । मुद हर्षे । ण्यन्ताल्लोटि अनेन तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 234. किं विलापयसेऽत्यर्थम् । अनेनात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 833. रामो वालिनं सुग्रीवेणाह्वाययत । ह्वयतेराङ्पूर्वाण्ण्यन्ताल्लङ् । अकर्त्रभिप्रायत्वात् अनेन नात्मनेपदम् ।

भट्टिकाव्ये—VIII. 56.

ततः प्राकारमारोहत् क्षपाटानविबोधयन् ।
नायोधयत्समर्थोऽपि सीतादर्शनलम्पटः ॥ 2188 ॥

स हनूमान् क्षपाटानविबोधयन् । बुधेर्ण्यन्तात् अनेनात्मनेपदे प्राप्ते 'बुधयुध' (सू. 2752) इत्यादिना परस्मैपदम् । लटः शतृ । समर्थोऽपि तान्नायोधयत् न योधितवान् । युधेर्ण्यन्तात्पूर्ववत्तङि प्राप्ते अणावकर्मकत्वात् चित्तवन्निशाटकर्तृकत्वाच्च 'अणावकर्म' (सू. 2754) इत्यादिना परस्मैपदम् । बुधादिसूत्रे युधिग्रहणं तु अचित्तवत्कर्तृकार्थं यथा योधयति काष्ठानीति द्रष्टव्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1061. कामः स्वकर्म कारयन् स्वप्रयोजनं रतिकृत्यं कामिजनैः कारयन् यद्गेहमास्ते । स्वार्थं कारयमाणाभिः कारयन्तीभिः । उभयत्रापि करोतेर्ण्यन्तात् अनेन नित्यतया आत्मनेपदे प्राप्ते स्वशब्देन कर्त्रभिप्रायत्वस्य प्रतीयमानत्वात 'विभाषोपपदेन प्रतीयमाने' (सू. 2744) इति विकल्पेनात्मनेपदम् ।

**२५६५ । भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । (७. ४. ३)**

एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत् अपिपीडत् ।

भट्टिकाव्ये—XV. 93.

अबिभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ 2189 ॥

अबिभ्रजत् दीपितवान्। उपधाया ह्रस्वः।

भट्टिकाव्ये—XV. 82.

अदिदीपत्ततो वीर्यं नीलं चापीपिडच्छरैः।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम् ॥ 2190 ॥

युद्धोन्मत्तो वीर्यमदिदीपत्। ह्रस्वाभावपक्षे रूपम्। नीलं चापीपिडत् पीडितवान्। ह्रस्वपक्षे रूपम्।

भट्टिकाव्ये—XV. 83.

अबभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे।
हनूमता क्षतास्तस्य रणेऽसृपत वाजिनः ॥ 2191 ॥

त्रिशिरा वीर्यमबभ्राजत् दीपयति स्म। ह्रस्वाभावपक्षे रूपम्।

भट्टिकाव्ये—XV. 110.

अजिह्मरत्स काकुत्स्थौ शेषांश्चाजीजिवत्कपीन्।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥ 2192 ॥

हनूमान् शेषांश्च कपीनजीजिवत् जीवयति स्म। ते जीविता लङ्कामदीदिपन् दीपितवन्तः। ह्रस्वपक्षे रूपम्।

भट्टिकाव्ये—XV. 111.

समन्तादर्दीपत्ततः सैन्यममार्गीद्गलतोमरम्।
अमार्क्षीच्चासिपत्राद्दीनबभासत्परश्वथान् ॥ 2193 ॥

सैन्यं परश्वथान् अबभासत् दीपितवत्।

भट्टिकाव्ये—XV. 122.

प्रौर्णुवीत्तेजसारातिमरासींश्च भयङ्करम् ।
प्रीदां चास्य तथाकाक्षीदजिजीवद्यथा न तम् ॥ 2194 ॥

तं नाजिजीवत् न जीवयति स्म । ह्रस्वाभावपक्षः ।

अस्मिन्नेव ग्रन्थे श्लो० 666. नलिनी कर्त्री अब्जनयनं न्यमिमीलत् निमीलयति स्म । विकल्पाल्लोपधाह्रस्वः । अत एव नाभ्यासदीर्घः । 'भ्राजभास' (सू. 3157) इति क्विप् ।

२५६६ । अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् । (७. ४. ९५)

अभ्यासस्यात्वम् ।

भट्टिकाव्ये—XV. 81.

परिघेणावधिष्टाथ रणे देवान्तको बली ।
मुष्टिनाददरत्तस्य मूर्धानं मारुतात्मजः ॥ 2195 ॥

मुष्टिना अददरत् दारितवान् । ण्यन्तस्य दॄ विदारणे इत्यस्य चङ्परे णौ अभ्यासस्यात्वम् ।

भट्टिकाव्ये—XV. 48.

रक्तेनाचिक्लिददूमिं सैन्यैश्चातस्तरद्धतैः ।
नाताप्सीद्भक्षयन् क्रूरो नाश्रमत् घ्नन् प्लवङ्गमान् ॥ 2196 ॥

हतैः सैन्यैर्भूमिमतस्तरत् छादितवान् । स्तृणातेर्णौ चङि रूपम् । अत्वम् ।

२५६९ । चिस्फुरोर्णौ । (६. १. ५४)

आत्वं वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1518. विस्फारयाञ्चकाराश्रम् ।

२५७० । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ । (७. ३. ३६)

इति पुगागमः । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । क्नोपयति । क्ष्मापयति । स्थापयति ।

अस्मिन्नेव ग्रन्थे श्लो० 2062. न चार्पिपः नार्पितवानसि । अर्तेर्णौ पुगागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1275. कुलीनाः स्वामिनो भर्तॄन् ह्रेपयन्ति किम् । पुगागमः ।

रघुवंशे—VI. 49.

त्रस्तेन तार्क्ष्यात्किल कालियेन
मणिं विसृष्टं यमुनौकसा यः ।
वक्षःस्थलव्यापिरुचं दधानः
स कौस्तुभं ह्रेपयतीव कृष्णम् ॥ 2197 ॥

सुषेणः कृष्णं ह्रेपयतीव व्रीडयतीव । पुगागमः ।

भट्टिकाव्ये—XVII. 85.

व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां गतैः ।
अभिन्तां तूर्णमन्योन्यं शिक्षाश्चातनुतां मुहुः ॥ 2198 ॥

क्ष्मामक्ष्मापयतां कम्पितवन्तौ । क्ष्मायी विधूनने । पुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 511. स्वयं ग्लपिताः पीडिताः । ग्लायतेर्ण्यन्तात्कर्मणि क्तः । पुगागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 970. स्नपितेव क्षालितेव । स्नातेर्ण्यन्तात्कर्मणि क्तः ।

माघे—V. 51.

दुःखेन भोजयितुमाशयिता शशाक
तुङ्गाग्रकायमनमन्तमनादरेण ।
उत्क्षिप्तहस्ततलदत्तविषाणपिण्ड-
स्नेहस्रुतिस्नपितबाहुरिभाधिराजम् ॥ 2199 ॥

स्नपितबाहुः आप्लुतभुजः । स्नातेर्ण्यन्तात्कर्मणि क्तः । पुक् ।

माघे—XVIII. 15.

रोदोरन्ध्रं व्यश्नुवानानि लोलै-
रङ्ग्यान्तर्मापितैः स्थावराणि ।
केचिद्दुर्वीमेत्य पंक्तिपद्मां
क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ 2200 ॥

मापितैः मातेर्माङो वा ण्यन्तात्कर्मणि क्तः । पुगागमः ।

२५७२ । नाग्लोपिशास्वृदिताम् । (७. ४. २)

वा० । धूञ्प्रीञोर्नुग्वक्तव्यः । (4519.)

भट्टिकाव्ये—XVII. 64.

ततोऽच्चिक्रीयताम्भोधेर्धनुश्चाधूनयन्महत् ।
रामः समाहितं तस्य नाप्तैरन्ये न चापरे ॥ 2201 ॥

रामो धनुश्च महत् अधूनयत् विधूनितवान् ।

२५७३ । ई च गणः । (७. ४. ९७)

गणेरभ्यासस्य ईत्स्यात् चङ्परे णौ । चादत् । अजगणत् अजीगणत् ।

माघे—VI. 15.

अजगणन्गणशः प्रियमग्रतः
प्रणतमप्यभिमानितया न याः ।
सति मधावभवन्मदनव्यथा-
विधुरिता धुरि ताः कुकुरस्त्रियः ॥ 2202 ॥

याः प्रियं नाजगणन् न गणयन्ति स्म । गणेश्चौरादिकाण्णौ चङ् । अभ्यासस्य पाक्षिकमीत्वम् ।

भट्टिकाव्ये—XV. 5.

स तान्वाजीगणत्सर्वान्निच्छयाबुद्ध च स्वयम् ।
अबूबुधत मां कस्मादप्राक्षीच्च निशाचरान् ॥ 2203 ॥

स कुम्भकर्णः उपद्रुतान्वाजीगणत् न गणयति स्म । गणेः स्वार्थिकण्यन्तस्य अदन्तस्याभ्यासस्य अनेनेत्वम् ।

॥ इति चुरादिप्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ णिच्प्रकरणम् ॥

--:०:--

### २५७५ । तत्प्रयोजको हेतुश्च । (१. ४. ५५)

अस्मिन्नेव ग्रन्थे श्लो० 261. रक्षोभिः प्रयोज्यैः आज्ञां त्वद्वाक्यं कारय । मां प्रियाण्युपहारय । सीतायाः प्रयोजककर्तृत्वम् । अन्येषां प्रयोज्यकर्तृत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 266. स दुर्योधनः अनुजीविनस्सखीनिव दर्शयते ।

### २५७६ । हेतुमति च । (३. १. २६)

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोः णिच् स्यात् ।

### २५७८ । स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । (७. ४. ८१)

एषामभ्यासोकारस्येत्वं वा स्यत् । असिस्रवत् असुस्रवत् ।

अस्मिन्नेव ग्रन्थे श्लो० 247. दूता भरतमर्थं नाशिश्रवन् न श्रावयन्ति स्म । अभ्यासस्य इत्वम् ।

भट्टिकाव्ये—XV. 108.

> तस्य क्षेमे महाराज नामृष्मलखिला वयम् ।
> पौलस्त्योऽशिश्रवत्तं च जीवन्तं पवनात्मजम् ॥ 2204 ॥

पौलस्त्यो विभीषणः तं जाम्बवन्तं जीवन्तं पवनात्मजमशिश्रवत् श्रावितवान् । शृणोतेर्ण्यन्ताच्चङि अभ्यासस्येत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1039. अपिप्लवम् ।

### २५८० । स्तम्भुसिवुसहां चङि । (८. ३. ११६)

उपसर्गनिमित्त एषां सस्य षो न स्याच्चङि । अवातस्तंभत् । पर्यसीषिवत् । न्यसीषहत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2087. इन्द्रजित् मारुतिं व्यतस्तम्भत् स्तम्भयति स्म । स्तम्भेर्णौ चङि षत्वप्रतिषेधः ।

## २५८३ । विभाषा वेष्टिचेष्ट्योः । (७. ४. ९६)

अभ्यासस्यात्वं वा स्याच्चङ्परे णौ । अववेष्टत् अविवेष्टत् । अचचेष्टत् अचिचेष्टत् ।

भट्टिकाव्ये—XV. 60.

> अतत्वरच्च तान्योद्धुमचचेष्टच्च राघवौ ।
> कुम्भकर्णो न्यवर्तिष्ट रणेऽयुत्सत वानराः ॥ 2205 ॥

सुग्रीवो राघवौ योद्धुमचचेष्टत् व्यापारयति स्म । अत्वपक्षे रूपम् ।

भट्टिकाव्ये—XV. 61.

> अविवेष्टन्नृपादेशादारुक्षंश्चाशु राक्षसम् ।
> तानधावीत्समारूढांस्तेऽप्यस्रंसिपताकुलाः ॥ 2206 ॥

वानरान् रामः राक्षसमविवेष्टत् वेष्टयति स्म ।

## २५८७ । लोपः पिबतेरीच्चाभ्यासस्य । ( ७. ४. ४ )

पिबतेरुपधाया लोपः स्यात् अभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । पा पाने । आदन्त्वात् 'अर्ति ह्री' ( सू. 2570 ) इति पुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 244. युवानो वधूः मद्यमपीप्यन् पाययन्ति स्म । पिबतेर्णौ चङि अनेन धात्वकारस्य लोपः ईकारादेशश्चाभ्यासस्य । 'न पादमि' (सू. 2755) इत्यादिना निगरणार्थत्वनिमित्तपरस्मैपदनिषेधेऽपि 'णिचश्च' (सू. 2564) इत्यात्मनेपदविकल्पात्पाक्षिकं परस्मैपदम् । 'गतिबुद्धि' ( सू. 540 ) इत्यादिना वधूरित्यणिकर्तुः कर्मत्वम् ।

२५९२ । लियः संमाननशालीनीकरणयोश्च । (१. ३. ७०)

लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते । वञ्चयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो॰, 2153. शत्रूनपलापयमानस्य शालीनीकुर्वाणस्य । न्यक्कुर्वाणस्येत्यर्थः । लीङ् श्लेषणे इति धातोः दैवादिकाण्णयन्तात् शालीनीकरणे आत्मनेपदम् ।

२५९४ । भीस्म्योर्हेतुभये । (१. ३. ६८)

ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेत् भयस्मयौ । भयग्रहणमुपलक्षणम् । तेन स्मयतेरपि भवति । मुण्डो भापयते ।

२५९५ । भियो हेतुभये षुक् । (७. ३. ४०)

भी ई इति ईकारः प्रश्लिष्यते । ईकारान्तस्य भियः षुक् स्याण्णौ हेतुभये । भीषयते ।

२५९६ । नित्यं स्मयतेः । (६. १. ५७)

स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते ।

भट्टिकाव्ये— VIII. 42.

अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः ।
अविस्मापयमानस्तान् कपिराटीद्गृहाद्गृहम् ॥ 2207 ॥

ये राक्षसाः शक्रमभीषयन्त भीषितवन्तः । 'भियो हेतुभये षुक्' (सू. 2595) इति षुक् । कपिस्तान् अविस्मापयमानो विस्मयमलम्भयन् । 'भीस्म्योर्हेतुभये' (सू. 2594) इत्यत्र भय इति स्मयस्याप्युपलक्षणत्वात् उभयत्रात्मनेपदम् । अनेनात्वे 'अर्तिह्री' (सू. 2570) इत्यादिना पुक् ।

भट्टिकाव्ये—XIV. 78.

रुरुजुर्बभ्रञ्जिरे फेणुर्बहुधा हरिराक्षसाः ।
वीरा न बिभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ 2208 ॥

वीरास्सात्त्विका न बिभयाञ्चक्रुः न बिभ्यति स्म । बिभेतेरणौ परस्मैपदित्वादनुप्रयोगे परस्मैपदम् । परान् शत्रून् धैर्यगुणयुक्ताः प्रयोजका भीषयाञ्चक्रिरे भीषयन्ते स्म । 'भीस्म्योर्हेतुभये' ( सू. 2594 ) इति तङ् । 'भियो हेतुभये' ( सू. 2595 ) इति षुक् । अनुप्रयोगेऽपि तङ् ।

भट्टिकाव्ये—XVII. 81.

आलोकयत्स काकुत्स्थमधृष्णोद्धोरमध्वनत् ।
धनुरभ्रमयद्भीममभीषयत विद्विषः ॥ 2209 ॥

स रावणो विद्विषः अभीषयत त्रासितवान् । 'भीस्म्योर्हेतुभये' ( सू. 2594 ) इति तङ् । 'भियो हेतुभये' ( सू. 2595 ) इति षुक् ।

भट्टिकाव्ये—XV. 36.

प्राचूचुर्णच्च पादाभ्यामबिभीषत च द्रुतम् ।
अतर्दीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान् ॥ 2210 ॥

अबिभीषत भीषयते स्म । षुक् । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2097. रामरावणौ जगद्विस्मापयेताम् विस्मापितवन्तौ । 'भीस्म्योर्हेतुभये' ( सू. 2594 ) इति तङ् । अनेनात्वम् । 'अर्तिह्री' ( सू. 2570 ) इत्यादिना पुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1307. आत्मवृत्तौ विस्मितं दिलीपं सिंहो मनुष्यवाचा करणेन पुनः विस्मापयन् विस्मयं प्रापयन् निजगाद । ष्मिङ् ईषद्धसने इति धातोर्णिचि शतृप्रत्ययः । विस्मापयन्निति पाठे पुगागममात्रं वक्तव्यम् । तच्च 'नित्यं स्मयतेः' ( सू. 2596 ) इति हेतुभयविवक्षायामेवेति 'भीस्म्योर्हेतुभये' (सू. 2594) इत्यात्मनेपदे विस्मापयमान इति स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 731. असौ रामः यद्धवन्तं भीरुं **शैररभाययत्** भायितवान्। पुगात्मनेपदे न भवतः भयहेतोरभावात्। अत्र हि शरेभ्यो भयं न तु रामात्।

मेघसन्देशे—I. 61.

तत्रावश्यं वलयकुलिशोद्धट्टनोद्गीर्णतोयं
  नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम्।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्यात्
  क्रीडालोलाः श्रवणपरुषैर्गर्जितै**र्भाययेस्ताः** ॥ 2211 ॥

**भाययेस्ताः**। अत्र पुगात्मनेपदे न भवतः।

## २५९७। स्फायो वः। (७. ३. ४१)

णौ। स्फावयति।

भट्टिकाव्ये—XII. 76.

भ्रूभङ्गमादाय विहाय धैर्यं
  विभीषणं भीषणरूक्षचक्षुः।
गिरं जगादोग्रपदामुदग्रः
  स्वं **स्फावयन्** शक्ररिपुः प्रभावम् ॥ 2212 ॥

शक्ररिपुः रावणः स्वं प्रभावं **स्फावयन्** वर्धयन्। शतृ। वत्वम्।

भट्टिकाव्ये—XVII. 43.

ताव**स्फावयतां** शक्तीर्बाणांश्चाकिरतां मुहुः।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ 2213 ॥

ताविन्द्रजिल्लक्ष्मणौ शक्तीः सामर्थ्य**मस्फावयताम्** वर्धितवन्तौ। लङ्। वः।

अस्मिन्नेव ग्रन्थे श्लो० 2157. असौ राक्षसी बन्धूनां विक्रमं मुहुः पुनःपुन**रपिस्फवत्** स्फीतीचकार। 'अर्तिह्री' (सू. 2570) इत्यतः णावित्यनुवृत्तौ **अनेन वत्वम्**। स्फायतेश्चङ्।

२५९९ । रुहः पोऽन्यतरस्याम् । (७. ३. ४३)

णौ वा पादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 436. प्रायेण नीचानपि मेदिनीभृतः जनः समेन पथा अधिरोहति । सेना पुनः पथो मार्गानेव महामहीध्रान् परितोऽध्यरोहयत् । रोहतेर्गत्यर्थत्वात् 'गतिबुद्धि' (सू. 540) इत्यादिना पथामणिकर्तॄणां णौ कर्मत्वम् । पादेशाभावपक्षे रूपम् ।

चम्पूभारते—V. 3.

पाणिना परिमृशन्नमुमिन्द्रः पक्ष्मलीकृतजयन्तमहेर्ष्यः ।
आदरेण धुरि नाकिगणानामासनार्धमधिरोपयति स्म ॥ 2214 ॥

पादेशः ।

भट्टिकाव्ये—XIV. 8.

धनूंष्यारोपयाञ्चक्रू रुरुहुस्ते रथादिषु ।
असीनुद्ववृहुर्दीप्तान् गुर्वीरुच्चिक्षिपुर्गदाः ॥ 2215 ॥

धनूंष्यारोपयाञ्चक्रुः । णौ पादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 237. अथ विश्वामित्रः त्रिशङ्कुं दिवमारोपयामास ।

अस्मिन्नेव ग्रन्थे श्लो० 170. परिजनैर्यानादवरोप्यमाणाः । रुहेर्ण्यन्तात्कर्मणि लटश्शानजादेशः । पकारः ।

२६०० । क्रीङ्जीनां णौ । (६. १. ४८)

एषामेच आत्वं स्याण्णौ । क्रापयति । अध्यापयति । जापयति ।

अस्मिन्नेव ग्रन्थे श्लो० 1150. अध्यापयन्तं ब्रह्मविद्यां ग्राहयन्तम् । आत्वे पुगागमः ।

२६०१ । णौ च संश्चङोः । (२. ४. ५१)

सन्परे चङ्परे च णौ इङो गाङ् वा स्यात् । अध्यजीगपत् । अध्यापिपत् ।

अस्मिन्नेव ग्रन्थे श्लो० 241. सुग्रीवः कपिसमाहारं दिशामायाममध्यापिपत् बोधितवान् । इङो णौ 'क्रीङ्' (सू. 2600) इत्यात्वे 'अर्तिह्री' (सू. 2570) इत्यादिना पुक् । चङ्परे गाङभावपक्षे रूपम् ।

२६०५ । वा चित्तविरागे । (६. ४. ९१)

वा० । रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः । (4067.)

उपधानकारलोपः ।

माघे—VI. 9.

मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणा इव ।
कलतया वचसः परिवादिनी स्वरजिता रजिता वशमाययुः ॥ 2216 ॥

अपवादकरैः हरिणा यथा रजितास्तथा मधुकरैः पथिका रजिता रञ्जिताः । रञ्जेर्ण्यन्तात्कर्मणि क्तः । नलोपः । इहोपमानमृगसादृश्यात् औपचारिकं मृगत्वमुपमेयेषु पथिकेष्वप्यस्तीत्यविरोधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1000. सोऽर्जुनो मृगान् रजयाञ्चकार रमयामास । नलोपः ।

चम्पूभारते—II. 5.

ग—ततः पातालभुवि तदागमनकौतुकिना वासुकिना संमानितस्य धृतिमानितस्ततोऽष्टासु दिशासु तदनुगुणपरिगणनदिनगणमत्ययशाङ्किनिश्चितैरपत्यैस्सह विचिन्त्य वत्स रिपुभर्त्सन भीम ! क्व वा निषीदसीति विषीदन्त्या नवमपि वासरमनवममेव सञ्जनयन् प्रभञ्जनभूरमृताञ्जनैरिव दृशौ रञ्जयामास ॥ 2217 ॥

मृगरमण एव नलोपो नान्यत्र ॥

रघुवंशे—IV. 12.

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ 2218 ॥

प्रकृतिरञ्जनं न मृगरजनम् ।

॥ इति णिच्प्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ सन्नन्तप्रकरणम् ॥

—:०:—

### २६१० । सनि ग्रहगुहोश्च । ( ७. २. १२ )

ग्रहेर्गुहेरुगन्ताच्च सन इण्ण स्यात् । 'ग्रहिज्या' ( सू. 2412 ) इति सम्प्रसारणम् । जिघृक्षति ।

माघे—XIV. 7.

सम्भृतोपकरणेन निर्मलां
कर्तुमिष्टिमभिवाञ्छता मया ।
त्वं समीरण इव प्रतीक्षितः
कर्षकेण बलजान्पुपूषता ॥ 2219 ॥

पुपूषता पवितुं शोधितुम् निर्बुसीकर्तुमिच्छता । पुनातेस्सन्नन्ताल्लटः शत्रादेशः । चकारादिट्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1954. रावणं विजिघृक्षवः ।

### २६११ । किरश्च पञ्चभ्यः । ( ७. २. ७५ )

कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यस्सन इट् स्यात् । पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति ।

अस्मिन्नेव ग्रन्थे श्लो० 1954. पिपृच्छिषूणां प्रष्टुमिच्छूनाम् । प्रच्छेस्सनीडागमः ।

### २६१९ । आप्ज्ञप्यृधामीत् । ( ७. ४. ५५ )

एषामच ईस्स्यात्सादौ सनि । 'अत्र लोपोऽभ्यासस्य' ( सू. 2620 ) इत्यभ्यासलोपः ।

किरातार्जुनीये— III. 4.

धर्मात्मजो धर्मनिबन्धिनीनां
प्रसूतिमेनः प्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सु-
स्सुखोपविष्टं मुनिमाबभाषे ॥ 2220 ॥

तदभ्यागमने तस्य मुनेरागमने हेतुं परीप्सुः जिज्ञासुः । आप्नोतेस्सन्नन्तादुप्रत्ययः । ईकारः । अभ्यासलोपः ।

२६२१ । दम्भ इच्च । ( ७. ४. ५६ )

वा० । तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः । ( 5059. )

२६२२ । तनोतेर्विभाषा । ( ६. ४. १७ )

अस्योपधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति तितंसति तितनिषति । कूलं पिपतिषति । पित्सति ।

किरातार्जुनीये—VI. 15.

स जगाम विस्मयमुदीक्ष्य पुरः
सहसा समुत्पिपतिषोः फणिनः ।
प्रहितं दिवि प्रजविभिः श्वसितैः
शरदभ्रविभ्रममपां पटलम् ॥ 2221 ॥

समुत्पिपतिषोस्समुत्पतितुमिच्छोः । पतेस्सन्नन्तादुप्रत्ययः । विकल्पेनेडागमः ।

माघे—IX. 1.

अभितापसम्पदमथोष्णरुचिर्निजतेजसामसहमान इव ।
पयसि प्रपिप्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ 2222 ॥

पयसि प्रपिप्सुः प्रपतितुमिच्छुः । पतेस्सन्नन्तादुप्रत्ययः । इडभावपक्षे ‘ सनि ’ ( सू. 2623 ) इतीसादेशः ।

२६२३ । सनि मीमाघुरभलभशकपतपदामच इस् । ( ७. ४. ५४ )

एषामच इस् स्यात् । डुमिञ् मीञ्, मित्सति मित्सते । मा माने, मित्सति । माङ्मेङोः, मित्सते । दोदाणोः, दित्सति । देङ्, दित्सते । दाञ्, दित्सति दित्सते । धेट्, धित्सति । धाञ्, धित्सति धित्सते । रभ्, रिप्सते । लभ्, लिप्सते । शक्लृ, शिक्षति । शक मर्षणे, शिक्षति शिक्षते । पत, पित्सति । पद, पित्सते ।

भट्टिकाव्ये—II. 25.

क्षुद्रान्न जक्षुर्हरिणान्मृगेन्द्रा
विशश्वसे पक्षिगणैस्समन्तात् ।
नेनम्यमानाः फलदित्सयेव
चकाशिरे तत्र लता विलोलाः ॥ 2223 ॥

**दित्सया** दातुमिच्छया । ददातेस्सन् । अभ्यासलोपः । स्त्रियामप्रत्यये टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 340. रामो जनकसम्भवां **लिप्सुः** लब्धुमिच्छुः । [illegible]कारे अभ्यासलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 2222. प्रपित्सुः प्रपतितुमिच्छुः । पतेस्सन्नन्तादुप्रत्ययः । ‘ तनिपति ’ ( वा. 5059 सू. 2621. ) इतीडभावपक्षे इसादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 168. पदवीं प्रपित्सुना प्रपत्तुमिच्छुना । प्रपद्यतेस्सन्नन्तादुप्रत्ययः । इसादेशः । ‘ अत्र लोपः ’ ( सू. 2620 ) इत्यभ्यासलोपः ।

॥ इति सन्नन्तप्रकरणम् ॥

---

॥ श्रीरस्तु ॥

## ॥ अथ यङन्तप्रकरणम् ॥

—:०※०:—

### २६२९। धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। (३. १. २२)

पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः । तस्मिन् द्योत्ये यङ् स्यात्। 'सनाद्यन्ताः' (सू. 2304) इति धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्। पुनःपुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट।

अस्मिन्नेव ग्रन्थे श्लो० 71. **जाज्वल्यमाना** भृशं ज्वलन्ती। यङि लटः शानच्।

अस्मिन्नेव ग्रन्थे श्लो० 339. **रोरुयमाणः** भृशं रुदन्। रुदेर्यङन्ताल्लटश्शानच्।

### २६३०। गुणो यङ्लुकोः। (७.४.८२)

अभ्यासस्य गुणः स्यात् यङि यङ्लुकि च।

अस्मिन्नेव ग्रन्थे श्लो० 688 **लेलिहानाः** पुनः पुनर्लेहनशीलास्सर्पाः। लिहेर्यङ्लुगन्ताच्छील्ये चानश्। अभ्यासस्य गुणः।

**वा०।** सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः। (1751.)

सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते।

अस्मिन्नेव ग्रन्थे श्लो० 175. अरण्यानीमटाट्यमानः तस्यां भृशमटन्। अटतेर्यङन्ताल्लटश्शानच्।

भट्टिकाव्ये—XVII. 75.

> आटाट्यतावमत्यासौ दुर्निमित्तानि संयुगे।
> अधुनोद्धनुरक्षौघैः प्रोर्णोनूयत विद्विषः ॥ 2224 ॥

**असौ रावणः आटाट्यत** अत्यर्थमाटत्। यङ्।

भट्टिकाव्ये—XVII. 73.

ततोऽधावन्महाघोरं रथमास्थाय रावणः ।
अक्ष्मायत महीगृध्राः तमारार्यन्त भीषणाः ॥ 2225 ॥

गृध्राः तमारार्यन्त अत्यर्थं गतवन्तः । यङ् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 206. अरार्यसे । अटाट्यसे । ऋ गतौ । यङ् ।

## २६३४ । नित्यं कौटिल्ये गतौ । (३. १. २३)

गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते ।

अस्मिन्नेव ग्रन्थे श्लो॰ 609. दन्द्रम्यन्त इति दन्द्रमणान् कुटिलगमनशीलान् । द्रमु पादविक्षेपे । यङ् । 'जुचङ्क' (सू. 3130) इति युच् । अतो लोपः । यस्य लोपः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1929. कुटिलं क्रमणं गतिः चङ्क्रमा । यङ् । अप्रत्यये टाप् ।

## २६३५ । लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । (३. १. २४)

एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते । सासद्यते ।

भट्टिकाव्ये—IV. 31.

तस्याः सासद्यमानाया लोलयावान् रघूत्तमः ।
असिं कौक्षेयमुद्यम्य चकारापनसं मुखम् ॥ 2226 ॥

सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः । सदेर्यङि लटश्शानच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1705. चञ्चूर्यमाणा इतस्ततो गर्हितं चरन्ती । भावगर्हायां चरेर्यङि 'चरफलोश्च' (सू. 2636) इत्यभ्यासस्य नुक् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1604. अमराः लङ्कामभितः चञ्चूर्यन्ते गर्हितं चरन्ति । यङ् । नुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 971. जञ्जपूकः गर्हितजापी । भावगर्हायां यङ् । 'जपजभ' ( सू. 2638 ) इत्यभ्यासस्य नुक् । 'यजजप' ( सू. 3146 ) इत्यूकः ।

अस्मिन्नेव ग्रन्थे श्लो० 65. दन्दह्यते गर्हितं दहति । अनेन यङ् । 'जपजभ' ( सू. 2638 ) इति नुक् ।

माघे—XX. 58.

प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गैः ।

भयविह्वलमाशु दन्दशूकैर्विवशैराविविशे स्वमेव धाम ॥ 2227 ॥

भावगर्हितं दशन्ति भृशमिति दन्दशूकाः । यङ् । अभ्यासस्य नुक् । 'यज' ( सू. 3146 ) इत्यूकप्रत्ययः ।

## २६३६ । चरफलोश्च । (७. ४. ८७)

अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः ।

अस्मिन्नेव ग्रन्थे श्लो० 1661. चञ्चूर्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात्पचाद्यच् । अनेन नुक् । 'यङोऽचि च' ( सू. 2650 ) इति यङो लुक् ।

## २६३८ । जपजभदहदशभञ्जपशां च । (७. ४. ८६)

एषामभ्यासस्य नुक् स्यात् यङ्यङ्लुकोः । गर्हितं जपति जंजप्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 971. जञ्जपूकः गर्हितजापी । 'लुपसद' ( सू. 2635 ) इति यङ् । अनेन नुगागमः । 'यज' ( सू. 3146 ) इत्यूकप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 65. दन्दह्यते गर्हितं दहति । यङ् । नुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 2227. भावगर्हितं दशन्ति भृशमिति दन्दशूकैः । यङ् । नुक् । 'यज' ( सू. 3146 ) इत्यूकप्रत्ययः ।

## २६४० । सिचो यङि । (८. ३. ११२)

सिचः सस्य षो न स्याद्यङि । निसेसिच्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 1923. परिसेसिचाम् परितः पौनःपुन्येन सेचनम् । सिञ्चतेर्यङन्तात्स्त्रियामप्रत्यये टाप् । 'उपसर्गात्सुनोति' (सू. 2270) इत्यादिना षत्वे प्राप्तेऽनेन प्रतिषेधः ।

॥ इति यङन्तप्रकरणम् ॥

—:o:—

॥ श्रीरस्तु ॥

## ॥ अथ यङ्लुगन्तप्रकरणम् ॥

—:0:—

२६५० । यङोऽचि च । ( २. ४. ७४ )

इति यङो लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1661. चञ्चूर्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात्पचाद्यच् । 'चरफलोश्च' ( सू. 2636 ) इति नुक् । अनेन यङो लुक् ।

॥ इति यङ्लुगन्तप्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ नामधातुप्रकरणम् ॥

—:o:—

### २६५७ । सुप आत्मनः क्यच् । ( ३. १. ८ )

इषिकर्मणः एषितृसंबन्धिनः सुबन्तादिच्छायामर्थे क्यच्प्रत्ययो वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 3. वृषं पुरुषमात्मन इच्छतीति **वृषस्यन्ती** कामुकी । क्यच् । 'अश्वक्षीर' ( सू. 2662 ) इत्यसुगागमः । लटः शत्रादेशः । 'उगितश्च' ( सू. 455 ) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1705. **पतीयन्ती** पतिमात्मन इच्छन्ती । क्यच् । शतरि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1099. **वृषस्यन्ती** । पूर्ववत् क्यच् । असुगागमः । शतरि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 256. पुत्रमात्मन इच्छता **पुत्रीयता** पुत्रकामेन । अनेन क्यच् । 'क्यचि च' ( सू. 2658 ) इतीकारः । शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 611. अश्नीत पिबतेति सातत्येन यस्यां क्रियायां सा अश्नीतपिबता । गृहे सर्वनियामकत्वं स्वाम्यमिति यावत् । मयूरव्यंसकादिषु 'आख्यातमाख्यातेन क्रियासातत्ये' ( ग. सू. 20. सू. 754 ) इति समासः । तामात्मन इच्छन्ती **अश्नीतपिबतीयन्ती** । क्यचि शतरि ङीप् ।

अनर्घराघवे—V. 1.

**पुत्रीयता** दशरथेन मुनिप्रसादात्
प्राप्ताः पुराणपुरुषस्य कलाश्चतस्रः ।
तासामयं गुणमयः प्रथमः कुमारो
वीरोद्धतः पुनरसावपरस्तृतीयः ॥ 2228 ॥

**पुत्रीयता** । पूर्ववत् ।

२६६१ । अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । (७. ४. ३४)

क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति ।

अस्मिन्नेव ग्रन्थे श्लो० 2141. ते जनाः च्युताशनायाः निवृत्तक्षुधः । उदन्यां पिपासाम् । क्यच् । 'अ प्रत्ययात्' (सू. 3279) इत्यकारप्रत्ययः । टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 924. उदकमिच्छन् उदन्यन् पिपासुः । उदन्यतेश्शतृप्रत्ययः ।

किरातार्जुनीये—XIII. 56.

सावलेपमुपलिप्सते परै-
रभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु न महान्समीहते
जीवितं किमु धनं धनायितुम् ॥ 2229 ॥

धनमात्मन एषितुं धनायितुम् । क्यच् । निपातनादाकारः ।

२६६२ । अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । (७. १. ५१)

एषां क्यचि असुगागमः स्यात् ।

वा० । अश्ववृषयोर्मैथुनेच्छायाम् । (4309.)

अश्वस्यति बडवा । वृषस्यति गौः ।

वा० । क्षीरलवणयोर्लालसायां । (4315.)

क्षीरस्यति बालः । लवणस्यति उष्ट्रः ।

वा० । सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ । (4616-4617.)

दधिस्यति दध्यस्यति । मधुस्यति मध्वस्यति ।

अस्मिन्नेव ग्रन्थे श्लो० 3. वृषं पुरुषमात्मन इच्छतीति वृषस्यन्ती कामुकी । वृष आत्मनः क्यच् । अनेनासुगागमः । शतरि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1099. वृषस्यन्ती । पूर्ववत् ।

चम्पूरामायणे—III. 17.

**वृषस्यन्ती** वृषस्कन्धं राघवं रावणानुजा ।
भूयः शूर्पणखा भेजे शूर्पकारातिबाधिता ॥ 2230 ॥

**वृषस्यन्ती** । पूर्ववत् ।

## २६६३ । काम्यच्च । (३. १. ९)

उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति । स्वःकाम्यति । क्यच् तु न । किमिच्छति । इदमिच्छति । स्वरिच्छति ।

भट्टिकाव्ये—XVIII. 24.

बिभ्रत्यस्त्राणि सामर्षा **रणकाम्यन्ति** चामराः ।
चकासति च मांसादां तथा रन्ध्रेषु जाग्रति ॥ 2231 ॥

अमरा **रणकाम्यन्ति** आत्मनो रणमिच्छन्ति । काम्यच् ।

माघे—XIX. 65.

रयेण **रणकाम्यन्तौ** दूरादुपगताविभौ ।
गतासुरन्तरा दन्ती वरण्डक इवाभवत् ॥ 2232 ॥

**रणकाम्यन्तौ** रणमात्मन इच्छन्तौ । रणशब्दात्काम्यच् । सनाद्यन्तधातुत्वात् लटश्शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 589. **पुत्रकाम्या** आत्मनः पुत्रेच्छा । पुत्रशब्दात्काम्यजन्तात् अप्रत्यये टाप् ।

भट्टिकाव्ये—V. 44.

त्वं तु भीरुरसुदुर्बुद्धे नित्यं **शरणकाम्यसि** ।
गुणांश्चापह्नुषेऽस्माकं स्तौषि शत्रूंश्च नस्तथा ॥ 2233 ॥

**शरणकाम्यसि** शरणमात्मन इच्छसि ।

अस्मिन्नेव ग्रन्थे श्लो० 1832. **यशस्काम्यन्** यश आत्मन इच्छन्। काम्यचि शतृ। 'पाशकल्पककाम्येषु'। (वा. 5033. सू. 152) इति विसर्जनीयस्य सत्वम्।

## २६६४। उपमानादाचारे। (३. १. १०)

उपमानात्कर्मणस्सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्।

वा०। अधिकरणाच्चेति वक्तव्यम्। (1717.)

प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे।

## २६६५। कर्तुः क्यङ् सलोपश्च। (३. १. ११)

उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्। कृष्ण इवाचरति कृष्णायते।

वा०। ओजसोऽप्सरसो नित्यमितरेषां विभाषया। (1719-1720.)

ओजायते। अप्सरायते। यशायते यशस्यते। विद्वायते विद्वस्यते।

चम्पूभारते—VI 86.

संख्याय यानेषु समारुरुक्षा-
केलिस्पृशां कीचकबान्धवानाम्।
अश्वप्रसङ्गेऽप्यभिधीयमानो
गन्धर्वशब्दो **गरलायते** स्म॥ 2234॥

गन्धर्वशब्दो **गरलायते** स्म। क्यङन्तात्कर्तरि लट्।

अस्मिन्नेव ग्रन्थे श्लो० 1206. ध्यानेन। कर्तरि तृतीया। **जीमूतनादायितम्**। **पुण्याहघोषायितम्**। **माङ्गल्यतूर्यायितम्**। सर्वत्र क्यङन्ताद्भावे क्तः।

चम्पूरामायणे—IV. 23.

दत्तार्जुनविलासेन धार्तराष्ट्रान्निरस्यता ।
तेन जीमूतकालेन देवकीनन्दनायितम् ॥ 2235 ॥

जीमूतकालेन देवकीनन्दनायितम् । पूर्ववत् ।

भट्टिकाव्ये—V. 76.

**ओजायमाना** तस्याध्र्यं प्रदाय जनकात्मजा ।
उवाच दशमूर्धानं सादरा गद्गदं वचः ॥ 2236 ॥

ओज इवाचरन्ती **ओजायमाना** ।

अस्मिन्नेव ग्रन्थे श्लो० 1801. अप्सरा इवाचरन्तीति **अप्सरायमाणा** अप्सरःकल्पाः । 'कर्तुः' (सू. 2665) इति क्यङन्ताच्छानच् । ओजसो नित्यं सलोपः ।

चम्पूभारते—II. 97.

ग.—तत्र मुहूर्तगुणेष्विव समन्ता**दोजायमानेषु** दीपेषु मन्त्रविदां वदनेष्विव शब्दायमानेषु वाद्येषु कुलपालिकाः कमनीयमणिकोरकितैः कनकभूषणैरविकृतसहजरामणीयकां कन्यकाममीषां सकाशे निवेशयामासुः ॥ 2237 ॥

**वा० । सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः । (1722.)**

चम्पूभारते—V. 27.

त्रस्तस्य तद्वपुरुदीक्ष्य सजातिशङ्कि-
मैनाकसंशय**कुठारित**पक्षलोपम् ।
मोहे यथा नयनयोर्मुकुलीबभूव
बोधे तथैव करयोरपि युग्ममस्य ॥ 2238 ॥

कुठार इवाचरितः **कुठारितः** । क्विबन्तात्कर्तरि क्तः ।

विश्वगुणादर्शे—71.

**अश्मामास** तृणं प्रियाद्रुहि **तृणामास** स्मरारेर्धनु-
**र्दारामास** मुनेश्शिलापि **नृवरामास** स्वयं पादुका ।

कुल्यामास महार्णवोऽपि कपयो योधाम्बभूवुस्तथा
पौलस्त्यो मशकाम्बभूव बहुना त्वं मानुषामासिथ ॥ 2239 ॥

अस्त्रामास आयुधवदाचचार । तृणामास । दारामास । नृवरामास । कुल्यामास । योधाम्बभूवुः । मशकाम्बभूव । त्वं मानुषामासिथ । अस्त्रादि-शब्दादाचारार्थे क्विपि लिट्याम्प्रत्ययः । अस्तेर्भवतेर्वानुप्रयोगः । 'कयङ्' (सू. 837) इति पुंवद्भावः ।

२६६७ । भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः । ( ६. १. १२ )

अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्याद्धलन्तानामेषां लोपश्च । अभृशो भृशो भवति भृशायते । भृशादिः— २. १.

भट्टिकाव्ये—XVII. 93.

राघवस्याभृशायन्त सायकैस्तैरुपद्रुतः ।
ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्यशोषयत् ॥ 2240 ॥

बाणा अभृशायन्त अभृशा भृशा अभवन् । शीघ्रगतयो जाता इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2008. ते कान्ति विलोक्य को नाभिमनायेत नोत्सुकायेत । क्यङ् । सम्भावनायां लिङ् ।

भट्टिकाव्ये—V. 74.

दुःखायते जनस्सर्वस्स एवैकस्सुखायते ।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ 2241 ॥

यस्यान्तिके त्वमुत्सुकायमाना उत्सुका भवन्ती न प्रतीपायसे अप्रतिकूला भवसि । उभयत्रापि भृशादित्वात्क्यङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 276. अपण्डितः पण्डितो भवन् पण्डितायमानः । भृशादित्वात् क्यङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 207. कपिः मन्दायमानगमनः सुप्तजनप्रबोधशङ्कया मन्दीभवद्गतिः । क्यङन्ताल्लटश्शानच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 690. अशीघ्रैः शीघ्रैर्भवद्भिः **शीघ्रायमाणैः** । भृशादिक्यङन्ताल्लटश्शानच् ।

भट्टिकाव्ये—XI. 27.

पयोधरांश्चन्दनपङ्कदिग्धान्
वासांसि चामृष्टमृजानि दृष्ट्वा ।
स्त्रीणां सपत्न्यो जहृषुः प्रभाते
**मन्दायमाना**नुशयैर्मनोभिः ॥ 2242 ॥

मेघसन्देशे—I. 38.

तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं
**मन्दायन्ते** न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ 2243 ॥

न **मन्दायन्ते** खलु न मन्दा भवन्ति हि ।

चम्पूभारते—I. 82.

ग—एवं वत्सभावेऽपि भक्तिमत्सु तेषु निजपितृवत्सलतामसकृत्समीक्ष्य मत्सरेण **दुर्मनायमानो** हृदयालवाले सुयोधनो राधेयप्रधानदुर्बोधनमेघोत्सेचसविषधरणीरुहमधिरूढामकुतोनिरोधां विरोधविषवीरुधमेधाञ्चक्रे ॥ 2244 ॥

**दुर्मनायमानः** दुर्मना भवन् । भृशादित्वात्क्यङ् । शानच् ।

**२६६८ । लोहितादिडाज्भ्यः क्यष् । (३. १. १३)**

लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् ।

**२६६९ । वा क्यषः । (१. ३. ९०)**

क्यषन्तात्परस्मैपदं वा स्यात् । लोहितायति लोहितायते । पटपटायति **पटपटायते** ।

यत्तु—

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी ॥

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति । तद्भाष्यवार्तिकविरुद्धम् । तस्मात्तेभ्यः क्यङेव । श्यामायते । लोहितादिः—३. २.

किरातार्जुनीये—IX. 4.

गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ ।
आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्यभितापः ॥ 2245 ॥

सहस्रमरीचौ लोहितो भवतीति **लोहितायति** । क्यष् । परस्मैपदम् । शतृप्रत्ययः ।

किरातार्जुनीये—XII. 4.

न पपात सन्निहितपक्तिसुरभिषु फलेषु मानसम् ।
तस्य शुचिनि शिशिरे च पयस्यमृतायते हि सुतपस्सुकर्मणाम् ॥ 2246 ॥

सुतप एवामृतायते अमृतवदाचरति । क्यष् । अनेनात्मनेपदम् । लोहितादिराकृतिगणः ।

अस्मिन्नेव ग्रन्थे श्लो० 1204. सितापि **तिक्तायते** तिक्ता भवति । क्यष् । आत्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 207. **मन्दायमान**गमनः मन्दीभवद्गतिः । भृशादिक्यङन्तालटः शानच् । मन्दशब्दस्य लोहितादित्वात् क्यषि विकल्पादात्मनेपदम् । **हरितायन्तः** पलाशवर्णा भवन्तः । लोहितादिक्यषन्तात अनेन परस्मैपदम् । शतृ । **शकशकायद्भिः** । 'अव्यक्तानुकरणे' (सू. 2128) इति डाच् । द्विर्वचनम् । अनेन क्यष् । विकल्पात्परस्मैपदम् । शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 1380. अश्यामानि श्यामानि भवन्तीति **श्यामायमानानि** । क्यष् । आत्मनेपदम् । शानच् ।

चम्पूभारते—I. 67.

ग—अथ कदाचिदखिलहरिदन्तरनिरन्तरवलमानमलयपवमानकम्पितचम्पक-सम्पादितसौरभसम्पदनुकम्पितनिलिम्पपथाः मनसिजविजयसहकारचतुरसहकारपल्लवतल्लजपरिचर्वण**गर्वायमाण**कलकण्ठयुवकण्ठोक्तपथिकजनसन्दोहजीवितसन्देहा वनदेवतावदनतिलकायमानतिलकावलिकलिकापलितंभावुकनभोविभागा मदनहुतभुगङ्गारसदृशकमलभृङ्गारुमधुरससञ्चारचितमदभृङ्गारवविभवतुङ्गारहितमिथुनशृङ्गाररसाः समुन्मिषद्वासन्तिकामिषेण सीमन्तिनीरतेरुदन्तं दुरन्तं विचिन्त्य रहसि वसन्तं नृपं तं हसन्त इव वसन्तोदयवासरा मन्दंमन्दमरण्याङ्कधरण्यां कमपि विकासमापादयामासुः ॥ 2247 ॥

**गर्वायमाणः** क्यष् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1928. वानराः **किलकिलायन्तः** किलकिलाशब्दं कुर्वाणाः । डाचि क्यषि पक्षे परस्मैपदम् ।

अनर्घराघवे—V. 12.

तत्तादृग्दशकण्ठवञ्चनरुषा **धूमायमानो** गिरं
नार्घोक्तप्रविलीनवर्णविधुरामार्यः समाप्नोति मे ।
चापे तातजटायुजीवितकथापर्यन्तधूमायित-
क्रोधोत्पीडनिपीतशोकजडिमा दृष्टिस्तु विश्राम्यति ॥ 2248 ॥

**धूमायमानः** धूममुद्वमन् । 'फेनाच्च' (वा. 1734. सू. 2672) इति चकारात्क्यङ् इति व्याख्याने ।

## २६७० । कष्टाय क्रमणे । (३. १. १४)

चतुर्थ्यन्तात्कष्टशब्दात् उत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहते इत्यर्थः ।

**वा॰ । सत्त्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ।** (1761.)

कण्वं पापम् । सत्त्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यः चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदविग्रहः । सत्त्रायते कक्षायत इत्यादि ।

भट्टिकाव्ये—XVII. 96.

ततः प्रोदसहन्तसर्वे योद्धुमभ्यद्रवन्परान् ।
**अकृच्छ्रायत** च प्राप्तो रथेनान्येन रावणः ॥ 2249 ॥

रावणः **अकृच्छ्रायत** कृच्छ्राय पापाय कर्मणे क्रमितवान् । क्यङ् ।

**२६७१ । कर्मणो रोमन्थतपोभ्यां वर्तिचरोः । ( ३. १. १५ )**

रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते ।

**वा०** । हनुचलन इति वक्तव्यम् । ( 1762. )

चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थः ।

**वा०** । तपसः परस्मैपदं च । ( 1766. )

तपश्चरति तपस्यति ।

भट्टिकाव्ये—VI. 70.

नायास्यसि **तपस्यन्ती** गुरूनसम्यगतूतुषः ।
यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः ॥ 2250 ॥

**तपस्यन्ती** तपश्चरन्ती । क्यङ् । परस्मैपदम् । शतरि ङीप् ।

भट्टिकाव्ये—XVIII. 21.

शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः ।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः ॥ 2251 ॥

वनौकसो मुनयः **तपस्यन्ति** तपश्चरन्ति ।

नैषधे—I. 82.

विदर्भसुभ्रूस्तनतुङ्गतासये
घटानिवापश्यदलं **तपस्यतः** ।

फलानि धूमस्य धयानधोमुखान्
सदाडिमे दोहदधूपिनि द्रुमे ॥ 2252 ॥

**तपस्यतः** तपश्चरतः । क्यङ् । शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 82. **तपस्यतः** ।

२६७२ । **बाष्पोष्मभ्यामुद्वमने** । ( ३. १. १६ )

आभ्यां कर्मभ्यां क्यङ् स्यात् । बाष्पमुद्वमति बाष्पायते । ऊष्मायते ।

वा० । फेनाच्चेति वक्तव्यम् । ( 1764. )

फेनायते ।

अस्मिन्नेव ग्रन्थे श्लो० 1147. **बाष्पायमाणः** बाष्पमुद्वमन् ।

चम्पूभारते—V. 100.

ग—तत्र कदाचिदाश्रमद्वारि हा हा महाभागाः ! मम होमसाधनमरणिमपहृत्य हरिणोऽयमितो धावतीति **बाष्पायमाणस्य** कस्यचिदग्रजन्मनः शोकनिवारणाय चक्रीकृत्य चापमनुधावतस्तान् पार्थान् पार्श्वलताताडनानुपक्तनवकिसलयजालमुल्लवनवेगपवनबहिर्ज्वलद्वह्निशिखाकन्दलमिवारणिं विषाणया बिभ्राणः कतिपुचित्पदेषु सुग्रह इव कतिषुचिद्दुरासद इव विचित्रगतिः कोऽपि कृष्णसारो दूरमाकृष्य स्वयमन्तरधात् ॥ 2253 ॥

**बाष्पायमाणस्य** ।

चम्पूभारते—V. 108.

वत्स द्वेषिनियुद्धजीवनभुज प्रख्यानिधे मारुते
कर्णाकर्णिकया निशम्य भवता प्राप्तामवस्थामिमाम् ।
शोकेनानिशमेकचक्रनगरीभाजां च **बाष्पायितुं**
स्वस्रीयैस्सह सौबलस्य च मुदा कोऽप्येष कालो ह्यभूत् ॥2254॥

**बाष्पायितुम्** । क्यङन्तात्तुमुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1464. **ऊष्मायमाणः** तेज उद्वमन् । क्यङ् ।

माघे—III. 72.

आश्लिष्टभूमिं रसितारमुच्चै-
र्लोलद्भुजाकारबृहत्तरङ्गम् ।
**फेनायमानं** पतिमापगाना-
मसावपस्मारिणमाशशङ्के ॥ 2255 ॥

**फेनायमानं** फेनमुद्गमन्तम् । अनेन क्यङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1365. **फेनायमानः** ।

अनर्घराघवे—II. 70.

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिका-
संवर्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः ।
अप्युच्चैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
बिम्बेनेव तमोमयो निधिरपामह्नाय **फेनायते** ॥ 2256 ॥

**फेनायते** फेनमुद्गमति ।

२६७३ । **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** । ( ३. १. १७ )

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । पक्षे तत्करोतीति णिजपीष्यत इति न्यासः । शब्दयति ।

**वा० । सुदिनदुर्दिननीहारेभ्यश्च । ( 1736 - 1737. )**

सुदिनायते ।

अस्मिन्नेव ग्रन्थे श्लो० 1914. **शब्दायमानानि** शब्दं कुर्वाणानि । क्यङन्ताल्लटश्शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1214. **शब्दायमानं** शब्दं कुर्वाणम् ।

भट्टिकाव्ये—XVII. 91.

तामापतन्तीं सौमित्रिस्त्रिधाकृन्तच्छिलीमुखैः ।
**अशब्दायन्त** पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ 2257 ॥

पश्यन्तः अशब्दायन्त शब्दं कृतवन्तः । क्यङन्ताल्लङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2237. शब्दायमानेषु शब्दं कुर्वाणेषु ।

अस्मिन्नेव ग्रन्थे श्लो० 276. वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः । क्यङि शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 366. वैरायते वैरं करोति । क्यङ् ।

माघे—II. 115.

सविशेषं सुते पाण्डोर्भक्तिं भवति तन्वति ।
वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥ 2258 ॥

परे शत्रवः स्वयमेव वैरायितारो वैरं कर्तारः । क्यङन्तात्कर्तरि लुट् ।
अस्मिन्नेव ग्रन्थे श्लो० 1980. कलहायमानान् युद्धं कुर्वाणान् ।
अस्मिन्नेव ग्रन्थे श्लो० 1736. कलहायन्ते कलहं कुर्वन्ति । क्यङ् ।

अनर्घराघवे—V. 23.

ग—वत्स लक्ष्मण ! दुरात्मना दनुकबन्धेन कलहायमानो वयस्यस्ते गुह इव श्रूयते । बहुच्छलानि रक्षांसि । तत्त्वरितमभ्युपपद्यस्व ॥ 2259 ॥

कलहायमानो युद्धं कुर्वन् ।

अनर्घराघवे—III. 10.

लुम्पन्नदृष्टजामातृसम्पदां शुचमद्य नः ।
त्वदागमनजन्मायमानन्दस्सुदिनायते ॥ 2260 ॥

आनन्दो नस्सुदिनायते सुदिनं करोति । अनेन क्यङ् ।

२६७४ । सुखादिभ्यः कर्तृवेदनायाम् । (३. १. १८)

सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्यात् । सुखादिः—३. ३.

अस्मिन्नेव ग्रन्थे श्लो० 2241. सर्वो जनो दुःखायते दुःखमनुभवति । स एक एव सुखायते सुखमनुभवति । उभयत्रापि क्यङ् ।

चम्पूरामायणे—IV. 12.

अयमसुखयदेवं देव धीमान् हनूमान्
रिपुरिति भवतोऽपि त्रस्तमस्तौजसं माम् ।
दवहुतवहधूमस्तोम इत्यम्बुवाहा-
च्चकितमिव मयूरं मारुतो वारिशीतः ॥ 2261 ॥

हनूमान्मामसुखयत् ।

२६७५ । नमोवरिवश्चित्रङः क्यच् । (३. १. १९)

करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये च । नमस्यति देवान् । पूजयतीत्यर्थः । वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ।

अस्मिन्नेव ग्रन्थे श्लो० 2251. अमरास्ते बन्धून् नो **नमस्यन्ति** । न **वरिवस्यन्ति** न परिचरन्ति । क्यच् ।

अस्मिन्नेव ग्रन्थे श्लो 2120. घनोदयाश्चित्र**वीयन्ते** । चित्रङ आश्चर्ये । क्यच् ।

अस्मिन्नेव ग्रन्थे श्लो० 217. **नमस्यन्तं** प्रणमन्तम् । क्यचि लटः शत्रादेशः ।

चम्पूरामायणे—V. 47.

सोऽपि प्लवङ्गमभिवीक्ष्य समीरपुत्रं
**चित्रीयमाण**हृदयः पिशिताशनेन्द्रः ।
कैलासशैलचलनागसि शापदायी
नन्दीश्वरस्स्वयमुपागत इत्यमंस्त ॥ 2262 ॥

**चित्रीयमाण**हृदयः ।

भट्टिकाव्ये—XVII. 51.

**अम्मीनवरिवस्यंश्च तेऽनमस्यंश्च** शङ्करम् ।
द्विजानप्रीणयञ्शान्त्यै यातुधाना भवद्विधः ॥ 2263 ॥

ते अग्नीनवरिवस्यन् परिचारितवन्तः । वरिवसः परिचर्यायां क्यच् । तदन्ताल्लङ् । शङ्करं अनमस्यन् पूजितवन्तः । नमसः पूजायां क्यच् । तदन्ताल्लङ् ।

अस्मिन्नेव ग्रन्थे श्लो 2201. रामः शस्त्रौघैः अचित्रीयत आश्चर्यीभूतः । चित्रङ आश्चर्ये क्यच् । तदन्ताल्लङ् ।

नैषधे—VI. 97.

> वर्षेषु यद्भारतमार्यधुर्याः स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु ।
> तत्रास्मि पत्युर्वरिवस्ययाहं शर्मोर्मिकिम्मीरितधर्मलिप्सुः ॥ 2264 ॥

वरिवस्यया शुश्रूषया । 'वरिवस्या तु शुश्रूषा' II. vii. 35. इत्यमरः । वरिवस्यतेः क्यजन्तात् 'अ प्रत्ययात्' (सू. 3279) इत्यकारप्रत्यये टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 367. वरिवस्यत परिचरत । लोट् ।

अस्मिन्नेव ग्रन्थे श्लो 1480. चित्रीयमाणश्रीत्रीभवन् । चित्रङ आश्चर्ये । क्यचि शानच् ।

२६७६ । पुच्छभाण्डचीवराण्णिङ् । (३. १. २०)

वा० । पुच्छादुदसने व्यसने पर्यसने च । (1746.)

विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते ।

वा० । भाण्डात्समाचयने । (1744.)

संभाण्डयते भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः ।

वा० । चीवरादार्जने परिधाने च । (1745.)

सञ्चीवरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः ।

अनर्घराघवे—VI. 1.

> दग्धाः प्रदीप्तपावकपरिचयपिण्डस्थहेमवेश्मानः ।
> क्षणमुत्पुच्छयमाने हनुमति लङ्कापुरोद्देशाः ॥ 2265 ॥

हनुमत्युत्पुच्छयमाने पुच्छमुत्क्षिपति सति । णिङ् ।

अनर्घराघवे—VI. 39.

दशमुखशरपीडितापगानो-
घमपरिपुच्छयमानवानराणि ।
सरभसमभिसान्त्वयन्बलानि
द्विपममियोधयति प्लवङ्गराजः ॥ 2266 ॥

परिपुच्छयमानः पुच्छं पर्यस्यन् । इतस्ततो नयन्नित्यर्थः । णिङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1321. मात्राः कमण्डल्वादिकं सम्भाण्डच्य समाचित्य । राशीकृत्येत्यर्थः । अनेन णिङ् ।

अनर्घराघवे—II. 68.

प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरी-
वल्याभिर्मृगधूपवल्लिभिरमी संमीलितव्यञ्जनाः ।
श्वःसञ्चीवरयिष्यमाणवटुकन्याधूतशुष्यत्त्वचो
निद्राणातिथयस्तपोधनगृहाः कुर्वन्ति नः कौतुकम् ॥ 2267 ॥

सञ्चीवरयिष्यमाणाः परिधास्यमानाः । परिधानार्थे णिङ् ।

२६७७ । मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । ( ३. १. २१ )

कृञर्थे । मुण्डं करोति मुण्डयति ।

वा० । व्रताद्भोजनतन्निवृत्त्योः । ( 5060. )

पयः शूद्रान्नं वा व्रतयति ।

वा० । वस्त्रात्समाच्छादने । ( 5061. )

संवस्त्रयति ।

वा० । हल्यादिभ्यो ग्रहणे । ( 5062. )

वा० । हलिकल्योरदन्तत्वं च निपात्यते । ( 1747. )

हलिं कलिं वा गृह्णाति हलयति कलयति । महद्धलं हलिः । कृतं गृह्णाति कृतयति । तूस्तानि विहन्ति वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे ।

अस्मिन्नेव ग्रन्थे श्लो० 1321. वस्त्रे संवस्त्र्य समाच्छाद्य । अनेन णिच् । तदन्तात् क्त्वो ल्यप् ।

भट्टिकाव्ये—XVII. 54.

अदिहंश्चन्दनैः शुभ्रैर्विचित्रं समवस्त्रयन् ।
अधारयन्स्रजः कान्ता वर्म चान्ये दधुर्द्रुतम् ॥ 2268 ॥

विचित्रं शोभनं समवस्त्रयन् आच्छादितवन्तः । पूर्ववत् णिचि लङ् ।

॥ इति नामधातुप्रकरणम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ कण्ड्वादिप्रकरणम् ॥

—:o※o:—

### २६७८ । कण्ड्वादिभ्यो यक् । ( ३. १. २७ )

एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । कण्ड्वादिः—३. ४.

अस्मिन्नेव ग्रन्थे श्लो॰ 2008. वल्गूयन्तीं मनो हरन्तीम् । न मन्तूयति न कुप्यति । नेर्ष्यतीत्यर्थः । उभयत्र धातोः कण्ड्वादित्वाद्यक् ।

भट्टिकाव्ये—XVI. 31.

**मन्तूयिष्यति** यक्षेन्द्रो **वल्गूयिष्यति** नो यमः ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ 2269 ॥

यक्षेन्द्रो दाशरथिमापन्नं श्रुत्वा **मन्तूयिष्यति** दुर्मना भविष्यति । यमश्च न **वल्गूयिष्यति** हृष्टमना न भविष्यति । मन्तुवल्गुशब्दाभ्यां कण्ड्वादिभ्यो यक् । तदन्ताल्लृट् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 392. पार्थश्चित्राङ्गदया सह **सुखयन्** सुखमनुभवन् । सुखयतेः कण्ड्वादेर्यगन्ताल्लटः शत्रादेशः ।

रघुवंशे—II. 37.

**कण्डूयमानेन** कटं कदाचि-
द्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच
सेनान्यमालीढमिवासुरास्त्रैः ॥ 2270 ॥

**कण्डूयमानेन** ।

॥ इति कण्ड्वादिप्रकरणम् ॥

—o※o—

॥ श्रीरस्तु ॥

## ॥ अथात्मनेपदप्रकरणम् ॥

—:०:—

'अनुदात्तङित आत्मनेपदम्' (सू. 2157)। आस्ते। शेते। 'म्रियतेर्लुङ्लिङोश्च' (सू. 2538)। म्रियते। 'भीस्म्योर्हेतुभये' (सू. 2594)। भीषयते। 'लियः सम्माननशालीनीकरणयोश्च' (सू. 2592)। लापयते। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (सू. 2158)। गूहमानः 'अभिवादिदृशोः' (वा. 1114. सू. 541)। अभिवादयते। 'शदेः शितः' (सू. 2362)। शीयते।

### २६७९। भावकर्मणोः। (१. ३. १३)

इत्यात्मनेपदम्। बभूवे। अनुबभूवे।

अस्मिन्नेव ग्रन्थे श्लो० 933. हनुमतार्केणेव **अभायत** अदीप्यत। तेन **गम्यमानम्**। कर्मणि शानच्। भातेर्गमेश्च क्रमात् भावकर्मणेरात्मनेपदम्।

अस्मिन्नेव ग्रन्थे श्लो० 291. मया **किमास्यते** किमर्थं स्थीयते। आसेर्भावे लट्।

माघे—XX. 79.

श्रिया जुष्टं दिव्यैस्सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः **स्तूयमानं** निरीय।
प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम **वीक्षाम्बभूवे** ॥ 2271 ॥

ऋषिगणैः **स्तूयमानम्**। कर्मणि शानच्। चैद्यस्य धाम तेजः नरेन्द्रैर्वी**क्षांबभूवे** वीक्षितम्। ईक्षतेः कर्मणि लिट्। अनेनात्मनेपदम्।

### २६८०। कर्तरि कर्मव्यतिहारे। (१. ३. १४)

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात्। व्यतिलुनीते।

## २६८१ । न गतिहिंसार्थेभ्यः । (१. ३. १५)

भट्टिकाव्ये—VIII. 3.

वियति व्यत्यतन्वातां मूर्ती हरिपयोनिधी ।
व्यत्यैतां चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ 2272 ॥

हरिपयोनिधी हनूमत्सागरौ वियति मूर्ती शरीरे **व्यत्यतन्वाताम्** मिथो मत्सराद्व्यतिहारेणावर्धयतामित्यर्थः । तनोतेर्लङि अनेन तङ् । परस्परकरणं कर्मव्यतिहारः । मार्गं **व्यत्यैतां** अन्योन्यमत्यक्रामताम् । इणो गत्यर्थात्कर्मव्यतिहारे लङि तसस्तामादेशः । अनेन निषेधान्न तङ् ।

भट्टिकाव्ये—VIII. 4.

व्यतिजिग्ये समुद्रोऽपि न धैर्यं तस्य गच्छतः ।
व्यत्यगच्छच्च न गतं प्रचण्डोऽपि प्रभञ्जनः ॥ 2273 ॥

गच्छतः तद्गतिप्रतिबन्धाय वर्धमानमात्मानं विजित्य लङ्घयतस्तस्य मारुतेर्धैर्यमुत्साहं समुद्रोऽपि न **व्यतिजिग्ये** । स्वजयिनं तं प्रतिजेतुं न शशाकेत्यर्थः । जयतेर्लिट् । अनेन तङ् । गच्छतः आत्मानमतीत्य धावतस्तस्य गतं गतिं प्रचण्डः प्रभञ्जनोऽपि न व्यत्यगच्छत् न व्यतिचक्राम । अनेन प्रतिषेधात् कर्मव्यतिहारेऽपि न गमेरात्मनेपदम् ।

भट्टिकाव्ये—VIII. 5.

व्यतिघ्नतीं व्यतिघ्नन्स राक्षसीं पवनात्मजः ।
जघानाविश्य वदनं निर्याभित्त्वोदरं द्रुतम् ॥ 2274 ॥

स पवनात्मजो **व्यतिघ्नन्तीं** घाते घातं कुर्वतीम् । व्यतिपूर्वात् हन्तेः शतरि ङीप् । व्यतिशब्दः कर्मव्यतिहारद्योतनार्थः । राक्षसीं समुद्रादुत्थितां काञ्चन नक्तञ्चरीं **व्यतिघ्नन्** स्वयमपि घाते घ्नन्नेव । पूर्ववत् शतृ । अनेन निषेधादुभयत्र कर्मव्यतिहारेऽपि नात्मनेपदम् ।

अनर्घराघवे—III. 17.

स्मरन्ति लोकार्थममी किल श्रुती-
रिति प्रतिष्ठामधिगन्तुमीश्महे ।
परं यदेषां पुनरस्ति वैभवं
तदेत एव व्यतिविद्रते यदि ॥ 2275 ॥

व्यतिविद्रते अन्योन्यं जानन्ति । विद ज्ञाने इत्यस्मात् व्यतिपूर्वात् 'कर्तरि कर्मव्यतिहारे' (सू. 2680) इति तङ् । 'वेत्तेर्विभाषा' (सू. 2701) इति रुट् ।

## २६८२ । इतरेतरान्योन्योपपदाच्च । (१. ३. १६)

वा० । परस्परोपपदाच्चेति वक्तव्यम् । (900.)

इतरेतरस्य अन्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ।

अस्मिन्नेव ग्रन्थे श्लो० 1722. उदन्वान् प्रेयुषी निशाचरी च अन्योन्यमन्योन्यस्य शब्दान् शब्दैस्सह व्यतियुतः स मिश्रीकुरुतः स । यु मिश्रण इति धातोः 'लट् स्मे' (सू. 2778.) इति भूते लट् । अत्रापि कर्मव्यतिहारे आत्मनेपदस्य अनेन प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1947. इमाः अन्योन्येषां दानोद्भेदान् करादिमदस्थानानि पुष्करैरामृशन्तः प्रायुध्यन्त युद्धं चक्रुः । कर्तरि लङ् । अनुदात्तेत्वलक्षणोऽत्र तङ् ।

## २६८३ । नेर्विशः । (१. ३. १७)

आत्मनेपदम् । निविशते ।

भट्टिकाव्ये—VIII. 7.

न्यविक्षत महाग्राहसङ्कुलं मकरालयम् ।
सैका बहूनां कुर्वाणा नक्राणां स्वाशितंभवम् ॥ 2276 ॥

सा राक्षसी मकरालयं न्यविक्षत प्राविक्षत् । विशेर्लुङि अनेनात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 274. त्वं मे मनः कर्म अभिन्यविक्षथाः । मनसि निविष्टासीत्यर्थः । अभिनिपूर्वाद्विशेर्लुङ् । अनेन तङ् । 'अभिनिविशश्च' (सू. 543) इत्याधारस्य मनसः कर्मत्वम् ।

माघे—I. 19.

स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामतनुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं
सुमेरुशृङ्गस्य तदा तदासनम् ॥ 2277 ॥

स हरिर्यत्रासने । 'अभिनिविशश्च' (सू. 543) इत्यस्य वैकल्पिकत्वात् अत्र सप्तमी । पूर्वस्मिन् मकरालयमिति कर्म । न्यविक्षत उपविष्टवान् । अनेनात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1733. सुग्रीवः किष्किन्धाद्रिं न्यविशत प्राविशत् । तङ् ।

रघुवंशे—XII. 38.

इत्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयात् ।
रूपं शूर्पणखा नाम्नस्सदृशं प्रत्यपद्यत ॥ 2278 ॥

भयाद्भर्तुरङ्के निविशतीम् आलिङ्गन्तीम् । [1]अत्र परस्मैपदं चिन्त्यम् ।

२६८४ । परिव्यवेभ्यः क्रियः । (१. ३. १८)

अकर्त्रभिप्रायार्थमिदम् । परिक्रीणीते, विक्रीणीते, अवक्रीणीते ।

भट्टिकाव्ये—VIII. 8.

कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् ।
पित्रा संरक्षितं शक्रात् स मैनाकाद्रिमैक्षत ॥ 2279 ॥

वायोरुपकृतम् । कृतेन प्रत्युपकारेण विश्रमदानरूपेण परिक्रीणानं विनिमिन्वन्तम् । उपकारस्य प्रत्युपकारं कुर्वाणमित्यर्थः । क्रीणातेरात्मनेपदम् ।

---

1 निर्विशतीमिति पाठपक्षे नेयमनुपपत्तिः ।

## २६८५ । विपराभ्यां जेः । (१. ३. १९)

विजयते । पराजयते ।

अस्मिन्नेव ग्रन्थे श्लो० 411. खमाकाशम् । द्वितीया । **पराजयमानः** परिभवन् । आच्छादयन्नित्यर्थः । आत्मनेपदम् । शानच् । वैरिणं रावणम् । द्वितीया । **विजेषिष्ठाः** विजयस्व । विपूर्वाज्जयतेराशीर्लिङ् । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 410. रावणस्य प्रीतेः **पराजयमानां** पराङ्मुखीभवन्तीम् । प्रीतिमसहमानामित्यर्थः । 'पराजेरसोढः' (सू. 589) इति प्रीतेरपादानत्वम् । अनेनात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 849. स दशरथः षड्वर्गं **व्यजेष्ट** विजितवान् । आत्मनेपदम् ।

भट्टिकाव्ये—VI. 69.

> वर्धते ते तपो भीरु **व्यजेष्ठा** विघ्ननायकान् ।
> **अजैषीः** कामसंमोहौ संप्राप्था विनयेन वा ॥ 2280 ॥

विघ्ननायकान् **व्यजेष्ठाः** जितवत्यसि । लुङ् । तङ् । कामसंमोहौ **अजैषीः** जितवत्यसि कच्चित् । न तङ् ।

भट्टिकाव्ये—XVI. 13.

> मरिष्यामि **विजेष्ये** वा हताश्चेत्तनया मम ।
> हनिष्यामि रिपूंस्तूर्णं न जीविष्यामि दुःखितः ॥ 2281 ॥

शत्रून् **विजेष्ये** । तङ् ।

माघे—XIV. 31.

> प्राशुराशु हवनीयमत्र यत्तेन दीर्घममरत्वमध्यगुः ।
> उद्धतानधिकमेधितौजसो दानवांश्च विबुधा **विजिग्यिरे** ॥ 2282 ॥

विबुधा दानवान् **विजिग्यिरे** जितवन्तः । कर्तरि लिट् । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1517. सैनिका विपक्षं **व्यजिगीषन्त** जेतुमैच्छन् 'पूर्ववत्सनः' (सू. 2734) इत्यात्मनेपदम् ।

किरातार्जुनीये—XII. 30.

विजिगीषते यदि जगन्ति युगपदथ सञ्जिहीर्षति ।
प्राप्तुमभवमभिवाञ्छति वा वयमस्य नो विषहितुं क्षमा रुचः ॥ 2283 ॥

पुरुषो जगन्ति विजिगीषते विजेतुमिच्छति । विपूर्वाज्जयतेस्सन्नन्ताल्लट् । पूर्ववदात्मनेपदम् ।

२६८६ । आङो दोऽनास्यविहरणे । ( १. ३. २० )

आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् । विद्यामादत्ते। अनास्य इति किम् ? मुखं व्याददाति । आस्यग्रहणमविवक्षितम् । विपादिकां व्याददाति । 'पादस्फोटो विपादिका' II. vi. 52. इत्यमरः । नदी कूलं व्याददाति वा । पराङ्गकर्मकान्न निषेधः । व्याददते पिपीलिकाः पतङ्गस्य मुखम् ।

भट्टिकाव्ये—VIII. 10.

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।
साध्वनुक्रीडमानानि पश्यन् वृन्दानि पक्षिणाम् ॥ 2284 ॥

फलान्यादत्स्व गृहाण । आङ्पूर्वाद्ददातेर्लोट् । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2085. बाणानाददिरे गृहीतवन्तः । तङ् ।

भट्टिकाव्ये—XIV. 80.

रणे चिक्रीड धूम्राक्षस्तं ततर्जानिलात्मजः ।
आददे च शिलां साश्वं पिपेषास्य रथं तथा ॥ 2285 ॥

अनिलात्मजः शिलामाददे गृहीतवान् । तङ् ।

अनर्घराघवे—II. 54.

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारानरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती ।
ध्वान्तेऽपि व्यात्तवक्त्रज्वरदनलशिखाजर्जरैर्व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताटकेयम् ॥ 2286 ॥

व्यात्तं विस्तीर्णं वस्त्रम् । अनास्यविहरणे इति निषेधात् व्याङ्पूर्वाद्ददातेः परस्मैपदम् । कर्मणि क्तः ।

किरातार्जुनीये—XVI. 16.

उज्झत्सु संहार इवास्तसङ्ख्य-
महाय तेजस्विषु जीवितानि ।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्युः ॥ 2287 ॥

मृत्युः आननं न व्याददाति न विवृणोति । निषेधात्परस्मैपदम् ।

माघे—XVIII. 78.

कव्यात्पूगैः पुष्कराण्यानकानां
प्रत्याशाभिर्मेदसो दारितानि ।
आभीलानि प्राणिनः प्रत्यवस्यन्
कालो नूनं व्याददावाननानि ॥ 2288 ॥

पुष्कराण्येव आननानि मृत्युर्व्याददौ । परस्मैपदम् ।

२६८७ । क्रीडोऽनुसंपरिभ्यश्च । ( १. ३. २१ )

चादाङः । अनुक्रीडते । सङ्क्रीडते । परिक्रीडते । आक्रीडते । अनोः कर्मप्रवचनीयान्न । माणवकमनुक्रीडति । तेन सहेत्यर्थः ।

वा० । समोऽकूजने । (904.)

संक्रीडते । कूजने तु संक्रीडति चक्रम् ।

वा० । शिक्षेर्जिज्ञासायाम् । (906.)

धनुषि शिक्षते ।

वा० । आशिषि नाथः (910.)

सर्पिषो नाथते । 'आशिषि नाथः' (सू. 616) इति तु कर्मणि षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 2284. सानुषु अनुक्रीडमाणानां विहरतां पक्षिणां बृन्दानि पश्यन् परिक्रीडस्व विहर । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2286. परिक्रीडते ताटकेयम् । तङ् ।

मेघसन्देशे—II. 4.

मन्दाकिन्याः सलिलशिशिरैस्सेव्यमाना मरुद्भि-
मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
सङ्क्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ 2289 ॥

यत्रालकायां कन्याः संक्रीडन्ते । तङ् ।

चम्पूभारते—VII. 59.

ग—अथ तथेत्यभ्युपगम्य क्षतजपङ्कारुणितनेमिरेखैर्द्विपदोत्पातिकालातचक्रैरिव परिभ्रमद्भिश्चक्रैस्संक्रीडता शताङ्गेन पथि गच्छन् अग्रेसरघोटकखुरपुटकुट्टनत्रुटित-धरणीतलोच्चलितरजोभाराक्रमणविनम्रीकृतपक्ष्मणापि कुरुकुलजेत्रोऽयमिति विस्मयचल-विस्तारितेन चक्षुषा बृहन्नलामप्यनादृत्य मुहुर्मुहुरापिबद्भिः पौरैरनुगम्यमानोऽयमुत्तरो नलकूबर इवालकां स्वां नगरीं प्रविश्य परस्परोपमर्दनद्विगुणितवन्दिवादित्रघोषेण महता राजमार्गेणोपलक्षितः पितुस्सभामभिजगाम ॥ 2290 ॥

संक्रीडता कूजता । अकूजन इति निषेधात्परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे ग० 1500 संक्रीडद्भिः शताङ्गैः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1076. संक्रीडन्ती सङ्घर्षात्कूजन्ती । अकूजन इति वचनात् कूजनेऽनेन नात्मनेपदम् ।

नैषधे—III. 50.

विधिं वधूसृष्टिमपृच्छमेव
तद्यानयुग्यो नलकेलियोग्याम् ।
त्वन्नामवर्णा इव कर्णपीता
मयास्य संक्रीडति चक्रचक्रे ॥ 2291 ॥

चक्रचक्रे संक्रीडति सति कूजति सति । कूजने परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 490. हे वैदेहि धृत्या नाथस्व आशास्व । धैर्यमवलम्बस्वेत्यर्थः । 'आशिषि नाथः' (सू. 616) इति कर्मणि शेषे षष्ठी । अत्र 'आशिषि नाथः' इत्युपसङ्ख्यानात्तङ् ।

२६८८ । अपाच्चतुष्पाच्छकुनिष्वालेखने । (६. १. १४२)

अपात्किरतेस्सुट् स्यात् ।

वा० । सुडपि हर्षादिष्वेव वक्तव्यः । (3706.)

वा० । किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम् । (907.)

अपस्किरते वृषो हृष्टः, कुक्कुटो भक्षार्थी, श्वा आश्रयार्थी च ।

वा० । आङि नुप्रच्छ्योः । (909.)

आनुते । आपृच्छते ।

वा० । शप उपालम्भे । (911.)

तङ् । 'श्लाघह्नुङ्' (सू. 572) इति चतुर्थी । कृष्णाय शपते ।

अस्मिन्नेव ग्रन्थे श्लो० 251. अपस्किरमाणैः विष्किरैः शकुनिभिः भक्षार्थिभिः । आलेखने सुट् । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1095. महोक्षाश्चतुष्पादः सरितां रोधांसि अपचस्करिरे आलिलिखुः । हर्षादित्यर्थः । सुट् । तङ् ।

माघे—XII. 74.

तीर्त्वा जवेनैव नितान्तदुस्तरां
नदीं प्रतिज्ञामिव तां गरीयसीम् ।
शृङ्गैरपस्कीर्णमहत्तटीभुवा-
मशोभतोच्चैर्नदितं ककुद्मताम् ॥ 2292 ॥

शृङ्गैरपस्कीर्णा आलेखिताः । 'अपाच्चतुष्पात्' (सू. 2688) इति सुट् । आत्मनेपदात् कर्मणि क्तः ।

अनर्घराघवे—V. 11.

भुजविटपमदेन व्यर्थमन्धम्भविष्णु-
धिगपसरसि चौरंकारमाक्रुश्यमानः ।
त्वदुरसि विदधातु स्वामपस्कारकेलिं
कुटिलकरजकोटिक्रूरकर्मा जटायुः ॥ 2293 ॥

नखैर्विदारणमपस्कारः । जटायुः शकुनिः हर्षात् । अनायासादिति यावत् । सुट् । आत्मनेपदाद्धस् ।

अनर्घराघवे—V. 17.

भग्नोऽयं कथमस्ति रावणरथस्तातेन वज्राङ्कुर-
क्रूरापस्किरमाणभङ्गुरनखत्रोटित्रुटद्बन्धनः ।
हा सीरध्वजराजपुत्रि स तदा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरस्सञ्चारिपञ्चाननः ॥ 2294 ॥

तातेन जटायुषा शकुनिना वज्राग्रवत्क्रूरे अपस्किरमाणे विदारयन्त्यौ नखत्रोटी । तङ् । सुट् ।

रघुवंशे—II. 10.

मरुत्प्रयुक्ताश्च मरुत्सखाभं
तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनै-
राचारलाजैरिव पौरकन्याः ॥ 2295 ॥

बाललताः प्रसूनैः आचारलाजैः पौरकन्या इव अवाकिरन् । अत्र सुट् तङ् च न ।

अस्मिन्नेव ग्रन्थे श्लो० 2067. पतत्रिणो हनूमन्तं आनुवाना धन्योऽसीति स्तुवाना इव । नु स्तुताविति धातोः ‘ आङि नुप्रच्छ्योः ’ इत्युपसङ्ख्यानादात्मनेपदम् ।

भट्टिकाव्ये—XIV. 63.

समीहे मर्तुमानर्चे तेन वाचाखिलं बलम् ।
आपपृच्छे च सुग्रीवं स्वं देशं विससर्ज च ॥ 2296 ॥

सुग्रीवमापपृच्छे । तङ् ।

माघे—XI. 38.

कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दुः
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ 2297 ॥

भर्तरि गन्तुमापृच्छमाने सति । तङ् ।

मेघसन्देशे—I. 12.

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ 2298 ॥

चित्रकूटाद्रिमालिङ्ग्य आपृच्छस्व । 'आनन्दनसभाजने । आप्रच्छनम्' III. ii. 7. इत्यमरः । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 348. कामिनस्ताभ्यो योषिद्भ्यः । 'श्लाघ' (सू. 572) इति चतुर्थी । अशप्सत न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शनेन शपथं चक्रुः । 'शप उपालम्भे' इत्यात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1413. असौ भरतः शपथानशप्यत् । अत्र न तङ् । न च चतुर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 2157. असौ राक्षसी पर्यशाप्सीत् आक्रुष्टवती । 'शप उपालम्भे' इति तङ् न भवति । उपालम्भो हि वाचा शरीरस्पर्शनम् । अत एव 'श्लाघ' (सू. 572) इति चतुर्थ्यपि न ।

२६८९ । समवप्रविभ्यः स्थः । (१. ३. २२)

आत्मनेपदम् । संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते ।

चम्पूरामायणे— II. 20.

सत्योद्यां गिरमिह निर्वहस्व मा वा
सन्मानं भुवि न सहेय राममातुः ।
संस्थास्ये विषमुपभुज्य पश्यतस्ते
सत्राहं त्यजसि न चेत्प्रवर्तमानम् ॥ 2299 ॥

विषमुपभुज्य संस्थास्ये मरिष्यामि । सम्पूर्वात्तिष्ठतेस्तङ् ।

चम्पूरामायणे— IV. 10.

ग— पुरैकदा वालिनमननुभुजबलमखिलकुलाचलचालनचतुरं चतुरर्णवलङ्घनजङ्घालं दुन्दुभिर्नाम वृन्दारकारिर्लुलायकायः परिभूय समरे समतिष्ठत ॥ 2300 ॥

दुन्दुभिः समतिष्ठत अम्रियत ।

माघे— II. 34.

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ 2301 ॥

उदकं नावतिष्ठते । अवपूर्वात्तिष्ठतेस्तङ् ।

भट्टिकाव्ये— XVIII. 4.

भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः ।
तान्मदान्नावतिष्ठन्ते ये मते न्यायवादिनाम् ॥ 2302 ॥

ये मदात् न्यायवादिनां मते नावतिष्ठन्ते । पूर्ववत् ।

भट्टिकाव्ये— VIII. 11.

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः ।
न तत्संस्थास्यते कार्यं दक्षेणोरीकृतं त्वया ॥ 2303 ॥

क्षणमवतिष्ठस्व ततः प्रस्थास्यसे यास्यसि । कार्यं न संस्थास्यते । अपि तु निष्पत्स्यत एवेत्यर्थः । सर्वत्र तङ् ।

भट्टिकाव्ये—III. 12.

प्रस्थास्यमानावुपसेदुषस्तौ
शोशुच्यमानानिदमूचतुस्तान् ।
किं शोचतेहाभ्युदये बतास्मान्
नियोगलाभेन पितुः कृतार्थान् ॥ 2304 ॥

**प्रस्थास्यमानौ** प्रयास्यन्तौ । शानच् ।

भट्टिकाव्ये—VI. 44.

तस्याग्न्यम्बुक्रियां कृत्वा **प्रतस्थाते** पुनर्वनम् ।
विषाद्मीयिवांसौ तौ विचिन्वानावितस्ततः ॥ 2305 ॥

रामलक्ष्मणौ वनं प्रति **प्रतस्थाते** । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1518. रामः **प्रतस्थे** गन्तुं प्रवृत्तः । तङ् ।

माघे—XIX. 80.

धूतधौतासयः प्रष्ठा **प्रातिष्ठन्त** क्षमाभृताम् ।
शौर्यानुरागनिकषः सा हि वेलानुजीविनाम् ॥ 2306 ॥

प्रष्ठाः अग्रेसराः **प्रातिष्ठन्त** प्रस्थिताः । तङ् ।

माघे—XIII. 47.

अकृतस्वसद्मगमनादरः क्षणं
लिपिकर्मनिर्मित इव **व्यतिष्ठत** ।
गतमच्युतेन सह शून्यतां गतः
प्रतिपालयन्मन इवाङ्गनाजनः ॥ 2307 ॥

अङ्गनाजनः क्षणं **व्यतिष्ठत** आस्ते । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 993. **वितिष्ठमानम्** । शानच् ।

**वा० । आङः प्रतिज्ञायामुपसङ्ख्यानम् । ( 912 )**

**शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीत इत्यर्थः ।**

अनर्घराघवे—V. 38.

ग.—तौ चास्माकं तत्र विहारिषु निशाचरेषु पाटच्चरीं वृत्तिमातिष्ठमानौ भवद्भिः प्रतिकर्तव्यौ ॥ 2308 ॥

वृत्तिमातिष्ठमानौ स्वीकुर्वाणौ । शानच् ।

## २६९० । प्रकाशनस्थेयाख्ययोश्च । ( १. ३. २३ )

'श्लाघह्नुङ्' (सू. 572) इति चतुर्थी । गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । तिष्ठतेऽस्मिन्निति स्थेयो विवादपदनिर्णेता । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन् निर्णेतृत्वेन आश्रयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 349. असौ राक्षसी सौमित्रये । 'श्लाघह्नुङ्' (सू. 572) इति चतुर्थी । तस्यै स्वाभिप्रायं प्रकाशयन्ती स्थिता । तिष्ठतेः कर्मकर्तरि लिट् । प्रकाशने तङ् ।

चम्पूरामायणे—IV. 19.

क्षितिपतितनयानां हन्त गर्भेश्वराणां
किमु निरवधि मौग्ध्यं शौर्यवज्जन्मसिद्धम् ।
मम हृदि निरपाये वर्तमाने कवीन्द्रे
रघुवर यदमुष्मै तिष्ठसे चापपाणिः ॥ 2309 ॥

राम त्वममुष्मै तिष्ठसे आत्मानं प्रकाशयन् वर्तसे ।

चम्पूभारते—IV. 34.

एकेन यत्सुबलसूर्युगपद्गृहीतुम्
अक्षेण सर्वविषयान् नृपतेरशक्नोत् ।
अस्मात्परं जगति वाच्यतयाभ्युपेत्य
तिष्ठेत किं नु परमाद्भुतवाचकाय ॥ 2310 ॥

शकुनिः एकाक्षेण युधिष्ठिरस्य सर्वविषयान् युगपद्ग्रहीतुमशक्नोदिति यत् अस्मात्परमन्यत परमाद्भुतवाचकाय वाच्यतया अर्थत्वेनाभ्युपेत्य तिष्ठेत किं नु ! न तिष्ठेतेत्यर्थः । तङ् । चतुर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 1559. जनकतनया समाणा चेन्मह्यं न तिष्ठेत किम्? तिष्ठेतैवेत्यर्थः।

अस्मिन्नेव ग्रन्थे श्लो० 1329. एतस्मै जम्भारये कस्तिष्ठेत क आत्मानं प्रकाशयेत्। अपि तु न कोऽपि। तङ्। चतुर्थी।

अस्मिन्नेव ग्रन्थे श्लो० 350. हे प्राज्ञे नः प्रीतिस्त्वयि तिष्ठते सर्वकार्य-संशयेषु स्थेये निर्णेतरि त्वयि तिष्ठते। त्वद्वाक्ये वर्तत इत्यर्थः। इति वयं तुभ्यं तिष्ठामहे स्वाभिप्रायं प्रकाशयामः। उभयत्र आत्मनेपदम्।

किरातार्जुनीये—III. 14.

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ 2311 ॥

धृतराष्ट्रः संशय्य सन्दिह्य कर्णादिषु तिष्ठते। कर्णादीन् दुर्मन्त्रिणः सन्दिग्धार्थेषु निर्णेतृत्वेनावलम्बत इत्यर्थः। स्थेयाख्यायामात्मनेपदम् ॥

## २६९१। उदोऽनूर्ध्वकर्मणि। (१. ३. २४)

मुक्तावुत्तिष्ठते। अनूर्ध्वेति किम्? पीठादुत्तिष्ठति।

अस्मिन्नेव ग्रन्थे श्लो० 350. मित्रार्थे मित्रप्रयोजने उत्तिष्ठमानमुद्युञ्जानम्। तङि शानच्।

माघे—XIV. 17.

इत्युदीरितगिरं नृपस्त्वयि
श्रेयसि स्थितवति स्थिरा मम।
सर्वसम्पदिति शौरिमुक्तवान्
उद्वहन्मुदमुदस्थित क्रतौ ॥ 2312 ॥

युधिष्ठिरः क्रतावुदस्थित क्रतुं कर्तुमुद्युक्तवान्। तिष्ठतेर्लुङ्। तङ्।

अस्मिन्नेव ग्रन्थे श्लो० 1588. उत्तिष्ठमानः वर्धमानः। शानच्।

किरातार्जुनीये—XI. 13.

अन्तकः पर्यवस्थाता जन्मिनस्सन्ततापदः ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥ 2313 ॥

जनो मुक्तौ मोक्ष उत्तिष्ठते उद्युक्तो भवति । तङ् ।

माघे—II. 118.

इति विशकलितार्थामौद्धवीं वाचमेना-
मनुगतनयमार्गामर्गलां दुर्नयस्य ।
जनितमुदमुदस्थादुच्चकैरुच्छ्रितोरः-
स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः ॥ 2314 ॥

स हरिः उदस्थात् आसनादुत्थितवान् । ऊर्ध्वकर्मणि परस्मैपदम् ।

माघे—XV. 59.

रभसादुदस्थुरथ युद्धमनुचितभियोऽभिलाषुकाः ।
सान्द्रमकुटकिरणोच्चलितस्फटिकांशवस्सदसि मेदिनीभृतः ॥ 2315 ॥

मेदिनीभृत उदस्थुः उत्थिताः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2089. अच्युतः पीठादुदतिष्ठत् । परस्मैपदम् ।

चम्पूरामायणे—V. 1.

ततो हनूमान् दशकण्ठनीतां
सीतां विचेतुं पथि चारणानाम् ।
महेन्द्रशैलस्य खगेन्द्रवेगः
प्रस्थादुदस्थात्प्रथमानवेगः ॥ 2316 ॥

हनूमान् महेन्द्रशैलस्य प्रस्थादुदस्थात् उत्थितः । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2061. रावणः आसनादुदस्थात् उत्थितः । ऊर्ध्वकर्मकत्वादात्मनेपदं न भवति ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2014. वानरा उत्तस्थुः उत्थिताः । न तङ् ।

२६९२ । उपान्मन्त्रकरणे । ( १. ३. २५ )

आग्नेय्या आग्नीध्रमुपतिष्ठते ।

वा॰ । उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् । (914.)

आदित्यमुपतिष्ठते । कथं तर्हि उपतस्थे सरस्वतीति ? देवतात्वारोपात् । नृपस्य देवतांशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते, मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः ।

वा॰ । वा लिप्सायामिति वक्तव्यम् । (919.)

भिक्षुकः प्रभुमुपतिष्ठते उपतिष्ठति वा । लिप्सयोपगच्छतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1695. ये द्विजास्सन्ध्यात्रयं मन्त्रैस्सूर्यमुपतिष्ठन्ते ।

रघुवंशे—XV. 76.

स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ 2317 ॥

असौ मुनिः स्वरसंस्कारवत्या ऋचा सूर्यमिवोपस्थितः । उपपूर्वात्तिष्ठतेः ' उपान्मन्त्रकरणे ' इत्यात्मनेपदात् क्तः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1539. सरस्वती स्तुतिभिः रघुमुपतस्थे देवताबुध्या पूजितवती ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1594. असौ दशरथः त्र्यम्बकादन्यं नोपास्थित नासेविष्ट । उपपूर्वात्तिष्ठतेर्लुङि देवपूजायामात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1798. सरस्वतीमुपतिष्ठे यजामि सङ्गतीकरोमि वा । तङ् ।

नैषधे—VI. 100.

प्रक्षीण एवायुषि कर्मकृष्टे नरान्न तिष्ठत्युपतिष्ठते यः ।
बुभुक्षते नाकमपथ्यकल्पं धीरस्तमापातसुखोन्मुखं कः ॥ 2318 ॥

**उपतिष्ठते** सङ्गच्छति । सङ्गतिकरणे तङ् ।

भट्टिकाव्ये—V. 68.

> सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ।
> पुण्यकृच्चाटुकारस्ते किङ्करस्सुरतेषु कः ॥ 2319 ॥

हे सुभगे त्वं कं सुकृत**मुपतिष्ठसे** सङ्गच्छसि । 'समो गम्यृच्छि' (सू. 2699) इति अकर्मकात् सङ्गतिकरणे तङ् ।

भट्टिकाव्ये—VI. 42.

> मा वधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि ।
> **उपास्थितैव**मुक्ते तं सखायं राघवः पितुः ॥ 2320 ॥

राघवो जटायुष**मुपास्थित** सङ्गतः । सङ्गतिकरणे तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 720. **उपास्थिषत** उपस्थिताः । तेन सङ्गता इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 871. निखिलान् तिथीन् पूर्णिमातिथिरतिथि**रुपतस्थे** । अतिथीभूय सङ्गतेत्यर्थः । सङ्गतिकरणे तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 955. पुष्पधन्वा शतमख**मुपतस्थे** सङ्गतवान् । सङ्गतिकरणे तङ् ।

भट्टिकाव्ये—XVII. 23.

> यत्कृतेऽरीन् व्यगृह्णीम समुद्रमतराम च ।
> सा हतेति वदन्राम**मुपातिष्ठ**न्मरुत्सुतः ॥ 2321 ॥

मरुत्सुतो राम**मुपातिष्ठत्** । अत्र यमुना गङ्गामुपतिष्ठत इत्येवं सङ्गतिकरणमुपश्लेषो नास्तीति तङ् न भवति ।

अस्मिन्नेव ग्रन्थे श्लो० 1021. रक्षांसि गजेन्द्रै**रुपास्थुः** सेवामकार्षुः ।

अनर्घराघवे—II. 61.

अलमिष्ट्वा मखान्मूर्खाः खड्गधारेयमस्ति नः ।
अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते ॥ 2322 ॥

अयं पन्थाः स्वर्लोकमुपतिष्ठते प्राप्नोतीत्यर्थः । पथि तङ् ।

चम्पूरामायणे—I. 53.

ग—इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशमननिरायामयामिनीयामानुबन्धो बन्धूकस्तबकसुन्दरबन्धुरेण सन्ध्यारागेण प्राचीमुखेन शोणीकृतेन शोणाभिधानं दधानेन नदेन प्रवर्तितप्रत्यूषकृत्यः कृतनियमेन मुनिना सह गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत ॥ 2323 ॥

गङ्गामुपतिष्ठमानेन गङ्गां प्राप्नुवता पथा । शानच् ।

## २६९३ । अकर्मकाच्च । (१. ३. २६)

उपातिष्ठतेरकर्मकात् आत्मनेपदं स्यात् । भोजनकाल उपतिष्ठते । सन्निहितो भवतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 973. हे वीर! अव्यग्रमुपतिष्ठस्व सन्निधत्स्व । आत्मनेपदम् ।

## २६९४ । उद्विभ्यां तपः । (१. ३. २७)

अकर्मकादित्येव । उत्तपते वितपते । दीप्यत इत्यर्थः ।

वा० । स्वाङ्गकर्मकाच्चेति वक्तव्यम् । ( 916. )

उत्तपते वितपते पाणिम् । चैत्रो मैत्रस्य पाणिमुत्तपति । सन्तापयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 973. रविरत्यर्थं वितपते । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2102. तीव्रमुत्तपमानो दीप्यमान आतपस्सोढुमशक्यः । शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1101. द्युतीनां पतिरर्कस्सुतरामुत्तपते प्रकाशते । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1503. अयं त्विषां पतिर्विलपते । तङ् ।

माघे—IX. 67.

कुसुमादपि स्मितदृशास्सुतरां
सुकुमारमङ्गमिति नापरथा ।
अनिशं निजैरकरुणः करुणं
कुसुमेषुरुत्तपति यद्विशिखैः ॥ 2324 ॥

कुसुमेषुरकरुणो निजैर्विशिखैरनिशमुत्तपति । तापयतीत्यर्थः । तपतिरयं भौवादिकस्सकर्मकः । अतस्तङ् न ।

## २६९५ । आङो यमहनः । ( १. ३. २८ )

आयच्छते आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह । परस्य शिर आहन्ति । कथं तर्हि 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः, 'आहध्वं मा रघूत्तमम्' इति भट्टिश्च । प्रमाद एवायमिति भागवृत्तिः । प्राप्येत्यध्याहारो वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. आहध्वं मा रघूत्तममिति क्वचित्पाठः । रघूत्तमं प्राप्य माहध्वम् । लुङि मध्यमपुरुषबहुवचनम् । 'आशंसायां भूतवच्च' (सू. 2790) इति भविष्यदर्थे भूतवत् । भयं मोपायध्वं मा गन्धयत । गन्धनं सूचनम् । आविष्करणमिति यावत् । आङ्पूर्वाद्यमेर्लुङि सकर्मकादात्मनेपदं चिन्त्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2102. अलातैराघ्नानः ताडयन् । आङ्पूर्वाद्धन्तेरकर्मकादात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2100. आघ्नानः । शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 831. व्यायच्छमानयोः व्याप्रियमाणयोः । यमेराङ्पूर्वकादकर्मकादात्मनेपदम् । बाणमायंसीत उपसंहृतवान् । यमेराङ्पूर्वात् अकर्त्रभिप्रायत्वात् 'समुदाङ्भ्यः' (सू. 2742) इति नात्मनेपदम् । सकर्मकत्वात् अनेनापि न तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2320. हे राम ! मा वधिष्ठाः । मा वधीरित्यर्थः । आङ्पूर्वाद्धन्तेरकर्मकत्वादात्मनेपदम् । 'आत्मनेपदेष्वन्यतरस्याम्' (सू. 2696) इति वधादेशः ।

भट्टिकाव्ये—I. 27.

अथ जगदुरनीचैराशिषस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्यमाजघ्नुरन्ये ।
अभिमतफलशंसी चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः ॥ 2325 ॥

तूर्यमाजघ्नुः ताडयामासुः । सकर्मकत्वान्न तङ् ।

माघे—VII. 17.

मुहुरसुसममाघ्नती नितान्तं
प्रणदितकाञ्चि नितम्बमण्डलेन ।
विषमितपृथुहारयष्टि तिर्य-
क्कुचमितरं तदुरःस्थले निपीड्य ॥ 2326 ॥

असुसममाघ्नती ताडयन्ती । हन्तेराङ्पूर्वाल्लटश्शत्रादेशे ङीप् । सकर्मकत्वान्न तङ् ।

माघे—XV. 10.

करकुड्मलेन निजमूरुमुरुतरनगाश्मकर्कशम् ।
त्रस्तचपलचलमानजनश्रुतभीमनादमयमाहतोच्चकैः ॥ 2327 ॥

अयं चैद्यः निजमूरुं करकुड्मलेन आहत हतवान् । आङ्पूर्वाद्धन्तेर्लङ् । 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' (वा. 916. सू. 2694) इत्यात्मनेपदम् ।

भट्टिकाव्ये—XIV. 96.

आजघ्नुस्तूर्यजातानि तुष्टुवुश्चानुजीविनः ।
रजः प्रववृधे घोरं घोषश्च व्यानशे दिशः ॥ 2328 ॥

तूर्यजातानि आजघ्नुस्ताडितवन्तः । सकर्मकत्वान्न तङ् ।

किरातार्जुनीये—XVII. 63.

उन्मज्जन्मकर इवामरापगाया
वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः ॥ 2329 ॥

गाण्डीवी अर्जुनः विषमविलोचनस्य वक्षः भुजाभ्यामाजघ्ने ताडितवान् । त्र्यम्बकस्य वक्षः प्राप्य इत्यध्याहारं स्वीकृत्याऽकर्मकत्वादात्मनेपदम् ।

भट्टिकाव्ये—VIII. 46.

दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम् ।
श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमम् ॥ 2330 ॥

श्रियमायच्छमानाभिः स्वीकुर्वाणाभिः । सकर्मकादपि कर्त्रभिप्रायत्वात् 'समुदाङ्भ्यः' (सू. 2742) इति तङ् । 'इषुगमि' (सू. 2400) इति छः ।

## २६९६ । आत्मनेपदेष्वन्यतरस्याम् । (२. ४. ४४)

हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु । आवधिष्ट आवधिषाताम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2320. हे राम ! मा वधिष्टाः मा अवधिष्ठाः । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः । आङ्पूर्वात् हन्तेरकर्मकात् 'आङो यमहनः' (सू. 2695) इति तङ् । अनेन वधादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 2195. देवान्तको बली परिघेणावधिष्ट हतवान् । 'आङो यमहनः' (सू. 2695) इति तङ् । अनेन वधादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. 'आहथ्वं मा रघूत्तमम्' इति क्वचित्पाठः । आहथ्वं मा । माङ्योगादडागमप्रतिषेधः । रघूत्तमम् प्राप्य माहथ्वम् । वधादेशाभावपक्षः ।

माघे—XV. 73.

जगदन्तकालसमवेतविपदविषमेरितारवम् ।
धीरनिजरवविलीनगुरुप्रतिशब्दमस्य रणतूर्यमावधि ॥ 2331 ॥

रणतूर्यं रणदुन्दुभिः आवधि आहतम् । आङ्पूर्वाद्धन्तेः कर्मणि लुङ् । 'भावकर्मणोः (सू. 2679) इति तङ् । अनेन हनो वधादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1027. अकम्पनः कम्पनश्च तौ अङ्गदेन अहसाताम् । कर्मणि लुङ् । वधादेशाभावपक्षः । अघानि अहसातामित्यादि ।

माघे—XV. 23.

अमुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन्मधु ॥ 2332 ॥

मधुरिति कोऽप्यसुरस्त्वया न्यवधि अघानि । हन्तेः कर्मणि लुङ् । अनेन वधादेशः । 'आत्मनेपदेष्वन्यतरस्याम्' (सू. 2419) इति त्वङ्विधायकम् ।

## २६९८ । यमो गन्धने । (१. २. १५)

गन्धनं सूचनं परदोषाविष्करणम् । सिच् कित् । उदायत । गन्धने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. भयं मोपायध्वम् । मा गन्धयतेत्यर्थः । सकर्मकादात्मनेपदं चिन्त्यम् । दशाननः सीतां मोपायंस्त न स्वीकरोतु । 'उपाद्यमः स्वकरणे' (सू. 2729) इति तङ् । 'विभाषोपयमने' (सू. 2730) इति सिचः कित्वपक्षे सीतामुपायत ।

## २६९९ । समो गम्यृच्छिभ्याम् । (१. ३. २९)

अकर्मकाभ्यामित्येव । सङ्गच्छते ।

## २७०० । वा गमः । (१. २. १४)

सिच् कित् । समगंस्त, समगत । समृच्छिष्यते । अकर्मकाभ्यां किम् । ग्रामं सङ्गच्छति ।

वा० । विदिप्रच्छिस्वरतीनामुपसङ्ख्यानम । (918.)

वेत्तेरेव ग्रहणम् । संवित्ते संविदाते ।

२७०१ । वेत्तेर्विभाषा । (७. १. ७)

रुडागमो वा स्यात् । संविद्रते । संविदते । सम्पृच्छते । संस्वरते ।

वा० । अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् । ( 926. )

संशृणुते । संपश्यते ।

वा० । उपसर्गादस्यत्यूह्योर्वेति वाच्यम् । ( 920. )

अकर्मकादिति निवृत्तम् । ग्रन्थं निरस्यति निरस्यते । समूहति समूहते ।

अस्मिन्नेव ग्रन्थे श्लो० 1414. हे कपे संशृणुष्व आकर्णय । शृणोतेस्सम्पूर्वादकर्मकादात्मनेपदम् । वनैः सङ्गच्छस्व तानि सङ्गच्छ । सम्पूर्वाद्गमेः पूर्ववत्तङ् । मम अभीष्टा मनोरथास्समारन्त । सम्यगृताः सत्या बभूवुरित्यर्थः । सम्पूर्वादर्तेर्लुङि पूर्ववत्तङि ' सर्तिशास्ति ' ( सू. 2382 ) इत्यादिना च्लेरङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1739. के न संविद्रते न विदन्ति । सम्पूर्वाद्विदेः अकर्मकात्तङ् । ' वेत्तेर्विभाषा ' इति रुट् ।

अस्मिन्नेव ग्रन्थे श्लो० 228. यो न संशृणुते न शृणोति । सम्पूर्वाच्छृणोतेरकर्मकात्तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 428. सेनाम्भोधी सञ्जग्माते मिलितवन्तौ । सम्पूर्वाद्गच्छतेरकर्मकाल्लिट् । तङ् ।

भट्टिकाव्ये—IX. 6.

कपिनाम्भोधिधीरेण समगंसत राक्षसाः ।
वर्षास्वुद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ 2333 ॥

राक्षसाः कपिना हनूमता वर्षासु सिन्धवस्समुद्रेणेव समगंसत सङ्गताः । सम्पूर्वाद्गमेर्लुङ् । ' समो गम्यृच्छि ' ( सू. 2699 ) इत्यादिना तङ् । ' वा गमः ' ( सू. 2700 ) इति सिचः कित्त्वम् ।

माघे—XIII. 17.

रथवाजिपत्तिकरिणीसमाकुलं
तदनीकयोस्समगत द्वयं मिथः ।
दधिरे पृथक्करिण एव दूरतो
महतां हि सर्वमथ वा जनातिगम् ॥ 2334 ॥

अनीकयोर्द्वयं मिथस्समगत सङ्गतम् । सम्पूर्वाद्गमेर्लुङ् । 'समो गमृ' (सू. 2399) इति तङ् । 'वा गमः' (सू. 2700) इति कित्वम् ।

किरातार्जुनीये—XVIII. 42.

असंविदानस्य ममेश संविदां
तितिक्षितुं दुश्चरितं त्वमर्हसि ।
विरोध्य मोहात्पुनरभ्युपेयुषां
गतिर्भवानेव दुरात्मनामपि ॥ 2335 ॥

असंविदानस्याज्ञानस्य मम । सम्पूर्वाद्विदेरकर्मकात्तङि शानच्

भट्टिकाव्ये—IX. 28.

द्रुतं संस्वरिषीष्ठाश्च निर्भयः प्रथनोत्तमे ।
स मायानामगात्सोता कपेर्विधवितुं द्युतिम् ॥ 2336 ॥

त्वं निर्भयस्सन् संस्वरिषीष्ठाः सम्यक् शब्दायस्व । स्वरतेराशीर्लिङ् । 'विदिप्रच्छि' (वा. 918. सू. 2700) इत्यादिना तङ् । 'स्वरति' (सू. 2279) इत्यादिना विकल्पेनेट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2042. कपिसैन्यं हर्षेण समगत सङ्गतम् । तङ् । 'वा गमः' (सू. 2700) इति सिचः कित्वम् ।

नैषधे—VI. 103.

नित्यं नियत्या परवत्यशेषे
कः संविदानोऽप्यनुयोगयोग्यः ।
अचेतना सा च न वाचमर्हेत्
वक्ता तु वक्तृश्रमकर्म भुङ्क्ते ॥ 2337 ॥

संविदानो विद्वान् । सम्पूर्वाद्विदेरात्मनेपदम् । ततः शानच् ।

सुरस्त्रियो गतैः कलहंसविक्रमं, कलत्रभारैः पुलिनं, मुखैस्सरोजानि निरासिरे निरस्तवत्यः । अस्यतेः कर्तरि लिट् । 'उपसर्गात्' इति विकल्पेनात्मनेपदम् ।

भट्टिकाव्ये—XVII. 98.

सोऽभ्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः ।
निरास्यत दशास्यस्तच्छक्रास्त्रेणाजयत्तृपः ॥ 2346 ॥

दशास्यः पाशुपतमस्त्रं निरास्यत क्षिप्तवान् । 'उपसर्गात्' इति वा तङ् ।

भट्टिकाव्ये—XVII. 103.

राक्षसोऽतर्जयत्सूतं पुनश्चाढौकयद्रथम् ।
निरास्येतामुभौ बाणानुभौ धुर्यानविध्यताम् ॥ 2347 ॥

उभौ रामरावणौ बाणान् निरास्येतां क्षिप्तवन्तौ ।

अस्मिन्नेव ग्रन्थे श्लो० 546. अन्यो मुग्धवधूं दोर्भ्यामुदास्थ । विकल्पात्परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 115. इन्दुः लेखया कलया तिमिरं आदिवराहः दंष्ट्रया भुवो मण्डलमिव उदासे उच्चिक्षिपे । अस्यतेः कर्तरि लिट् । तङ् ।

किरातार्जुनीये—X. 31.

कुसुमनगवनान्युपैतुकामा
किसलयिनीमवलम्ब्य चूतयष्टिम् ।
क्वणदलिकुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ 2348 ॥

वसन्तलक्ष्मीः नलिनवनेषु पदं निरासे निदधे । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2172. तद्बाणवर्षं रामो भल्लैरपोहत् अपनीतवान् । पक्षे तिप् ।

२७०३ । निसमुपविभ्यो ह्वः । (१. ३. ३०)

निह्वयते ।

भट्टिकाव्ये—VIII. 17.

के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा ।
यत्नादुपह्वये प्रीतः संह्वयस्व विवक्षितम् ॥ 2349 ॥

उपह्वये त्वामाह्वयामि । अकर्मकादिति निवृत्तम् । विवक्षितमभिप्रेतं संह्वयस्व । कथयेत्यर्थः । ह्वयतेस्तङ् ।

२७०४ । स्पर्धायामाङः । (१. ३. ३१)

कृष्णश्चाणूरमाह्वयते । स्पर्धायां किम् । पुत्रमाह्वयति ।

भट्टिकाव्ये—XIV. 44.

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रञ्चाजुहाव सः ।
आजुहुवे तिरोभूतः परानीकं जहास च ॥ 2350 ॥

इन्द्रजित्सर्पास्त्रमाजुहाव आहूतवान् । अस्पर्धायां परस्मैपदम् । परानीकमाजुहुवे स्पर्धते स्म । स्पर्धायामात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2077. शतक्रतुः योत्स्यमानो मामाह्वास्यते । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2147. कुम्भकर्णः आहवे शत्रूनाह्वास्त आहूतवान् आगच्छत युध्यध्वमिति । अनेन तङ् । 'आत्मनेपदेष्वन्यतरस्याम्' (सू. 2419) इत्यङभावपक्षे रूपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1267. तं सौमित्रिराह्वयत । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 737. चेदिराट् मुरारिमाह्वत क यासि मामभ्येहीति सस्पर्धमाकारयामास । पूर्ववत्तङि 'आत्मनेपदेष्वन्यतरस्याम्' (सू. 2419) इत्यङ्पक्षे रूपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 721. खगकुलानि । कर्म । आह्वयते प्रीत्या आह्वानं कुर्वाणाय । आङ्पूर्वात् ह्वयतेः परस्मैपदाच्छतरि चतुर्थ्यन्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 2126. असौ जामदग्न्यो राघवमाह्वत सस्पर्धमाहूतवान् । ह्वेञो लुङ् । पूर्ववत् ।

भट्टिकाव्ये—VIII. 18.

द्यामिवाह्वयमानं तं स्वोच्छ्रायेण कपिः ।
उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीविवत् ॥ 2351 ॥

द्यामाह्वयमानं सस्पर्धमाकारयन्तमिव । तङ् ।

किरातार्जुनीये—XIII. 3.

घनपोत्रविदीर्णशालमूलो
निबिडस्कन्धनिकाषरुग्णवप्रः ।
अयमेकचरोऽभिवर्तते मां
समरायेव समाजुहूषमाणः ॥ 2352 ॥

समाजुहूषमाण इव समाह्वातुमिच्छन्निव । समाह्वयतेः सन्नन्तात् शानच् । अनेन तङ् । 'पूर्ववत्सनः' (सू. 2734) इति सन्नन्तात्तङ् ।

किरातार्जुनीये—VIII. 27.

अथ स्फुरन्मीनविधूतपङ्कजा
विपङ्कतीरस्खलितोर्मिसंहतिः ।
पयोऽवगाढुं कलहंसनादिनी
समाजुहावेव वधूः सुरापगा ॥ 2353 ॥

सुरापगा वधूः समाजुहावेव आकारयामासेव । अस्पर्धायां न तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 959. आजुहाव कुशध्वजम् ।

२७०५ । गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।
(१. ३. ३२)

गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते । भर्त्सयतीत्यर्थः । हरिमुपकुरुते सेवते । परदारान्प्रकुरुते तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते गुणमाधत्ते । 'उपात्प्रतियते' (सू. 2552) इति सुट् । 'कृञः प्रतियत्ने' (सू. 614) इति कर्मणि षष्ठी । गाथाः प्रकुरुते प्रकथयति । शतं प्रकुरुते धर्मार्थं विनियुङ्क्ते ।

अस्मिन्नेव ग्रन्थे श्लो० 2351. उपकुर्वन्तं विश्रमदानेन आद्रियमाणम् । अनुजीविवत् भृत्यवत् । प्रकुर्वाणः सेवमानः । कृञः सेवने तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 489. कुलभार्यां प्रकुर्वाणं सहसा सङ्गृह्णानम् । साहसिक्ये तङ् । कस्यचिन्मोपस्कृथाः । अध्वश्रमार्थं न किञ्चित्खाद्यपेयादिकमुपस्कर्तव्यमित्यर्थः । प्रतियत्ने तङ् । सुट् । कर्मणि षष्ठी । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 477. राजेन्द्रौ रामलक्ष्मणौ इहागमस्योपास्कृषाताम् उपस्कृतवन्तौ । दृढीकृतवन्तावित्यर्थः । प्रतियत्ने तङ् । सुट् । कर्मणि षष्ठी । 'न माङ्योगे' (सू. 2228) इत्यडागमप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे ग० 1253. मस्करी रैवतकगिरिमुपस्कुरुते अलङ्करोति । 'सम्परिभ्यां करोतौ भूषणे' (सू. 2551) 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च' (सू. 2552) इति भूषणार्थे सुट् । कृञ उभयपदित्वात् अत्रात्मनेपदम् । कर्मणि षष्ठी न ।

अस्मिन्नेव ग्रन्थे श्लो० 500. रावणो वनात्सीतामपचक्रे अवक्षिप्तवान् भर्त्सितवान् । अवक्षिप्य जहारेत्यर्थः । अवक्षेपणे तङ् ।

अनर्घराघवे—II. 73.

पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धताः
शीतांशोर्द्युतयः पुरन्दरपुरीसीम्नामुपस्कुर्वते ।
एताभिर्लिहतीभिरन्धतमसान्युद्ग्रथ्नतीभिर्दिशः
क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ 2354 ॥

शीतांशोः द्युतयः पुरन्दरपुरीसंक्रान्तमुपस्कुर्वते गुणान्तराधानं विदधति । प्रतियत्ने तङ् । षष्ठी ।

२७०६ । अधेः प्रसहने । (१. ३. ३३)

प्रसहनं क्षमाभिभवश्च । षह मर्षणेऽभिभवे च इति पाठात् । शत्रुमधिकुरुते । क्षमत इत्यर्थः । अभिभवतीति वा । प्रसहनमभिभव इति काशिका ।

अस्मिन्नेव ग्रन्थे श्लो० 500. यं रावणं हरिरिन्द्रोऽपि नाधिचक्रे न प्रसेहे नाभिबभूव । अभिभवितुं नाशकदित्यर्थः । तङ् ।

२७०७ । वेः शब्दकर्मणः । (१. ३. ३४)

स्वरान्विकुरुते । उच्चारयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 500. अयाहं स्वरान्विकुर्वाणः विविधं शब्दान् कुर्वाणः । क्ष्वेडमान इति यावत् ।

२७०८ । अकर्मकाच्च । (१. ३. ३५)

वेः कृञ इत्येव । छात्रा विकुर्वते विकारं लभन्ते ।

भट्टिकाव्ये—VIII. 21.

विकुर्वे नगरे तस्य पापस्याद्य रघुद्विषः ।
विनेष्ये वा प्रियान्प्राणान् उदानेष्येऽथवा यशः ॥ 2355 ॥

तस्य नगरे विकुर्वे विविधं चेष्टिष्ये । यथेष्टं पराक्रमिष्यामीत्यर्थः । विपूर्वात्करोतेः अनेन तङ् ।

२७०९ । संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः । (१. ३. ३६)

शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः । तेन च शिष्यसंमाननं फलितम् । उत्सञ्जने, दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते ।

विधिना आत्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते। ज्ञाने, तत्त्वं नयते। निश्चिनोतीत्यर्थः। कर्मकरानुपनयते। भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। विगणनं ऋणादेः निर्यातनम्। करं विनयते। राज्ञे देयं भागं परिशोधयतीत्यर्थः। शतं विनयते। धर्मार्थं विनियुङ्क्त इत्यर्थः।

अस्मिन्नेव ग्रन्थे श्लो० 2355. प्राणान्विनेष्ये स्वाम्यर्थे अपनेष्यामि। व्यये तङ्। धर्मादिषु विनियोगो व्ययः। संमानयिष्यामि वा विपूर्वान्नयतेस्सम्मानने तङ्। स्वाम्यर्थं प्राणानां क्लेशनं सम्माननं पर्यवस्यति। यश उदानेष्ये उत्सञ्जयिष्यामि। शत्रुविजयेन कीर्तिमुच्चैः करिष्यामीत्यर्थः। उत्सञ्जने तङ्।

अस्मिन्नेव ग्रन्थे श्लो० 1858. वसिष्ठः सुतान् स्वकाले गर्भैकादशे वर्षे **उपानेष्ट** उपनीतवान्। नयतेर्लुङ्। आचार्यकरणे आत्मनेपदम्।

## २७१०। कर्तृस्थे चाशरीरे कर्मणि। (१. ३. ३७)

नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यात्। क्रोधं विनयते अपगमयति।

भट्टिकाव्ये—VIII. 22.

**विनेष्ये** क्रोधमथवा क्रममाणोऽरिसंसदि।
इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः॥ 2356 ॥

क्रोधं **विनेष्ये** नयतेस्तङ्। कर्तृस्थस्य क्रोधकर्मणोऽशरीरत्वात्।

रघुवंशे—IV. 65.

**विनयन्ते** स तद्योधा मधुभिर्विजयश्रमम्।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु॥ 2357 ॥

तस्य रघोर्योधा मधुभिर्विजयश्रमं **विनयन्ते** स अपनीतवन्तः। तङ्।

रघुवंशे—IV. 67.

**विनीता**ध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेसरान्॥ 2358 ॥

विनीताध्वश्रमाः । विपूर्वान्नयतेरात्मनेपदात्कर्मणि क्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 1951, कृपणो निधिं न विनयन्ते न लुम्पन्ति । 'स्वरित' (सू. 2158) इत्यादिना आत्मनेपदम् । अनेन सूत्रेणेति केचित् । तदसत् । सम्पदां कर्तृणामचेतनत्वेन कर्मणो निरूप्येन्द्रियनियतत्वेन चाकर्तृस्थत्वादिति ।

रघुवंशे—XV. 48.

> इत्याप्तवचनाद्रामो विनेष्यन्वर्णविक्रियाम् ।
> दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ 2359 ॥

वर्णविक्रियां वर्णविचारं विनेष्यन् अपनेष्यन् । अत्र न तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 233, दुष्यन्त्यान्विनेष्यन्निव । न तङ् ।

माघे—X. 62.

> अम्बरं विनयतः प्रियपाणे-
> र्योषितश्च करयोः कलहस्य ।
> वारणामिव विधातुमभीक्ष्णं
> कक्ष्यया च वलयैश्च शिशिञ्जे ॥ 2360 ॥

अम्बरं वस्त्रं विनयतः अपसारयतः । न तङ् ।

माघे—VII. 57.

> विनयति सुदृशो दृशः परागं
> प्रणयिनि कौसुममाननानिलेन ।
> तदहितयुवतेरभीक्ष्णमक्ष्णो-
> र्द्वयमपि रोषरजोभिरापुपूरे ॥ 2361 ॥

प्रणयिनि सुदृशो दृशः परागं विनयति सति ।

### २७११ । वृत्तिसर्गतायनेषु क्रमः । (१. ३. ३८)

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । सर्ग उत्साहः । अध्ययनाय क्रमते उत्सहते । क्रमन्तेऽस्मिन् शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2356. अरिसंसदि क्रममाणः अप्रतिबन्धं विजृम्भमाणः । वृत्तौ अप्रतिबन्धे तङ् ।

भट्टिकाव्ये—XV. 20.

मोज्जिग्रहस्सुनीतानि मा स्म क्रंस्था न संयुगे ।
मोपालब्धाः कुतैर्दोषैर्मा न वाक्षीर्हितं परम् ॥ 2362 ॥

संयुगे युद्धे विषयभूते न मा क्रंस्थाः मोत्साहं न कार्षीः । अपि तूत्सहस्व । क्रमेस्सर्गे उत्साहे तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2027. वैष्णवं चक्रं रावणस्याधिकन्धरं कन्धरायां नाक्रमत अप्रतिहतं न क्रमते स्म न प्रवर्तते स्म । किन्तु प्रतिहतमेवेत्यर्थः । वृत्तावात्मनेपदम् । वृत्तिरप्रतिबन्धः ।

अस्मिन्नेव ग्रन्थे श्लो० 1648. नैष्ठिकानां मुनीनां मतिर्विषयेषु क्रमते । न केनापि प्रतिबध्यत इत्यर्थः । वृत्तौ तङ् ।

२७१२ । उपपराभ्याम् । (१. ३. ३९)

वृत्त्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात् । उपक्रमते । पराक्रमते ।

अस्मिन्नेव ग्रन्थे श्लो० 2356. नभस्वतस्सूनुः खे पराक्रंस्त । अप्रतिबन्धेनोत्साहेन वा जगामेत्यर्थः । परापूर्वात्क्रमेर्वृत्तौ सर्गे वा तङ् ।

भट्टिकाव्ये—VIII. 23.

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतुतारा भयप्रदा ॥ 2363 ॥

राक्षसी तस्य हनुमतो विक्रमं परीक्षितुमुपाक्रंस्त उत्सेहे । उद्युक्तेत्यर्थः । उपपूर्वात्क्रमेस्सर्गे तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 592. त्वां द्रष्टुमुपाक्रंसि अप्रतिबन्धमुपक्रान्तवानस्मि । वृत्तौ तङ् । सर्ग उत्साहे तङिति जयमङ्गलः ।

किरातार्जुनीये—XVI. 18.

माया स्विदेषा मतिविभ्रमो वा
ध्वस्तं नु मे वीर्यमुताहमन्यः ।
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते ॥ 2364 ॥

न पराक्रमन्ते अप्रतिबन्धेन न प्रवर्तन्ते । वृत्तावात्मनेपदम् ॥

२७१३ । आङ उद्गमने । ( १. ३. ४० )

आक्रमते सूर्यः । उद्यत इत्यर्थः ।

वा० । ज्योतिरुद्गमन इति वाच्यम् । (921.)

नेह । आक्रामति धूमो हर्म्यतलात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2363. दिवमाकाशं प्रति आक्रममाणा उद्गच्छन्ती केतुतारेव ज्योतिरिव । क्रमेराङ्पूर्वादात्मनेपदम् ।

रघुवंशे—V. 71.

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ 2365 ॥

प्रतापनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति । तङ् ।

२७१४ । वेः पादविहरणे । ( १. ३. ४१ )

साधु विक्रमते वाजी ।

भट्टिकाव्ये—VIII. 24.

जले विक्रममाणाया हनूमान् शतयोजनम् ।
आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ 2366 ॥

विक्रममाणायाः पादाभ्यां विहरन्त्याः । विपूर्वात्क्रमेः पादविक्षेपार्थात्तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1555. विचक्रमे विचचार । पूर्ववत्तङ् ।

माघे—V. 9.

उद्यत्कृशानुशकलेषु खुराभिघातात्
भूमीसमायतशिलाफलकाचितेषु ।
पर्यन्तवर्त्मसु विचक्रमिरे महाश्वाः
शैलस्य दर्दुरपुटानिव वादयन्तः ॥ 2367 ॥

महाश्वा विचक्रमिरे । जग्मुः । तङ् ।

२७१५ । प्रोपाभ्यां समर्थाभ्याम् । (१. ३. ४२)
समर्थौ तुल्यार्थौ । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते उपक्रमते ।

भट्टिकाव्ये—VIII. 25.

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम् ।
उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ 2368 ॥

सीतां द्रष्टुं प्रक्रममाणः आरभमाणोऽसौ हनूमानम्भोनिधेस्तटं उपाक्रंस्त क्रमितुमारब्धवान् । उभयत्राप्यात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 346. रावणस्सीतां हन्तुं प्राक्रमत प्रारब्धवान् ।

अस्मिन्नेव ग्रन्थे श्लो० 1965. कुम्भकर्णः प्राक्रंस्त प्रस्थितः । तङ् ।

भट्टिकाव्ये—XIV. 28.

रक्तपङ्के गजास्सेदुर्न प्रचक्रमिरे रथाः ।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥ 2369 ॥

रथा न प्रचक्रमिरे न गन्तुमारब्धाः । तङ् ।

माघे—IX. 43.

इति निश्चितप्रियतमागतयः
सितदीधितावुदयवत्यबलाः ।

प्रतिकर्म कर्तुमुपचक्रमिरे
समये हि सर्वमुपकारिकृतम् ॥ 2370 ॥

अबलाः प्रतिकर्म प्रसाधनं कर्तुमुपचक्रमिरे आरब्धवत्यः । तङ्.

रघुवंशे—II. 15.

सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ 2371 ॥

धेनुः पतङ्गस्य प्रभा च निलयाय गन्तुं प्रचक्रमे आरब्धवती । तङ्

अस्मिन्नेव ग्रन्थे ग० 2179. उपक्रममाणः आरभमाणः । तङ् ।

२७१६ । अनुपसर्गाद्वा । ( १. ३. ४३ )

क्रामति क्रमते ।

अस्मिन्नेव ग्रन्थे श्लो० 2368. क्रममाणैरितस्ततः सञ्चरद्भिः । विकल्पेनात्मनेपदम् ।

भट्टिकाव्ये— V. 30.

उत्पत्य खं दशग्रीवो मनोयायी शितास्त्रभृत् ।
समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ 2372 ॥

दशग्रीवश्चक्रमे जगाम । पूर्ववत्तङ् ।

रघुवंशे—XVII. 32.

स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ॥ 2373 ॥

सोऽतिथिः रघुवंश्यः कुञ्जरेण क्रममाणः चरन् । वैकल्पिकमात्मनेपदम् ।

२७१७ । अपह्नवे ज्ञः । ( १. ३. ४४ )

तङ् वा स्यात् । शतमपजानीते । अपलपतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1687. स हनूमानात्मानं स्वस्वरूपमपजानानः अपह्नुवानः । जानातेरपोपसृष्टादपह्नवेऽर्थे तङ् ।

२७१८ । अकर्मकाच्च । ( १. ३. ४५ )

तङ् वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1687. रात्रौ ज्ञास्ये भोत्स्ये अनुसन्धास्यामि ।

माघे—XIX. 40.

नानाजाववजानाना सा जनौघघनौजसा ।
परानिहाऽहानिराप तान्वियाततयान्विता ॥ 2374 ॥

नानाजौ चित्रयुद्धे ओजसा अवजानाना अवज्ञां कुर्वती । तङ् ।

कुमारसम्भवे—II. 31.

एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ 2375 ॥

त्वं कथं न ज्ञास्यसि न वेत्सि । वर्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः । आत्मनेपदविकल्पः ।

२७१९ । संप्रतिभ्यामनाध्याने । ( १. ३. ४६ )

शतं सञ्जानीते । अवेक्षत इत्यर्थः । शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः । 'संज्ञोऽन्यतरस्यां कर्मणि' ( सू. 567 ) इति कर्मणि तृतीया वा स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 329. अनिलात्मजो हनूमान् मैथिल्या सञ्जानानः एषेति मैथिलीं जानन् । आत्मनेपदम् । कर्मणि तृतीया ।

अस्मिन्नेव ग्रन्थे श्लो० 330. अहं मायामियान् सञ्जानानः पश्यन् । आत्मनेपदम् । कर्मणि द्वितीया ।

भट्टिकाव्ये—XIV. 64.

आदिदेश स किष्किन्धां राघवौ नेतुमङ्गदम् ।
प्रतिजज्ञे स्वयं चैव सुग्रीवो रक्षसां वधम् ॥ 2376 ॥

सुग्रीवो रक्षसां वधं प्रतिजज्ञे अहमेव व्यापादयामीति । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1687. प्रत्यज्ञास्त प्रतिज्ञानवान् । तङ् । प्रत्यज्ञासीदिति पाठे आध्यातवानित्यर्थः । 'अनाध्याने' इति निषेधात् ।

भट्टिकाव्ये— VIII. 27.

सञ्जानानान् परिहरन् रावणार्थंचरान्बहून् ।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमाम् ॥ 2377 ॥

सञ्जानानान् स्वपरान् परामृशतः । अनाध्याने तङ् ।

अनर्घराघवे—IV. 1.

स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपा-
स्तायन्ते ककुभो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिधः ।
अद्यापि स्वकुलायशाखिशिरसि स्थित्वा रुवन्तो मुहुः
तूर्ष्णीं प्रत्यभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान् ॥ 2378 ॥

प्रत्यभिजानते सम्यग्जानन्ति । अभिना प्रतेर्व्यवधानादनेन न तङ् । किन्तु कर्मव्यतीहारे तङ् ।

२७२० । भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः । (१. ३. ४७)

शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । उपसम्भाषोपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने, शास्त्रे वदते । यत्ने, क्षेत्रे वदते । विमतौ, क्षेत्रे विवदन्ते । उपमन्त्रणमुपच्छन्दनम् । उपवदते प्रार्थयते ।

अस्मिन्नेव ग्रन्थे श्लो० 2377. वदमानो वदितुं जानानः । ज्ञाने वदेरात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2338. असौ हनुमान् किञ्चिन्नोपावदिष्ट नोपसम्भाषितवान् । उपसान्त्वनवादमपि केनचिन्नाकरोदित्यर्थः । उपसम्भाषायामुपसान्त्वनापराख्यायामात्मनेपदम् । केनचिन्न व्यवदिष्ट विवादश्च नाकरोत् । विमतौ तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 395. तां दमयन्तीं विवोढुमुपगता भुवः परिवृढा न विवदन्ते किम् न कलहिष्यन्ते किम् ? सामीप्ये लट् । विमतावात्मनेपदम् ।

अनर्घराघवे—V. 6.

ग.—भो भो लक्ष्मण! वैशेषिककटन्दीपण्डितो जगद्विजयमानः पर्यटामि। कासौ रामस्तेन सह विवदिष्ये ॥ 2379 ॥

विवदिष्ये उद्ग्राहं करिष्ये योत्स्ये च। अनेन तङ्।

अनर्घराघवे—IV. 5.

प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः।
करजव्रणविरलस्तनपुलकममूः किमपि विवदन्ते ॥ 2380 ॥

अमूः स्त्रियः विवदन्ते विवादं कुर्वन्ति। विमतौ तङ्।

## २७२१। व्यक्तवाचां समुच्चारणे। (१. ३. ४८)

मनुष्यादीनां संभूयोच्चारणे वदेरात्मनेपदं स्यात्। संप्रवदन्ते ब्राह्मणाः। नेह, संप्रवदन्ति खगाः।

अस्मिन्नेव ग्रन्थे श्लो० 2338. रावणस्य गुणान्प्रवदमानान् सम्भूय कथयतः। तङ्। अभिवदनव्यवहारसमर्था मनुष्यादयो व्यक्तवाचः।

## २७२२। अनोरकर्मकात्। (१. ३. ४९)

भट्टिकाव्ये—VIII. 29.

जल्पितोत्कृष्टसङ्गीतप्रनृत्तस्मितवल्गितैः।
घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ 2381 ॥

लङ्का स्वर्गस्य घोषस्य। सम्बन्धसामान्ये षष्ठी। अन्ववदिष्टेव अनुचकारेव। अकर्मकात्तङ्।

चम्पूरामायणे—I. 40.

आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः।
तमेवान्ववदत्तस्य चापः शिञ्जारवच्छलात् ॥ 2382 ॥

रामेण ताटकावधः आश्रुतः। तस्य चापः शिञ्जारवच्छलात्तमेवान्ववदत्। सकर्मकात्त्र तङ्।

## २७२३ । विभाषा विप्रलापे । ( १. ३. ५० )

विप्रवदन्ते विप्रवदन्ति वा वैद्याः ।

अस्मिन्नेव ग्रन्थे श्लो० 1035. विप्रवदमानैः युगपत् परस्परविरुद्धं प्रलपद्भिः । तङ् ।

## २७२४ । अवाद्ग्रः । ( १. ३. ५१ )

अवगिरते । ' गृणातिस्तु अवपूर्वो न प्रयुज्यत एव ' इति भाष्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1035. मांसशोणितमवगिरमाणैः गिलद्भिः । गिरतेस्तौदादिकात्तङ् ।

## २७२५ । समः प्रतिज्ञाने । ( १. ३. ५२ )

शब्दं नित्यं सङ्गिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञाने किम् ? सङ्गिरति ग्रासम् ।

भट्टिकाव्ये—VIII. 31.

> यथार्थं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनो गुणान् ।
> पानशौण्डाः पथः क्षीबा वृन्दैरुदचरन्त च ॥ 2383 ॥

राक्षसाः पिशाचाश्च गोष्ठीषु स्वामिनो गुणान् सङ्गिरन्ते स्म प्रतिजानते स्म । तङ् ।

भट्टिकाव्ये—III. 8.

> वसूनि देशांश्च निवर्तयिष्यन्
> ग्रामं नृपस्सङ्गिरमाण एव ।
> तयावजज्ञे भरताभिषेको
> विषादशङ्कुश्च मतौ निचख्ने ॥ 2384 ॥

नृपो रामं वनगमनान्निवर्तयिष्यन् वसूनि देशांश्च सङ्गिरमाण एव देवि एतानि ते दास्यामीति प्रतिजानान एव । गिरतेस्तौदादिकात् तङि लटः शानच् ।

असुरसमरवेलाजातबाधावसाने
वरयुगमदिशस्त्वं प्रीतिपूर्वं यया मे ।
अशिथिलगुणबन्धास्सत्यसन्धा नरेन्द्रा
जललिपिरिति कामं सङ्गिरन्तां गिरं ताम् ॥ 2385 ॥

सङ्गिरन्ताम् । लोट् ।

२७२६ । उदश्चरः सकर्मकात् । (१. ३. ५३)

घर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम् ? बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2383. राक्षसाः पिशाचाश्च बृन्दैः सङ्घशः पथो मार्गान् उदचरन्त उल्लङ्घ्य चरन्ति स्म । उत्पथप्रवृत्तास्सञ्चेरुरित्यर्थः । तङ् ।

माघे—XVII. 52.

अथोच्चकैर्जरठकपोतकन्धरा-
तनूरुहप्रकरविपाण्डुरद्युति ।
बलैश्चलच्चरणविधूतमुच्चल-
द्घनावलीरुदचरत क्षमारजः ॥ 2386 ॥

क्षमारजः कर्तृ । घनावलीः कर्म । उदचरत । तङ् ।

अनर्घराघवे—II. 4.

प्राचीविभ्रमकर्णिकाकमलिनीसंवर्तिकास्संप्रति
द्वे तिस्रो रमणीयमम्बरमणेर्द्यामुच्चरन्ते रुचः ।
सूक्ष्मोच्छ्वासमपीदमुत्सुकतया संभूय कोषाद्बहिः
निष्कामद्भ्रमरौघसम्भ्रमभरादम्भोजमुज्जृम्भते ॥ 2387 ॥

अम्बरमणेर्द्वे तिस्रो रुचो द्यामुच्चरन्ते ।

नैषधे—V. 48.

यो मघोनि दिवमुच्चरमाणे
रम्भया मलिनिमालमलम्भि ।

ऊर्णी एव स खलज्ज्वलदस्त्राः
शान्तमन्तरमभापत भङ्ग्या ॥ 2388 ॥

मघोनि दिवमुच्चरमाणे सति उत्पतति सति । तङ् ।

माघे—XV. 53.

प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत् ।
यामि हरणजनितानुशयस्समुदाचचार निज एव रुक्मिणः ॥2389॥

समुदाचचार समुद्दिदीपे । उदः आङा व्यवहितत्वात् अकर्मकत्वाच्च न तङ् ।

रघुवंशे—XVI. 87.

तस्याः स्पृष्टे मनुजपतिना साहचर्याय हस्ते
माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य ।
दिव्यस्तूर्यध्वनिरुदचरव्द्यश्नुवानो दिगन्तान्
गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्यमेघाः ॥ 2390 ॥

तूर्यध्वनिरुदचरत् उत्थितः । अकर्मकात्परस्मैपदम् ।

२७२७ । समस्तृतीयायुक्तात् । (१. ३. ५४)

रथेन सञ्चरते ।

अस्मिन्नेव ग्रन्थे श्लो० 333. अन्ये यानैः वाहनैस्समचरन्त सञ्चरितवन्तः । सम्पूर्वाच्चरेस्तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2096. स हनूमान् रक्षसां हर्म्येषु समचारीत् सञ्चचार । अतृतीयायोगान्न तङ् ।

रघुवंशे—XIII. 19.

क्वचित्पथा सञ्चरते सुराणां
क्वचिद्घनानां पततां क्वचिच्च ।

यथाविधो मे मनसोऽभिलाषः
प्रवर्तते पश्य तथा विमानम् ॥ 2391 ॥

विमानं क्वचित्सुराणां क्वचिद्धनानां क्वचित्पततां पथा सञ्चरते । पथेतितृतीया-योगाच्चरेस्तङ् ।

माघे—X. 7.

स्वादनेन सुतनोरविचारा-
दोष्ठतस्समचरिष्ट रसोऽत्र ।
अन्यमन्यदिव यन्मधु यूनः
स्वादुमिष्टमतनिष्ट तदेव ॥ 2392 ॥

सुतनोः कर्न्याः स्वादनेन आस्वादनेन । तृतीया । ओष्ठतः ओष्ठात् । रसोऽत्र मधुनि अविचारादसंशयात्समचरिष्ट सङ्क्रान्तः । सम्पूर्वाच्चरतेर्लुङ् । तङ् ।

नैषधे—VI. 57.

पद्भ्यां नृपस्सञ्चरमाण एष
चिरं परिभ्रम्य कथं कथञ्चित् ।
विदर्भराजप्रभवानिवासं
प्रासादमभ्रङ्कषमाससाद ॥ 2393 ॥

एष नृपः पद्भ्यां सञ्चरमाणो गच्छन् । तङ् ।

चम्पूरामायणे—I. 21.

ग.—सोऽयं कदाचित् क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेत चेत् आगमिष्यत्याग इति अनाविष्कृतातपो भयेन भगवान् सहस्रभानुरपि सङ्कुचित-भानुरेव तत्सानूनि नूनं संश्रयते ॥ 2394 ॥

रावणश्चरणाभ्यां सञ्चरेत चेत् । तङ् ।

अस्मिन्नेव ग्रन्थे ग० 479. सुपथा सञ्चरमाणाः । तङ् ।

चम्पूभारते—IV. 70.

ग.—तदानीमेव रजतगिरिशिखरान्निर्गच्छन्तौ किमेतदिति सांशयिकैरपि तदनुसरणोचितवेषरचनानुकूलैः प्रमथकुलैः परिवार्यमाणौ समुच्छलितलाङ्गूलमितस्ततो धावद्भिः दूरचारश्रमविदारितवदनलम्बमानरसनाग्रनिपातिनीभिः शृगिकाकणिकाभिः वनपद्धतिं शुद्धतरीं कुर्वद्भिः दृढतरश्वसितकम्पमानावयवैः तेषु तेषु वनगुल्मेषु श्वापदानन्विष्यान्विष्य हुङ्कारमाचरद्भिः विश्वनियमविश्वकद्रुभिरविमुच्यमानपार्श्वभागौ दीपकमृगायमाणनिजहरिणशावकपार्ष्णिभागानुधाविनौ भाविनि पदे पदे वनदेवताभिरर्प्यमाणनुरतरुप्रसवास्तरणेन प्रशमिततुहिनजडिमोद्वेगेन हिमवतः कटकपथेन सविलासं सञ्चरमाणौ कावेतौ कदाचिदप्यदृष्टपूर्वौ वनमस्मदीयमाक्रमेते इति रोषकषायिततया निवारयितुकामैरपि तेजोविशेषेण प्रतिहतोत्साहैरन्यैः शबरयुवभिः केवलमवलोक्यमानौ जटावल्लरीमूलपल्लवमुकुलीभवदञ्जलिभिः तपस्विपुञ्जैर्नभसि विमानवेगं निरुध्य हर्षाश्रुभिर्मरुद्भिश्चाभिवर्ध्यमाणजयशब्दौ तौ जगदादिमौ दम्पती सनियममुपासीनस्य शुनासीरसुतस्य तपोवनसीमानं शनैः शनैः आसीदताम् ॥ 2395 ॥

कटकपथेन सविलासं संचरमाणौ । तङ् ।

चम्पूभारते—XI. 41.

तत्र तत्र युधि सञ्चरमाणः शल्यसारथिमता स रथेन ।
चूषितारिमदवारितयासौ सूर्यसूनुरपि चण्डकरोऽभूत् ॥ 2396 ॥

रथेन सञ्चरमाणः ।

चम्पूभारते—VIII. 71.

कमनीययशोभरे तनूजे कवचोत्कर्तनकर्कशाद्भकेऽपि ।
मलिनाम्बुदुलं नरेन्द्रपत्न्या नयनं तत्र चिरेण सञ्चचार ॥ 2397 ॥

नरेन्द्रपत्न्या नयनं तत्र कर्णे चिरेण सञ्चचार । न तङ् ।

२७२८ । दाणश्च सा चेच्चतुर्थ्यर्थे । (१. ३. ५५)

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्, सा च तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते । व्यवहितेऽपि, दास्या संप्रयच्छते । 'अशिष्ट' (वा. 5040 सू. 568.) इति तृतीया ।

अस्मिन्नेव ग्रन्थे श्लो० 333. अन्ये शुभं पुष्पफलं बन्दीभिः **संप्रायच्छन्त** । बन्दीकृताभ्यः स्त्रीभ्यो ददुरित्यर्थः । दाण् दाने इति धातोः 'पाघ्रा' (सू. 2360) इति यच्छादेशः । अनेनात्मनेपदम् । 'अशिष्ट' (वा. 5040. सू. 568) इति वचनात् चतुर्थ्यर्थे तृतीया ।

२७२९ । उपाद्यमः स्वकरणे । (१. ३. ५६.)

स्वकरणं स्वीकारः । भार्यामुपयच्छते ।

अस्मिन्नेव ग्रन्थे श्लो० 348. काश्चिकान्ताः आसवं कोपात् **नोपायंसत** न स्वीचक्रुः । अनेन पाणिग्रहणे विधानेऽपि अत्र स्वीकरणमात्रे तङ्प्रयोगश्चिन्त्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. दशाननः सीतां **नोपायंस्त** न स्वीकरोत् । तङ् ।

अस्मिन्नेव ग्रन्थे श्लो 50. सौमित्रे मा**मुपायंस्थाः** । उपयच्छस्वेत्यर्थः । तङ् ।

भट्टिकाव्ये—IV. 28.

ततो वावृत्यमानासौ रामशालां न्यविक्षत ।
**मामुपायंस्त** रामेति वदन्ती सादरं वचः ॥ 2398 ॥

असौ राक्षसी वावृत्यमाना रामं वृण्वाना । वरिष्यन्ती सतीत्यर्थः । वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः । वावृतु वरणे इति धातोः दैवादिकाल्लटः कर्तरि शानच् । हे राम मा**मुपायंस्त** परिणयतु भवान् । शेषत्वविवक्षायां प्रथमपुरुषः । अनेन तङ् ।

माघे—XV. 27.

जगति श्रिया विरहितोऽपि
यदुदधिसुता**मुपायथाः** ।

ज्ञातिजनजनितनामपदां
त्वमतदिभव:पतिरिति प्रथासगाः ॥ 2399 ॥

त्वमुदधिसुताम्रुपायथा विवाहमकरोः । तङ् ।

रघुवंशे-- XIV. 87.

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ 2400 ॥

रामः सीतां हित्वा अन्यां नोपयेमे न परिणीतवान् । तङ् ।

## २७३०. । विभाषोपयमने । (१. २. १६)

यमः सिच् किद्वा स्याद्विवाहे । रामः सीतामुपायत उपायंस्त वा ।

अस्मिन्नेव ग्रन्थे श्लो० 50. सौमित्रे मामुपायंस्थाः । सिचः किद्भावपक्षः ।

अस्मिन्नेव ग्रन्थे श्लो० 2398. मामुपायंस्त रामः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. दशाननः सीतां मोपायंस्त न स्वीकरोतु । पूर्ववत् ।

## २७३१ । ज्ञाश्रुस्मृदृशां सनः (१. ३. ५७)

सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ।

अस्मिन्नेव ग्रन्थे श्लो० 348. प्रेम जिज्ञासमानाभ्यः ज्ञातुं इच्छन्तीभ्यः । जानातेः सन्नन्तादात्मनेपदम् ।

भट्टिकाव्ये—VIII. 34.

प्रादिदृक्षत नो नृत्तं नाशुश्रूषत गायनान् ।
रामं सुस्मूर्षमाणोऽसौ कपिर्विरहदुःखितम् ॥ 2401 ॥

शर्मं शुस्मूर्षमाणः स्मर्तुमिच्छन् । स्मरतेः सन्नन्ताल्लटः शानच् । कपिः कुत्रापि नृत्तं नो प्रादिदृक्षत प्रद्रष्टुं नैच्छन् । गायनान् नाशुश्रूषत श्रोतुं नैच्छत् । दृशेः शृणोतेश्च सन्नन्तात्तङि लुङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1072. जनकोऽस्य रामस्य बाहोर्बलं जिज्ञासमानो ज्ञातुमिच्छन् । जानातेः सन्नन्तात्तङि लटः शानच् ।

चम्पूरामायणे—I. 88.

ग—तां कैतवेन शुश्रूषमाणः शतधारपाणिः पादकलितकचकलापामापन्ननिद्रां अपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम ॥2402॥

शुश्रूषमाणः । शृणोतेः सन्नन्ताल्लटः शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 339. दिदृक्षमाणः द्रष्टुमिच्छन् । दृशेः सन्नन्तादात्मनेपदम् । शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 377. चतुर्थमप्याश्रमं अस्यार्जुनस्य साधनीभूय तां सुभद्रां दिदृक्षते स द्रष्टुमैच्छत् । दृशेः सन्नन्ताल्लट् ।

## २७३२ । नानोर्ज्ञः । (१. ३. ५८)

पुत्रमनुजिज्ञासति । पूर्वसूत्रस्यैवायं निषेधः ।

भट्टिकाव्ये—VIII. 85.

अनुजिज्ञासता तस्मै लङ्कादर्शनमिन्दुना ।
तमोऽपहविमुक्तांशु पूर्वस्यां दिश्युदैयत ॥ 2403 ॥

तस्मै हनूमते लङ्कादर्शनं अनुजिज्ञासता अनुज्ञातुमिच्छतेव । जानातेः सन्नन्ताल्लटः शत्रादेशः । अनुपूर्वस्य सन्नन्तस्यात्मनेपदप्रतिषेधः ।

## २७३३ । प्रत्याङ्भ्यां श्रुवः (१. ३. ५९)

आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात् । प्रतिशुश्रूषति । आशुश्रूषति । कर्मप्रवचनीयात्स्यादेव । देवदत्तं प्रतिशुश्रूषते ।

अनर्घराघवे—V. 35.

ग—वत्स गुह ! न तावत्प्रकाशमेवं प्रतिशुश्रूषति मे हृदयम् ॥ 2404 ॥

प्रतिशुश्रूषति अङ्गीकारमिच्छति । 'ज्ञाश्रु' (सू. 2731) इति प्राप्तस्य तङः अनेन प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 378. राघवस्तस्मै विभीषणाय । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (सू. 578) इति चतुर्थी । निशाचरैश्वर्यं प्रतिशुश्राव प्रतिज्ञातवान् । प्रतिपूर्वाच्छृणोतेर्लिट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2096. स हनूमान् मैथिल्या वार्तां वृत्तान्तमाशुश्रूषन् समन्ताच्छ्रोतुमिच्छन् । आङ्पूर्वाच्छृणोतेः सन्नन्तात् लटः शत्रादेशः । अनेनात्मनेपदप्रतिषेधः ।

## २७३४ । पूर्ववत्सनः । (१. ३. ६२)

अस्मिन्नेव ग्रन्थे श्लो० 1962. क्षपाकरे चन्द्रे वियन्मध्यमध्याशिशिषमाणे अध्यासितुमिच्छति । 'अधिशीङ्' (सू. 542) इति कर्मत्वम् । आस उपवेशने आत्मनेपदम् । सन्नन्तादपि पूर्ववदात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 66. सीतां वयं लिप्सामहे लब्धुमिच्छामः । लभेरात्मनेपदात् सनि तदन्ताल्लट् । पूर्ववदात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1517. सैनिका व्यजिगीषन्त विजेतुमैच्छन् । जि जये परस्मैपदम् । 'विपराभ्यां जेः' (सू. 2685) इति तङ् । विजयते । सनि पूर्ववदात्मनेपदम् । विजिगीषते ।

अस्मिन्नेव ग्रन्थे श्लो० 2352. वराहः समराय समाजुहूषमाण इव समाह्वातुमिच्छन्निव । समाह्वयतेः सन्नन्ताच्छानच् । 'स्पर्धायामाङः' (सू. 2704) इति तङ् । ततः सन्नन्तादपि पूर्ववत्तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2283. विजिगीषते विजेतुमिच्छति । विपूर्वाज्जयतेरात्मनेपदात्सन्नन्ताल्लट् ।

२७३५ । प्रोपाभ्यां युजेरयज्ञपात्रेषु । (१. ३. ६४)

प्रयुङ्क्ते । उपयुङ्क्ते ।

वा० । स्वराद्यन्तोपसर्गादिति वक्तव्यम् । (939.)

उद्युङ्क्ते । नियुङ्क्ते ।

भट्टिकाव्ये—VIII. 39.

इन्दुं चषकसंक्रान्तमुपायुङ्क्त यथामृतम् ।
प्रयुञ्जानः प्रिया वाचः समज्यानुरतो जनः ॥ 2405 ॥

जनः कामिजनः प्रिया वाचश्चाटूक्तीः प्रयुञ्जानो ब्रुवाणः सन् चषके संक्रान्तमिन्दुममृतं यथामृतमिव उपायुङ्क्त उपयुक्तवान् । पीतवानिवेत्युत्प्रेक्षा । उभयत्रापि तङ् ।

भट्टिकाव्ये—III. 51.

अरण्ययाने सुकरे पिता मां
प्रायुङ्क्त राज्ये बत दुष्करे त्वाम् ।
मा गाः शुचं धीर भरं वहामु-
माभाषि रामेण वचः कनीयान् ॥ 2406 ॥

पिता मां सुकरे अरण्ययाने त्वां दुष्करे राज्ये प्रायुङ्क्त नियुक्तवान् । तङ् ।

रघुवंशे—VIII. 21.

पणबन्धमुखान्गुणानजः
षडुपायुङ्क्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद्गुणत्रयं
प्रकृतिस्थं समलोष्टकाञ्चनः ॥ 2407 ॥

23

अजः षड्गुणान् तत्फलं समीक्ष्य उपायुङ्क्त । फलिष्यन्तमेव गुणं प्रायुङ्क्तेत्यर्थः । तङ् ।

अनर्घराघवे—II. 19.

तपःकृशतरैरङ्गैः सद्माकारितैरिव ।
सायंप्रातरमी पुण्यमग्निहोत्रं प्रयुञ्जते ॥ 2408 ॥

प्रयुञ्जते कुर्वते । तङ् ।

अनर्घराघवे—II. 16.

इत्थमेतन्महातीर्थमध्यासीना द्विजातयः ।
अकुतोभयसंचाराः षट्कर्माणि प्रयुञ्जते ॥ 2409 ॥

२७३६ । समः क्ष्णुवः । (१. ३. ६५)

संक्ष्णुते शस्त्रम् ।

भट्टिकाव्ये—VIII. 40.

संक्ष्णुवान इवोत्कण्ठामुपाभुङ्क्त सुरामृतम् ।
ज्योत्स्नया विगलन्मानस्तरुणो रक्षसां गणः ॥ 2410 ॥

रक्षसां गणः उत्कण्ठामन्योन्यरागं संक्ष्णुवान इव उत्तेजयन्निव । तङ् ।

भट्टिकाव्ये—XVII. 55.

समक्ष्णुवत शस्त्राणि प्रामृजन्खङ्गसंहतीः ।
गजादीनि समारोहन् प्रातिष्ठन्ताथ सत्वराः ॥ 2411 ॥

योद्धारः शस्त्राणि समक्ष्णुवत । क्ष्णु तेजने इत्यस्मात् संपूर्वात्तङ् ।

अनर्घराघवे—IV. 18.

आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।

वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ 2412 ॥

जामदग्न्यः घनास्त्रव्रणकिणकठिने वक्षःपीठे पृषत्कान् संक्ष्णुवानस्तेजयन् । तङ् ।

२७३७ । भुजोऽनवने । ( १. ३. ६६ )

ओदनं भुंक्ते । अभ्यवहरतीत्यर्थः । 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' 'वृद्धो जनो दुःखशतानि भुंक्ते' । इहोपभोगो भुजेरर्थः । अनवने किम् । महीं भुनक्ति ।

अस्मिन्नेव ग्रन्थे श्लो० 2410. रक्षसां गणः सुरामृतसुधा भुंक्त उपभुक्तवान् । पपावित्यर्थः । अनेन तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1060. स रामः शूल्यमुख्यं च बुभुजे भुक्तवान् । पूर्ववत्तङ् ।

भट्टिकाव्ये --XVI. 5.

उद्यस्यति हरिर्वज्रं विचरिष्यति निर्भयः ।
भोक्ष्यते यज्ञभागांश्च शूरमानं च वक्ष्यति ॥ 2413 ॥

हरिरिन्द्रः यज्ञभागांश्च भोक्ष्यते भक्षयिष्यति । तङ् ।

रघुवंशे—XII. 18.

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ 2414 ॥

स भरतः पुरीं नाविशदेव नन्दिग्रामगतः सन् तस्य रामस्य राज्यं न्यासमिवाभुनक् अपालयत् । न तु उपभुक्तवान् । अवनार्थे निषेधान्न तङ् ।

रघुवंशे—XV. 1.

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ 2415 ॥

स राजः पृथिवीमेव बुभुजे भुक्तवान् ।

रघुवंशे—XVIII. 3.

पौत्रः कुशस्यापि कुशेशयाक्षः
ससागरां सागरधीरचेताः ।
एकातपत्रां भुवमेकवीरः
पुरार्गलादीर्घभुजो बुभोज ॥ 2416 ॥

कुशस्य पौत्रो निषधोऽपि भुवं बुभोज पालयामास । अवने इति निषेधादवनार्थे परस्मैपदम् ।

रघुवंशे—III. 4.

दिवं मरुत्वानिव भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे
मनो बबन्धान्यरसान् विलङ्घ्य सा ॥ 2417 ॥

तत्सुतो रघुर्मरुत्वान् दिवमिव भुवं भोक्ष्यते उपभोक्ष्यते । तङ् ।

अनर्घराघवे—III. 40.

मघोनस्तद्वीरं कुलिशमलसीकृत्य समरे
भुनक्ति स्वाराज्यं त्रिभुवनभटोऽयं दशमुखः ।
श्रियो नानास्थानभ्रमणरमणीयां चरलता
मवच्छिद्य स्वस्मिन्नपि भुजवने पूरयति यः ॥ 2418 ॥

अयं दशमुखः स्वाराज्यं स्वर्गं भुनक्ति अवति । न तङ् ।

**२७३८ । णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने । (१. ३. ६७)**

ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्यते । अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यात्, न त्वाध्याने ।

माघे—XII. 5.

उत्क्षिप्तगात्रः स विडम्बयन्नभः
समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।
आकुञ्चितप्रोहनिरूपितक्रमं
करेणुरारोहयते निषादिनम् ॥ 2419 ॥

करेणुर्निषादिनं आरोहयते स्म । स्वयमेव स्वात्मन्यारोपयत इत्यर्थः । रुहेर्गत्यर्थत्वात् 'गतिबुद्धि' (सू. 540) इत्यादिना अणिकर्तुर्निषादिनः कर्मत्वम् । अत्र कर्त्रभिप्राये 'णिचश्च' (सू. 2564) इत्यात्मनेपदे सिद्धेऽपि अकर्त्रभिप्राये अनेन तङ् । अणिकर्मणः करेणोरेवात्र ण्यन्ते कर्तृत्वात् । तस्यैव चार्थात्कर्मत्वात् इति ।

अस्मिन्नेव ग्रन्थे श्लो० 266. स दुर्योधनः अनुजीविनो भृत्यान् सखीनिव **दर्शयते** । सुहृदः बन्धुभिः समानमानान् **दर्शयते** । बन्धुतां कृताधिपत्यामिव **दर्शयते** । पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान्राजा । इह त्वण्यन्तावस्थायां कर्तॄणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 264. गृहेऽपि स्वां वनितां ह्रीनिमीलि वदनं कथं **दर्शयिताहे** दर्शयिष्यामि । तङ् ।

भट्टिकाव्ये—VIII. 41.

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके ।
आत्मानं सुरताभोगविस्रम्भोत्पादनं मुहुः ॥ 2420 ॥

मधु मद्यं कर्तृ, मुहुरात्मानं **अपाययत** । दयितकर्तृकं स्वकर्मकं पानं मधु दयितैः स्वयमेव कारयदित्यर्थः । पिबतेर्ण्यन्तात् लङ् । अणिकर्मणः कर्तृत्वकर्मत्वोभयविवक्षायां अकर्त्रभिप्राये अनेन तङ् ।

## २७३९ । गृधिवंच्योः प्रलम्भने । (१. ३. ६९)

प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत् । माणवकं गर्धयते वंचयते वा ।

भट्टिकाव्ये—VIII. 43.

सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्धयत राक्षसान् ।
अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषाम् ॥ 2421 ॥

स हनूमान् राक्षसानगर्धयत विप्रलब्धवान् । नरद्विषां मायाश्च स्वमायाभिः अवञ्चयत वञ्चितवान् । उभयत्रापि तङ् ।

भट्टिकाव्ये—XV. 15.

मूर्खास्त्वामवञ्चयन्त ये विश्रब्धगिरं जनम् ।
प्रमाणीकृत्यमानान् युक्तमक्षैस्त्वं न जनस्थान् ॥ 2422 ॥

मूर्खास्त्वामववञ्चन्त विप्रलब्धवन्तः । वञ्चु प्रलम्भने । ण्यन्तस्य अनेन तङि चङि रूपम् ।

२७४० । मिथ्योपपदात्कृञोऽभ्यासे । ( १. ३. ७१ )

णेः इत्येव । पदं मिथ्या कारयते । स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्योपपदात्किम् । पदं सुष्ठु कारयति । अभ्यासे किम् । सकृत्पदं मिथ्या कारयति ।

अस्मिन्नेव ग्रन्थे श्लो० 2153. तस्य हनूमतो राक्षसेश्वरो रावणश्चारैर्नगररक्षिजनैर्घोषणामन्तः ज्ञात्वा सद्यो मारयत इत्येवंरूपां डिण्डिमवाद्यपूर्विकामाघोषणां पुनःपुनर्मिथ्या कारयते अर्थशून्यमेव अभ्यासेनावृत्त्या कारयतीत्यर्थः । कृञो ण्यन्तात्तङ् ।

२७४१ । अपाद्वदः । ( १. ३. ७३ )

न्यायमपवदते । कर्त्रभिप्राय इत्येव ।

अस्मिन्नेव ग्रन्थे श्लो० 363. नृभ्योऽपवदमानस्य मनुष्येभ्यो द्रुह्यतः । अनेन तङ् । 'क्रुधद्रुह' (सू. 875 ) इत्यादिना संप्रदानत्वाच्चतुर्थी ।

माघे—XVII. 19.

परानमी यदपवदन्त आत्मनः
स्तुवन्ति च स्थितिरसतामसाविति ।

निनाय नो विकृतिमविस्मितः स्मितं
मुखं शरच्छशधरमुग्धमुद्धवः ॥ 2423 ॥

अमी खलाः परानन्यान् अपवदन्ते निन्दन्ति । अनेनात्मनेपदम् ।

अनर्घराघवे—IV. 53.

नृपानप्रत्यक्षान् किमपवदसे नन्वयमवहं
शिशुक्रीडाभग्नत्रिपुरहरधन्वा तव पुरः ।
अहङ्कारक्रूरार्जुनभुजवनव्रश्चनकला-
निसातो मे बाहुः कथय कतरस्ते प्रहरतु ॥ 2424 ॥

अपवदसे निन्दसि । तङ् ।

## २७४२ । समुदाङ्भ्यो यमोऽग्रन्थे । (१. ३. ७५)

व्रीहीन् संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । अग्रन्थे किम् । उद्यच्छति वेदम् । अधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राय इत्येव ।

अस्मिन्नेव ग्रन्थे श्लो० 2330. श्रियमायच्छमानाभिः स्वीकुर्वाणाभिः । आङ्पूर्वाद्यच्छतेः सकर्मकात् अनेन तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 831. व्यायच्छमानयोर्व्याप्रियमाणयोः । यमेराङ्पूर्वादकर्मकात् 'आङो यमहनः' (सू. 2695) इति तङ् । बाणमायंसीत् उपसंहृतवान् । यमेराङ्पूर्वादकर्त्रभिप्रायत्वात् अनेन न तङ् । सकर्मकत्वात् 'आङो यमहनः' (सू. 2695) इति न तङ् ।

भट्टिकाव्ये—VIII. 47.

नित्यमुद्यच्छमानाभिः स्मरसंभोगकर्मसु ।
जानानाभिरलं लीलाकिलिकिंचितविभ्रमान् ॥ 2425 ॥

कामक्रीडासु नित्यमुद्यच्छमानाभिरुद्युञ्जानाभिः । अस्य सकर्मकाधिकारत्वात् इह यमेरकर्मकत्वादात्मनेपदं चिन्त्यम् ।

भट्टिकाव्ये— XVII. 92

उद्यच्छन्तं महाशक्तिमुद्यच्छन्नपहस्तगम् ।
रामानुजं तथाविध्यत्स महीं न्यपतच्छ्रमात् ॥ 2426 ॥

महाशक्तिमुद्यच्छन् उद्यतवान् । अनेन तङ् न भवति अकर्त्रभिप्रायत्वात् ।

रघुवंशे—XVI. 29.

**उद्यच्छमाना** गमनाय पश्चा-
त्पुरो निवेशे पथि च व्रजन्ती ।
सा यत्र सेना ददृशे नृपस्य
तत्रैव सामग्र्यमतिं चकार ॥ 2427 ॥

**उद्यच्छमाना** उद्योगं कुर्वती । पूर्ववच्चिन्त्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 348. आसवमुदायंसत [1] । उदाङ्पूर्वस्य यम आदानार्थत्वम् ।

भट्टिकाव्ये—IX. 50.

मा न स्रावीर्महास्त्राणि मा न धावीर्गिरिं रणे ।
वानरं मा न संयंसीर्विज तूर्णमहाक्षमः ॥ 2428 ॥

वानरं मा न संयंसीः मा न वधीः । तङ् ।

## २७४३ । अनुपसर्गाज्ज्ञः । ( १. ३. ७६ )

गां जानीते । अनुपसर्गादित्यत्र । स्वर्गं लोकं न प्रजानाति ।

अस्मिन्नेव ग्रन्थे श्लो० 2425. विश्रवान् जानानाभिः । कर्त्रभिप्राये तङ् ।

1. मु. पु. उपायंसत इति पाठः ।

भट्टिकाव्ये—I. 23.

क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः
यास्यन् सुतस्तप्स्यति मां समन्युम् ।
इत्थं नृपः पूर्वमवालुलोचे
ततोऽनुजज्ञे गमनं सुतस्य ॥ 2429 ॥

सुतस्य गमनमनुजज्ञे अनुज्ञातम् । नृपेणेति विभक्तिविपरिणामेन योज्यम् । कर्मणि लिट् । ज्ञा अवबोधन इति परस्मैपदित्वात् । न च अनुपूर्वादस्मादात्मनेपदं विहितम् ।

चम्पूरामायणे—III. 26.

ग—एतदाकर्ण्य विदीर्णहृदया हृदयदयितप्रेम्णा कर्तव्याकर्तव्यमजानाना जानकी जानीहि भ्रातरमिति सौमित्रिमादिदेश ॥ 2430 ॥

कर्तव्याकर्तव्यमजानाना । तङि लिटः शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 960. जानकीजानिरिति जानीहि जनमिमम् । ज्ञा अवबोधने । परस्मैपदम् । लोट् ।

२७४४ । विभाषोपपदेन प्रतीयमाने । (१. ३. ७७)

वा तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1061. झषध्वजः कामः स्वं कर्म कारयन् स्वप्रयोजनं रतिकृत्यं कामिजनैः कारयन् । मदविमोहितान् यूनः स्वार्थं रतिकर्म कारयमाणाभिः । 'हृक्रोरन्यतरस्याम्' (सू. 541) इति विकल्पात् अणिकर्तुः कर्मत्वम् । स्वशब्देन कर्त्रभिप्रायत्वस्य प्रतीयमानत्वात् अनेनोभयत्रापि विकल्पादात्मनेपदम् ।

भट्टिकाव्ये—VIII. 49.

कान्तिं स्वां वहमानाभिः यजन्तीभिः स्वविग्रहान् ।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ 2431 ॥

स्वां कान्तिं वहमानाभिः । वहन्तीभिः स्वविग्रहान् । यजन्तीभिः पूजयन्तीभिः । परिष्कुर्वन्तीभिरित्यर्थः । विकल्पात्तङ् ।

॥ इति आत्मनेपदप्रकरणम् ॥

—:o✲o:—

॥ श्रीरस्तु ॥

## ॥ अथ परस्मैपदप्रकरणम् ॥

— :o: —

शेषात्कर्तरि परस्मैपदम् । (सू. 2159)

अस्मिन्नेव ग्रन्थे श्लो० 2431. पश्यतां चित्तसंहृतीः पिबन्तीभिरिव गृह्णन्तीभिरिव । शेषात्कर्तरि परस्मैपदम् ।

### २७४५ । अनुपराभ्यां कृञः । (१. ३. ७९)

करोतेः परस्मैपदम् ।

भट्टिकाव्ये—VIII. 50.

तद्धनूमान् पराकुर्वन् अगमत्पुष्पकं प्रति ।
विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ 2432 ॥

हनूमान् तद्रावणगृहं पराकुर्वन् परिहरन् मन्दराद्रेः श्रियमनुकुर्वत् विडम्बयदिव स्थितं पुष्पकम् । उभयत्रापि करोतेः परस्मैपदम् ।

माघे—VI. 48.

मुखसरोजरुचं मदपाटलां
अनुचकार चकोरदृशां यतः ।
धृतनवातपमुत्सुकतामतो
न कमलं कमलम्भयदम्भसि ॥ 2433 ॥

धृतनवातपं अम्भसि कमलं मदपाटलां चकोरदृशां मुखसरोजरुचं अनुचकार । अनेन परस्मैपदम् ।

### २७४६ । अभिप्रत्यतिभ्यः क्षिपः । (१. ३. ८०)

अभिक्षिपति ।

भट्टिकाव्ये—VIII. 51.

तस्मिन्कैलाससंकाशे शिरःशृङ्गे भुजद्रुमम् ।
अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ 2434 ॥

विमाने पर्वतश्रियमभिक्षिपन्तमभिभवन्तम् । पर्वतकल्पमित्यर्थः । परस्मैपदम् ।

२७४७ । प्राद्वहः । (१. ३. ८१)

प्रवहति ।

भट्टिकाव्ये—VIII. 52.

प्रवहन्तं मदामोदं सुप्तं परिजनान्वितम् ।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ 2435 ॥

मदामोदं कस्तूरीपरिमलं प्रवहन्तम् । प्रकिरन्तमित्यर्थः ।

२७४८ । परेर्मृषः । (१. ३. ८२)

परिमृष्यति । भौवादिकस्य तु परिमर्षति । इह परेरिति विभज्य वहेरपीति केचित् ।

अस्मिन्नेव ग्रन्थे श्लो० 2435. मघोने इन्द्राय परिमृष्यन्तमसूयन्तम् । अनेन परस्मैपदम् ।

२७४९ । व्याङ्परिभ्यो रमः । (१. ३. ८३)

विरमति ।

अस्मिन्नेव ग्रन्थे श्लो० 2435. स्मरे कामे आरमन्तमासजन्तम् । अनेन परस्मैपदम् ।

भट्टिकाव्ये—VIII. 53.

व्यरमत्प्रथनाद्यस्मात्परित्रस्तः सहस्रदृक् ।
क्षणं पर्यरमत्तस्य दर्शने मारुतात्मजः ॥ 2436 ॥

सहस्राक्षः प्रथनान्न्यरमत् । व्यरंसीत् । 'जुगुप्साविराम' (वा. 1079. सू. 587) इत्यादिना अपादानत्वम् । रावणदर्शने मारुतात्मजः क्षणं पर्यरंसन् अभिरतोऽभूत् । उभयत्रापि परस्मैपदम् । 'यमरम' (सू 2377.) इति सगिटौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1037. ते जना आरेमुः आक्रीडन् । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 653. माधवो हरिः विरराम तूष्णीमास । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 405. देवि ! आग्रहाद्विरम । पञ्चमी । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1563. आपदः विरमन्ति । परस्मैपदम् ।

कुमारसंभवे—III. 58.

भविष्यतः पत्युरुमा च शम्भोः
समाससाद प्रतिहारभूमिम् ।
योगात्स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ 2437 ॥

**उपारराम** उपरतः । परस्मैपदम् ।

## २७५० । उपाच्च । (१. ३. ८४)

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ।

## २७५१ । विभाषाकर्मकात् । (१. ३. ८५)

उपाद्रमेरकर्मकात्परस्मैपदं वा ।

भट्टिकाव्ये—VIII. 54.

**उपारंसीच्च** संपश्यन् वानरस्तं चिकीर्षितात् ।
रम्यं मेरुमिवाभूतकाननं श्रमनोर्मिभिः ॥ 2438 ॥

हनूमान् रावणं संपश्यन् चिकीर्षितात् सीतान्वेषणात् । 'जुगुप्साविराम' (वा. 1079. सू. 587) इति पंचमी । **उपारंसीत्** । व्यरंसीत् । 'उपाच्च' (सू. 2750) इत्यनुवृत्तौ अनेन विकल्पात्परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1916. वायुसंभवः हनूमान् उपारंस्त । ततो गृहान्निवृत्त इत्यर्थः । उपपूर्वाद्रमेर्लुङ् । पक्षे तङ् ।

किरातार्जुनीये—IV. 17.

स मन्थरावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्लवी-
रभिप्रनृत्ता इव वारयोषितः ॥ 2439 ॥

सोऽर्जुनो वल्लवीर्गोपीर्वारयोषित इव निरीक्षितुं नोपरराम न विरमति स्म । परस्मैपदम् ।

किरातार्जुनीये—IX. 44.

साचि लोचनयुगं नमयन्ती
रुन्धती दयितवक्षसि पातम् ।
सुभ्रुवो जनयति स्म विभूषां
संगतावुपरराम च लज्जा ॥ 2440 ॥

उपरराम । परस्मैपदम् ।

## २७५२ । बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः (१. ३. ८६)

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । 'णिचश्च' (सू. 2564) इत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2188. स हनूमान् क्षपाटान् निशाचरान् अविबोधयन् अज्ञापयन् । बुधेः ण्यन्तात् 'णिचश्च' (सू. 2564) इत्यात्मनेपदे प्राप्ते अनेन परस्मैपदम् । लटः शतृ । तान्नायोधयत् न योधितवान् । युधेः ण्यन्तात् पूर्ववत् तङि प्राप्ते तस्याणावकर्मकत्वात् चित्तवन्निशाटकर्तृकत्वाच्च 'अणावकर्मकात्' (सू. 2754) इत्यादिनैव परस्मैपदम् । अत्र सूत्रे युधिग्रहणं त्वचित्तवत्कर्तृकार्थम् । यथा योधयति काष्ठानि ।

भट्टिकाव्ये—VIII. 57.

अध्यासीद्राघवस्याहं नाशयेयं कथं शुचम् ।
वैदेह्या जनयेयं वा कथमानन्दमुत्तमम् ॥ 2441 ॥

अहं राघवस्य शुचं कथं वा नाशयेयम् । वैदेह्याः कथं वोत्तममानन्दं जनयेयम् । अत्र नशिजन्योः णिचि लिङि पूर्ववत्तङि प्राप्ते 'अणावकर्मकात्' (सू. 2754) इत्यादिनैव परस्मैपदम् । अत्र सूत्रे तद्ग्रहणं च तद्वदेवाचित्तवत्कर्तृकार्थम् ।

भट्टिकाव्ये—VIII. 58.

दृष्ट्वा राघवकान्तां तां द्रावयिष्यामि राक्षसान् ।
तस्या हि दर्शनात्पूर्वं विक्रमः कार्यनाशकृत् ॥ 2442 ॥

राक्षसान् द्रावयिष्यामि पलाययिष्यामि । अत्रापि द्रुवतेर्ण्यन्तादणावित्यादिनैव परस्मैपदम् ।

भट्टिकाव्ये—VIII. 59.

चिन्तयन्नित्थमुत्तुङ्गैः प्रावयन्तीं दिवं वनैः ।
अशोकवनिकामारादपश्यत्स्तबकाचिताम् ॥ 2443 ॥

वृक्षसमूहैर्दिवमाकाशं प्रावयन्तीं व्याप्नुवन्तीम् । प्रु गताविति धातोर्ण्यन्तात् पूर्ववत्तङि प्राप्ते अनेन परस्मैपदम् ।

## २७५३ । निगरणचलनार्थेभ्यश्च । (१. ३. ८७)

निगारयति । आशयति । भोजयति । चलयति । कम्पयति वा ।

वा० । अदेः प्रतिषेधः । (959.)

आदयते देवदत्तेन । 'गतिबुद्धि' (सू. 540) इत्यादिना अणिकर्तुः कर्मत्वे 'आदिखाद्योर्न' (वा. 1109. सू. 540) इति तस्य प्रतिषेधः । 'शेषात्' (सू. 2159) इत्यकर्त्रभिप्राये परस्मैपदं स्यादेव । आदयत्यन्नं वटुना ।

अस्मिन्नेव ग्रन्थे श्लो० 234. अहं प्रीतः सन् भवतीं भुवनत्रयं **भोजयिष्यामि** । निगरणार्थत्वात्परस्मैपदम् । प्रत्यवसानार्थत्वात् 'गतिबुद्धि' (सू. 540) इत्यादिना अणिकर्तुः कर्मत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 257. एतैः राक्षसैः **खादयिष्यामि** भोजयिष्यामि । निगरणार्थत्वात्परस्मैपदम् । 'गतिबुद्धि' (सू. 540) इत्यादिना प्रत्यवसानार्थे कर्मसंज्ञायां प्राप्तायां 'आदिखाद्योर्न' (वा. 1109. सू. 540) इति प्रतिषेधात्कर्तृसंज्ञैव भवति ।

अस्मिन्नेव ग्रन्थे श्लो० 242. शशी दशमुखाज्ञया संपूर्णः सन् वापीः ज्योत्स्नामृतम**पाययत** पायितवान् । पिबतेः प्रत्यवसानार्थत्वात् 'गतिबुद्धि' (सू. 540) इत्यादिना अणिकर्तुः कर्मत्वम् । निगरणार्थत्वात्प्राप्तस्य परस्मैपदस्य 'न पादमि' (सू. 2755) इत्यादिना प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1117. कपिव्याघ्रस्तरू**नचलयन्न**कम्पयन् । चलनार्थे परस्मैपदम् ।

२७५४ । अणावकर्मकाच्चित्तवत्कर्तृकात् (१. ३. ८८)

ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णस्तं गोपी शाययति ।

अस्मिन्नेव ग्रन्थे श्लो० 2188. हनूमान्राक्षसान्ना**योधयत्** न योधितवान् । अणावकर्मकत्वाच्चित्तवन्निशाटकर्तृकत्वाच्चानेन परस्मैपदम् । बुधादिसूत्रे युधिग्रहणमचित्तवत्कर्तृकार्थम् । यथा योधयति काष्ठानीति ।

अस्मिन्नेव ग्रन्थे श्लो० 2441. अहं राघवस्य शुचं कथं वा **नाशयेयम्** । वैदेह्याः कथं वोत्तममानन्दं जनयेयम् । नशिजन्योः अणावकर्मकत्वादचित्तवत्कर्तृकत्वाच्च 'बुधयुध' (सू. 2752) इत्यादिना परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2442. राक्षसान् **द्रावयिष्यामि** पलाययिष्यामि । द्रवतेर्ण्यन्ताच्चित्तवत्कर्तृकात् अनेन परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1117. पक्षिणोऽ**त्रासयन्** । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 234. रावणं पार्श्वे **शायय** । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1152. पुरुषाशिनां राजानं मां योधयिष्यति। चित्तवत्कर्तृकत्वादनेनैव परस्मैपदम्।

किरातार्जुनीये—II. 18.

मदसिक्तमुखैर्मृगाधिपः
करिभिर्वर्तयते स्वयंहतैः।
लघयन्खलु तेजसा जग-
न्न महानिच्छति भूतिमन्यतः॥ 2444॥

मृगाधिपो मदसिक्तमुखैः स्वेनैव हतैः करिभिर्वर्तयते वृत्तिं करोति। तेनैव जीवतीत्यर्थः। चौरादिकात् वृतेर्लिङ्। भौवादिकस्य तु अनेन परस्मैपदं स्यात्।

किरातार्जुनीये—XV. 36.

परिमोहयमाणेन शिक्षालाघवलीलया।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना॥ 2445॥

**परिमोहयमाणेन** व्यामोहयता। अनेन परस्मैपदे प्राप्ते 'न पादमि' (सू. 2755) इत्यादिना तत्प्रतिषेधादात्मनेपदम्। शानच्।

**२७५५। न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः। (१. ३. ८९)**

एभ्यो ण्यन्तेभ्यः परस्मैपदम्। न। पिबतिर्निगरणार्थः। इतरे चित्तवत्कर्तृकाकर्मकाः। नृतिश्चलनार्थोऽपि। तेन सूत्रद्वयेन प्राप्तिः पाययते। दमयते। आयामयते। आयासयते। परिमोहयते। रोचयते। नर्तयते। वादयते। वासयते।

वा०। धेट उपसंख्यानम्। (962.)

धापयेते शिशुमेकं समीची। अकर्त्रभिप्राये 'शेषात्' (सू.2159) इति परस्मैपदं स्यादेव। वत्सान्पाययति पयः। दमयन्ती कमनीयतामदम्।

अस्मिन्नेव ग्रन्थे श्लो० 2185. लतां नर्तयमानवत्। नृतिश्चलने वर्तते। ततश्च 'निगरण' (सू. 2753) इत्यादिना परस्मैपदं प्राप्तम् अनेन प्रतिषिद्धम्। ऋतवोऽन्योन्यसंपदः **नायासयन्त** नोपपीडयन्ति स्म। आङ्पूर्वाद्यसेः चित्तवत्कर्तृकत्वात् 'अणौ' (सू. 2754) इत्यादिना परस्मैपदं प्राप्तमनेन प्रतिषिद्धम्।

अस्मिन्नेव ग्रन्थे श्लो० 242. शशी संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत पायितवान् । निगरणार्थत्वात्तिपि प्राप्तेऽनेन प्रतिषिद्धे 'णिचश्च' (सू. 2564) इति तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2186. यस्यां वन्यः कामं प्रादमयन्त शमितवत्यः तन्मतस्याचरणात् परिमोहयमाणाभिः व्यामोहयन्तीभिः । दमिपरिमुह्योः 'अणौ' (सू. 2754) इत्यादिना प्राप्तस्य परस्मैपदस्य अनेन प्रतिषेधे 'णिचश्च' (सू. 2564) इत्यात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2187. दशाननो यस्यां सीतां वासयते स्म वासितवान् । न त्वरोचयतात्मानम् । रोचिवास्योः 'अणौ' (सू. 2754) इत्यादिना प्राप्तस्य परस्मैपदस्यानेन प्रतिषेधे 'णिचश्च' (सू. 2564) इति तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 244. युवानः अनुतर्षपदेन प्रेम स्वा वधूरपीप्यन् पाययन्ति स्म । पिबतेर्णौ चङि लोपः । अनेन परस्मैपदनिषेधेऽपि 'णिचश्च' (सू. 2564) इत्यात्मनेपदविकल्पात्पाक्षिकं परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 245. पाययते । अनेन निषेधात्तङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2445. परिमोहयमाणेन व्यामोहयता 'अणावकर्मकात्' (सू. 2754) इति परस्मैपदे प्राप्तेऽनेन प्रतिषेधादात्मनेपदम् । शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 246. पायय । परस्मैपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 243. अपाययत् । पिबतेर्निगरणार्थत्वेऽपि अनेन प्रतिषेधात्तङ् ।

॥ इति परस्मैपदप्रकरणम् ॥

---

॥ श्रीरस्तु ॥

## ॥ अथ भावकर्मप्रकरणम् ॥

—:०:—

### २७५८। च्चिण्भावकर्मणोः। (३. १. ६६)

च्लेश्चिण् स्यात् भावकर्मवाचिनि तशब्दे परे। अभावि।

भट्टिकाव्ये—VI. 34,

अदोहीव विषादोऽस्य समरुद्धेव विक्रमः।
समभावि च कोपेन न्यश्वसीच्चायतं मुहुः ॥ 2446 ॥

कोपेन समभावि सम्भूतम्। भावे चिण्।

अस्मिन्नेव ग्रन्थे श्लो० 1968. राज्ञा स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः। कर्मणि लुङ्। चिण्।

### २७६१। आतो युक् चिण्कृतोः। (७. ३. ३३)

आदन्तानां युगागमः स्यात् चिणि ञिति णिति कृति च।

अस्मिन्नेव ग्रन्थे श्लो० 1292. आख्यायकेभ्य आख्यातृभ्यः। ख्यातेर्ण्वुलि युक्।

### २७६३। नोदात्तोपदेशस्य मान्तस्यानाचमेः। (७. ३. ३४)

उपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च। अशमि। अदमि।

भट्टिकाव्ये—XVII. 101.

ताभ्यामन्योन्यमासाद्य समवाप्यत संशमः।
लक्षेण पत्रिणां वक्षः क्रुद्धो रामस्य राक्षसः ॥ 2447 ॥

संशमः संशमनम् । घञि अनेन वृद्धिप्रतिषेधः ।

२७६५ । विभाषा चिण्णमुलोः । (७. १. ६९)

लभेर्नुमागमो वा स्यात् । अलम्भि अलाभि । प्रादेर्नित्यं नुम् । प्रालम्भि ।

अस्मिन्नेव ग्रन्थे श्लो० 986. दिग्गजैः याथार्थ्यमलम्भि लब्धम् । लभेर्ण्यन्तात् कर्मणि लुङ् । विकल्पान्नुमागमः ।

माघे—XX. 54.

उपमानमलाभि लोलपक्ष-
क्षणविक्षिप्तमहाम्बुवाहमत्स्यैः ।
गगनार्णवमन्तरा सुमेरोः
कुलजानां गरुडैरिलाधराणाम् ॥ 2448 ॥

गरुडैरिलाधराणामुपमानमलाभि । लभेः कर्मणि लुङ् । विकल्पान्नुमभावः ।

॥ इति भावकर्मप्रकरणम् ॥

---

नैषधे— III. 120.

अहो तपःकल्पतरुर्नलीय-
स्त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः ।
त्वद्भ्रूयुगं यस्य खलु द्विपत्री
तवाधरो रज्यति यत्कलम्बः ॥ 2452 ॥

तवाधरो यत्कलंबः रज्यति स्वयमेव रक्तो भवति ।

॥ इति कर्मकर्तृप्रकरणम् ॥

—:o:—

॥ श्रीरस्तु ॥

# ॥ अथ लकारार्थप्रकरणम् ॥

---

## २७७३ । अभिज्ञावचने लृट् । ( ३. २. ११२ )

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात् । लङोऽपवादः । स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादियोगेऽपि ।

अस्मिन्नेव ग्रन्थे श्लो० 288. हे कृष्ण भवान् दाशरथिर्भवन् वनान्ताद्वनितापहारिणं अमुं रावणं पयोधिं विलङ्घ्य लङ्कां निकषा हनिष्यति अवधीत् । अनेन भूते लृट् । अदो हननं स्मरसीति काकुः ।

भट्टिकाव्ये—VI. 141.

> म्रियमाणः स सुग्रीवमूचे सद्भावमागतः ।
> सम्भविष्याव एकस्याममिजानासि मातरि ॥ 2453 ॥

हे वत्स एकस्यां मातरि सम्भविष्यावः सम्भूतावित्यर्थः । अभिजानासि स्मरसि । अनेन अभिज्ञावचने उपपदे भूतानद्यतने लृट् । अभिजानासीत्येतत् अभिज्ञावचनम् । अभिज्ञा स्मृतिः ।

भट्टिकाव्ये—XVI. 36.

> नाभिज्ञा ते महाराज जेष्यावः शक्रपालितम् ।
> दृप्तदेवगणाकीर्णमावां सह सुरालयम् ॥ 2454 ॥

हे महाराज ते नाभिज्ञा सुरालयमावां जेष्यावः जितवन्तौ । अनेन लृट् । तत्र भूतानद्यतन इति वर्तते ।

## २७७४ । न यदि । ( ३. २. ११३ )

यद्योगे उक्तं न । अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ।

भट्टिकाव्ये—VI, 142.

अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च ।
अभिजानीहि तत्सर्वं बन्धूनां समयो ह्ययम् ॥ 2455 ॥

अभिजानाहि स्मर यन्नगेन्द्रेषु अवसाव उषितवन्तौ । अत्राभिज्ञावचनस्य यच्छब्दस्य सन्निहितत्वात् अनेन लृटि प्रतिषिद्धे लङेव भवति । अत्र वासमात्र-प्रत्यभिज्ञावचनमुपपदम् ।

## २७७५ । विभाषा साकाङ्क्षे । (३. २. ११४)

उक्तविषये लृड्वा स्यात् लक्ष्यलक्षणभावेन साकांक्षश्चेद्धात्वर्थः । स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः । वासो लक्षणम् । चारणं लक्ष्यम् । पक्षे लङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2455. वत्स अभिजानासि यन्नगेन्द्रेषु अवसाव उषितवन्तौ मधूनि च यत्पास्यावः । तथा च नगेन्द्रेषु यद्वत्स्यावः तत्र मधूनि च पास्यावः तत्सर्वमभिजानासीति योज्यम् । अनेन पक्षे यच्छब्दसहिते साकाङ्क्षे प्रत्यभिज्ञावचने उपपदे विकल्पात् भूते लट् । एवं यदवसाव अपिबाव चेति लङि च द्रष्टव्यम् ।

भट्टिकाव्ये—XVI. 37.

नाभिज्ञाते सयक्षेन्द्रं भङ्क्ष्यावो यवमं बलात् ।
रत्नानि चाहरिष्यावः प्राप्स्यावश्च पुरीमिमाम् ॥ 2456 ॥

सयक्षेन्द्रं यमं आवां भङ्क्ष्यावः भग्नवन्तौ । रत्नानि चाहरिष्यावः । इमां च पुरीं लङ्कां प्राप्स्यावः । अनेन लृट् । लक्ष्यलक्षणयोः संबन्धे प्रयोक्तुराकाङ्क्षा । तत्र भंजनं लक्षणम् । रत्नाद्याहरणं लक्ष्यम् ।

## २७७६ । हशश्वतोर्लङ् च । (३. २. ११६)

अनयोरुपपदयोर्लिड्विषये लङ् स्यात् । चालिट् । इति हाकरोच्चकार वा । शश्वदकरोच्चकार वा ।

भट्टिकाव्ये—VI. 143.

दैवं न विदधे नूनं युगपत्सुखमावयोः ।
शश्वद्बभूव तद्दुःस्थं यतो नाविति हाकरोत् ॥ 2457 ॥

तद्दैवं शश्वत् सदा दुःस्थं प्रतिकूलं बभूव अभवत् । लङ् च इति चकारात् शश्वच्छब्दे उपपदे भूतानद्यतनपरोक्षे लिट् । यतो यस्मात्तौ आवामिति हाकरोत् एवं विप्रयुक्तौ चकार ह । तेनैव हाशब्दोपपदे तस्मिन्नेवार्थे लङ् ।

## २७७८ । लट् स्मे । (३. २. ११८)

लिटोऽपवादः । यजति स्म युधिष्ठिरः ।

अस्मिन्नेव ग्रन्थे श्लो० 626. जामदग्न्यः पथि एति स्म इतवान् । प्राप्त इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 17. शीतालुः सरस्यवतरितुमनिच्छुस्तटभुव्यासीना रम्भोरूः सस्मितेन भर्त्रा सिच्यते स्म सिक्ता ।

कुमारसम्भवे—VII. 28.

अखण्डितं प्रेम लभस्व पत्यु-
रित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरभाजा
पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥ 2458 ॥

नम्रा प्रणतोमा ताभिः सखीभिः पत्युः प्रेम लभस्व इत्युच्यते स्म अभिहिता । अनेन भूतार्थे लट् ।

भट्टिकाव्ये—XVIII. 1.

व्यश्नुते स्म ततः शोको नाभिसंबन्धसंभवः ।
विभीषणमसावुच्चै रोदिति स्म दशाननम् ॥ 2459 ॥

शोको विभीषणं व्यश्नुते स्म व्याप्तवान् । विभीषणः रोदिति स्म । अनेन भूतानद्यतनपरोक्षे लट् ।

## २७७९ । अपरोक्षे च । (३. २. ११९)

भूतानद्यतने लट् स्यात् स्मयोगे । एवं स्म पिता ब्रवीति ।

भट्टिकाव्ये—XVIII. 13.

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाहवे ।
तस्यापीन्द्रजितो दैवाद् ध्वांक्षैः शिरसि लीयते ॥ 2460 ॥

येन इन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महासमरे मूर्ध्नि अग्रतः स्थीयते स्म स्थितम्। अनेन लट् । विभीषणस्य भूतानद्यतनपरोक्षार्थत्वात्तस्यापि शिरसि ध्वांक्षैर्लीयते । वर्तमाने भावे लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 484. हे राजन् त्वमिदमजानन् स्वविक्रममीडिषे स्म स्तुतवानसि । त्वं सीतां नेच्छसि स्म नेष्टवानसि । विषयाणां शब्दादीनां नेशिषे स्म विषयान्न जितवानसि । 'अधीगर्थ' (सू. 613) इति कर्मणि षष्ठी । सर्वत्रानेन लट् ।

भट्टिकाव्ये—XVIII. 18.

त्वं स्म वेत्थ महाराज यत्स्माह न विभीषणः ।
पुरा त्यजसि यत्क्रुद्धो मां निराकृत्य संसदि ॥ 2461 ॥

हे महाराज विभीषणो यदाह स्म उक्तवान् तत्त्वं न वेत्थ स्म न विदितवानसि । उभयत्रानेन लट् ।

भट्टिकाव्ये—XVIII. 36.

ऊर्ध्वं म्रिये मुहूर्ताद्धि विह्वलः क्षतबान्धवः ।
मन्ये स्म हितमाख्यामि न करोमि तवाप्रियम् ॥ 2462 ॥

मन्ये हितमाख्यामि स्म आख्यातवानहम् । अनेन लट् ।

## २७८० । ननौ पृष्टप्रतिवचने । (३. २. १२०)

अनद्यतने परोक्ष इति निवृत्तम् । भूते लट् स्यात् । अकार्षीः किम् ? ननु करोमि भोः ।

२७८१ । नन्वोर्विभाषा । (३. २. १२१)

अकार्षीः किम् । न करोमि, नाकार्षम् । अहं नु करोमि, अहं न्वकार्षम् ।

भट्टिकाव्ये—XVIII. 17.

अपृष्टो नु ब्रवीति त्वां मन्त्रे मातामहो हितम् ।
न करोमीति पौलस्त्य तदा मोहात्त्वमुक्तवान् ॥ 2463 ॥

मन्त्रे मातामहो माल्यवान् अपृष्टः सन् हितं नु ब्रवीति । हे पौलस्त्य त्वं पुनर्हितमकार्षीरिति माल्यवता पृष्टम् । तदा तस्मिन्काले न करोमीति मोहादुक्तवान् । अत्र नुशब्दे नशब्दे चोपपदे पृष्टप्रतिवचने भूते धात्वर्थे विभाषानेन लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2462. ममाप्रियं मा कार्षीरिति पृष्टः सन् अहं न करोमि तवाप्रियमिति न कृतवानसि । अनेन पृष्टप्रतिवचने लट् ।

२७८२ । पुरि लुङ् चास्मे । (३. २. १२२)

पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् । चाल्लट् । न तु स्मयोगे ।

अस्मिन्नेव ग्रन्थे श्लो० 2461. संक्रुद्धः सन् मां संसदि निराकृत्य पुरा पूर्वं त्यजसि त्यक्तवानसि । अत्र सूत्रे चकाराल्लट् ।

किरातार्जुनीये—I. 38.

पुराधिरूढः शयनं महाधनं
विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं
जहासि निद्रामशिवैः शिवारुतैः ॥ 2464 ॥

शयनमधिरूढः सन् स्तुतिगीतमङ्गलैः करणभूतैः पुरा विबोध्यसे । वैतालिकैरिति शेषः । पूर्वं विबोधित इत्यर्थः । अनेन भूतार्थे लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2343. रक्षांसीति पुरापि संशृणुमहे पूर्वमेवास्माभिः श्रुतम् । अत्र चकाराद्भूते लट् ।

२७८३ । यावत्पुरानिपातयोर्लट् । (३. ३. ४)

यावद्भुङ्क्ते । पुरा भुङ्क्ते ।

माघे—XII. 43.

> व्यासेद्धुमस्मानवधानतः पुरा
> चलत्यसावित्युपकर्णयन्नसौ ।
> गीतानि गोप्याः कलमं मृगव्रजो
> न नूनमत्तीति हरिर्व्यलोकयत् ॥ 2465 ॥

असौ कोऽपि अस्मान् व्यासेद्धुं निवारयितुमवधानतो गीतैकाग्रयात् पुरा चलति चलिष्यति । भविष्यदर्थे लट् ।

रघुवंशे—XII. 30.

> तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
> गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥ 2466 ॥

विराधः अशुचिना गन्धेन स्थलीमाश्रमभुवं पुरा दूषयति दूषयिष्यति । पूर्ववत् ।

भट्टिकाव्ये—XVIII. 35.

> न गच्छामि पुरा लङ्कामायुर्यावद्दधाम्यहम् ।
> कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम् ॥ 2467 ॥

यावदहमायुर्दधामि धारयिष्यामि । भविष्यति लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 312. एषोऽतिथिः यस्यान्नस्य पुरा तृप्यति येनान्नेन तृप्तो भविष्यति । भविष्यति लट् । 'पूरणगुण' (सू. 705) इति षष्ठीसमासनिषेधे सुहितार्थे करणे षष्ठ्यनुमीयते ।

### २७८४ । विभाषा कदाकर्ह्योः । (३. ३. ५)

भविष्यति लट् वा स्यात् । कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1566. कर्हि कदा को मे प्रियं वदति वदिष्यति । भविष्यति लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2467. कदा कस्मिन् काले मे प्रीतिर्भवति भविष्यति । भविष्यति लट् ।

## २७८९ । वर्तमानसामीप्ये वर्तमानवद्वा । (३. ३. १३१)

समीपमेव सामीप्यम् । स्वार्थे ष्यञ् । वर्तमानप्रत्ययाः वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि । अयमागच्छामि । अयमागमम् । कदा गमिष्यसि । एष गच्छामि गमिष्यामि वा ।

अस्मिन्नेव ग्रन्थे श्लो० 2398. असौ राक्षसी वावृत्त्यमाना रामं वृण्वाना । वरिष्यन्ती सतीत्यर्थः । वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः । वावृतु वरणे दैवादिकाल्लटः शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 873. स्वपुण्यजितां गतिं यामो यास्यामः । वर्तमान-सामीप्ये लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 1305. म्रियामहे न गच्छामः । सामीप्ये लट् ।

भट्टिकाव्ये—XVI. 38.

> एष पेक्ष्याम्यरीन् भूयो न शोचिष्यसि रावण ।
> जगद्रक्ष्यसि नीराममवगाहिष्यसे दिशः ॥ 2468 ॥

अरीन्पेक्ष्यामि चूर्णयिष्यामि । वर्तमानवत्प्रत्ययस्य विकल्पेन विधानात् लडेव भवति ।

## २७९० । आशंसायां भूतवच्च । (३. ३. १३२)

भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षी-द्वर्षति वर्षिष्यति वा धान्यमवाप्स्म वपामो वप्स्यामो वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1959. शत्रोः पुरः समगध्वम् संगस्यध्वे संगताः । स्थास्यध्व इत्याशास्महे इत्यर्थः । 'समो गम्यृच्छिभ्यः' (सू. 2699) इति । अकर्मकादात्मनेपदम् । लुङ् । अनेन भविष्यदर्थे भूतवत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 50. मामुपायंस्थाः परिणय । 'उपाद्यमः स्वकरणे' (सू. 2729) इति तङ् । अनेन भूतवत्प्रत्ययः । लुङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2398. मामुपायंस्त परिणयतु भवान् । शेषत्वविवक्षायां प्रथमपुरुषः । अनेन भविष्यदर्थे भूतवत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 2204. वयं नामृष्महि । भविष्यदर्थे लुङ् ।

## २७९१ । क्षिप्रवचने लृट् । (३. ३. १३३)

क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वायास्यति शीघ्रं वप्स्यामः ।

अस्मिन्नेव ग्रन्थे श्लो० 2156. क्षिप्रमेषा पुरी विनङ्क्ष्यति । तूर्णं वा नरास्तां समेष्यन्ति । उभयत्रापि क्षिप्रवचने लृट् ।

## २७९९ । गर्हायां लडपिजात्वोः । (३. ३. १४२)

आभ्यां योगे लट् स्यात् कालत्रये गर्हायाम् । अपि जायां त्यजसि, जातु गणिकामाधत्से, गर्हितमेतत् ।

भट्टिकाव्ये—XVIII. 16.

मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे ।
कथं नाम भवांस्तत्र नावैति हितमात्मनः ॥ 2469 ॥

मन्त्रे अज्ञा जातु वदन्ति । तानपि त्वमनुमन्यसे अनुमतवान् । अपिजात्वोरुपपदयोः कालसामान्ये लट् ।

भट्टिकाव्ये—XVIII. 32.

त्वयापि नाम रहिताः कार्याणि तनुमो वयम् ।
कुर्मश्च जीविते बुद्धिं धिक् तृष्णां कृतनाशिनीम् ॥ 2470 ॥

वद्वयं त्वयापि विना कार्याणि राज्याङ्गानि तनुमः प्रसारयिष्यामः । भविष्यति लट् ।

## २८०० । विभाषा कथमि लिङ् च । (३. ३. १४३)

गर्हायामित्येव । कालत्रये लिङ् । चाल्लट् । कथं धर्मं त्यजेः त्यजसि वा ।

अस्मिन्नेव ग्रन्थे श्लो० 2469. तत्र भवान् आत्मनो हितं कथं नावैति न विदितवान्। कथंशब्दे उपपदे चकाराद्गर्हायां लट्।

भट्टिकाव्ये—XIX. 6.

प्रकुर्याम वयं देशे गर्ह्ये तत्र कथं रतिम्।
यत्र विंशतिहस्तस्य न सोदर्यस्य सम्भवः॥ 2471 ॥

कथं वयं गर्ह्ये रतिं प्रकुर्याम करिष्यामः। नैवेत्यर्थः। गर्हायामित्यधिकृत्य अनेन कथमित्युपपदे भविष्यति लिङ्।

## २८०१। किंवृत्ते लिङ्लटौ। (३. ३. १४४)

गर्हायामित्येव। विभाषा तु नानुवर्तते। कः कतरः कतमो वा हरिं निन्देत् निन्दिष्यति वा। लङ् प्राग्वत्।

भट्टिकाव्ये—XIX. 16.

अज्ञवन्नोत्सहेथाः किं धेया धीरत्वमच्युतम्।
स्थेयाः कार्येषु बन्धूनां हेयाः शोकोद्भवं तमः॥ 2472 ॥

## २८०२। अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि। (३. ३. १४५)

गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। न संभावयामि न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा। कः कतरः कतमो वा हरिं निन्देत् निन्दिष्यति वा; लट् प्राग्वत्।

भट्टिकाव्ये—XVI. 21.

अमर्षो मे परः सीतां राघवः कामयिष्यते।
च्युतराज्यात्सुखं तस्मात्किं किलासाववाप्स्यति॥ 2473 ॥

अमर्षः क्रोधः पर उत्कृष्टो मम यद्राघवः सीतां कामयिष्यते। अमर्षे लट्। च्युतराज्यात्तस्मादसौ सीता किं किल नाम सुखमवाप्स्यति तन्न संभावयामि। 'किं किलास्त्यर्थेषु लट्' (सू. 2803) इति अनवक्लृप्तावसंभावनायां लट्।

भट्टिकाव्ये—XIX, 17.

नावकल्प्यमिदं ग्लायेद्यत्कृच्छ्रेषु भवानपि ।
न पृथग्जनवज्जातु प्रमुह्येत्पण्डितो जनः ॥ 2474 ॥

नावकल्प्यमिदं न संभाव्यमेतत् येन कृच्छ्रेषु भवानपि ग्लायेत् ग्लानिं याति । अनवक्लृप्तावसंभावनायां लिङ् । यस्मात्पण्डितो जनः पृथग्जनवत् जातु कदाचिदपि न प्रमुह्येत् न मोहं यातीति संभावयामः । 'जातुयदोर्लिङ्' (सू. 2804) इत्यनवक्लृप्तौ लिङ् ।

## २८०३ । किंकिलास्त्यर्थेषु लृट् । ( ३. ३. १४६ )

अनवक्लृप्त्यमर्षयोरित्येतद्गर्हायां चेति यावदनुवर्तते । किंकिलेति समुदायः ।

अस्मिन्नेव ग्रन्थे श्लो० 2473. च्युतराज्याद्रामात् असौ सीता किंकिल नाम सुखमवाप्स्यति तन्न संभावयामि । अनवक्लृप्तावसंभावनायां लृट् ।

## २८०४ । जातुयदोर्लिङ् । ( ३. ३. १४७ )

वा० । यदायद्योरुपसंख्यानम् । (2275.)

लटोऽपवादः । जातु यद्यदा यदि वा त्वादृशो हरिं निन्देत् नावकल्पयामि न मर्षयामि ।

अस्मिन्नेव ग्रन्थे श्लो० 2474. यस्मात्पण्डितो जनः पृथग्जनवत् जातु कदचिदापि न प्रमुह्येत् न मोहं यातीति संभावयामः । अनवक्लृप्तौ लिङ् ।

## २८०५ । यच्चयत्रयोः । ( ३. ३. १४८ )

यच्च यत्र वा त्वमेवं कुर्या न श्रद्दधे न मर्षयामि ।

भट्टिकाव्ये—XIX, 18.

यच्च यत्र भवांस्तिष्ठेत्तत्रान्यो रावणस्य न ।
यच्च यत्र भवान्सीदेन्महद्भिस्तद्विगर्हितम् ॥ 2475 ॥

यत्र देशे काले वा यत् भवांस्तिष्ठेत् तत्रान्यो रावणस्य न । त्वयि तिष्ठति मन्त्रार्थमवस्थानं कः करिष्यति । नैतत्संभावयामः । तस्य तत्र न्यूनत्वात् अन्यस्मिन् अनवक्लृप्तिः । यच्छब्देनोपपदेन योगात् यच्चयत्रयोरनवक्लृप्तौ भविष्यति लिङ् । यच्चेति निपातसमुदायो यच्छब्दस्यार्थे वर्तते ।

## २८०६ । गर्हायां च । (३. ३. १४९)

अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् । यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यं तत् ।

अस्मिन्नेव ग्रन्थे श्लो०।2475. यत्र देशे काले वा यच्च भवान्सीदेत् तत्र स्यात् महद्भिर्विगर्हितम् । अनेन सर्वलकाराणामपवादो लिङ् ।

## २८०७ । चित्रीकरणे च । (३. ३. १५०)

यच्च यत्र वा त्वं शूद्रं याजयेः । आश्चर्यमेतत् ।

भट्टिकाव्ये—XIX. 19.

आश्चर्यं यच्च यत्र त्वां प्रब्रूयाम वयं हितम् ।
अपि साक्षात्प्रशिष्यास्त्वं कृच्छ्रेष्विन्द्रपुरोहितम् ॥ 2476 ॥

यत्र देशे काले वा यद्वयमपि त्वां हितं प्रब्रूयामैतदाश्चर्यम् । विचित्रमेतत् । अनेन लिङ् । यच्चयत्रयोरिति वर्तते । त्वामित्यकथितं कर्म ।

## २८०९ । उताप्योः समर्थयोर्लिङ् । (३. ३. १५२)

बाढमित्यर्थे अनयोस्तुल्यार्थता । उत अपि वा हन्यादघं हरिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2476. त्वं कृच्छ्रेषु व्यसनेषु साक्षादिन्द्रपुरोहितमपि प्रशिष्याः बाढं शिक्षयसि । अनेन लिङ् अपिशब्दस्योपपदत्वात् ।

भट्टिकाव्ये—XIX. 20.

कामो जनस्य जह्यास्त्वं प्रमादं नैर्ऋताधिप ।
उत द्विपोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ 2477 ॥

विप्लवे विनाशे द्विषः शत्रवोऽपि उत अनुशोचेयुः अनुशोचन्ति किमु बान्धवाः । अनेन लिङ् ।

२८१० । कामप्रवेदनेऽकच्चिति । ( ३. ३. १५३ )

स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यात् न तु कच्चिति । कामो मे भुञ्जीत भवान् । अकच्चितीति किम् । कच्चिज्जीवति ।

अस्मिन्नेव ग्रन्थे श्लो० 2477. हे नैर्ऋताधिप त्वं प्रमादं जह्याः त्यज । अस्य जनस्य पौरस्य कामः इच्छा । अनेन लिङ् । कामप्रवेदनं च जनाभिप्रायप्रकाशनम् ।

भट्टिकाव्ये—V. 59.

यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च ।
इच्छुः कामयितुं त्वं मामित्यसौ जगदेतया ॥ 2478 ॥

त्वं यायाः रामान्वेषणाय गच्छेरिति मे कामोऽभिप्रायः । कामप्रवेदने स्वाभिप्रायाविष्करणापराख्ये लिङ् ।

२८१३ । हेतुहेतुमतोर्लिङ् । ( ३. ३. १५६ )

वा स्यात् । कृष्णं नमेच्चेत् सुखं यायात् । कृष्णं नमस्यति चेत् सुखं यास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते ।

भट्टिकाव्ये—XIX. 21.

स भवान् भ्रातृवद्रक्षेद्यथावदखिलं जनम् ।
न भवान् संप्रमुह्येच्चेदाश्वस्युश्च निशाचराः ॥ 2479 ॥

चेद्यदि भवान्न संप्रमुह्येत् मोहं न गच्छेत् तदा स भवान् भ्रातृवत् रावणवदखिलं जनं यथावत्सम्यक् रक्षेत् । एते च निशाचरा आश्वस्युः आश्वासं गच्छेयुः । अनेन लिङ् । अत्र प्रमोहो हेतुः । जनरक्षणं निशाचराश्वासनं च हेतुमत् ।

२८१४ । इच्छार्थेषु लिङ्लोटौ । ( ३. ३. १५७ )

वा० । कामप्रवेदन इति वक्तव्यम् । (2276.)

इच्छामि भुञ्जीत भुङ्क्तां वा भवान् । एवं कामये प्रार्थय इत्यादियोगे बोध्यम् ।

भट्टिकाव्ये—XIX. 25.

इच्छा मे परमानन्दैः कथं त्वं वृत्रशत्रुवत् ।
इच्छेद्धि सुहृदं सर्वो वृद्धिसंस्थं यतः सुहृत् ॥ 2480 ॥

इयं च मे इच्छा महती यत् त्वं वृत्रशत्रुवत् इन्द्र इव कथमानन्दैः मुदितो भविष्यसि । अनेन लिङ् ।

२८१६ । इच्छार्थेभ्यो विभाषा वर्तमाने । (३. ३. १६०)

लिङ् स्यात् । पक्षे लट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2480. सर्व एव सुहृत् सुहृदं वृद्धिसंस्थं उदयस्थं इच्छेत् इच्छति ।

२८१७ । प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । (३. ३. १६३)

लोट् च । प्रैषो विधिः । अतिसर्गः कामचारानुज्ञा । भवता यष्टव्यम् । भवान्यजताम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2088. मुनिर्भरतादीनाह स निवध्वं परिधत्त वस्त्राणि । वस आच्छादने विधौ लोट् । आध्वं उपविशत । आसेः पूर्ववत् । आत्त खादत अन्नादिकम् । अद भक्षणे लोट् । पानादिकं पिबत । पा पाने लोट् । शेध्वम् स्वपित शयने । सर्वत्र विधौ लोट्, इति जयमङ्गलः । अतिसर्गे लोट्, अतिसर्गः कामचाराभ्यनुज्ञा इति मल्लिनाथः ।

अस्मिन्नेव ग्रन्थे श्लो० 3311. एनं धृतराष्ट्रमर्थसिद्धिः कथं न जहातु । अहात्वेवेत्यर्थः । प्राप्तकाले लोट् । तस्य हानिकालः प्राप्त इत्यर्थः ।

२८१८ । लिङ् चोर्ध्वमौहूर्तिके । (३. ३. १६४)

प्रैषादयोऽनुवर्तन्ते । मुहूर्तादूर्ध्वं यजेत । यजताम् । यष्टव्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2462. मुहूर्तादूर्ध्वमुपरि अहं म्रिये मरिष्यामि क्षतबान्धवत्वात् विह्वलः सन् । अनेन मरणस्य निमित्तभूतं प्राप्तकालं लोडर्थं दर्शयति । तेनानेन लोडर्थलक्षणे भविष्यति लट् । लोडर्थश्च प्रैषादिकः ।

२८२२ । अर्हे कृत्यतृचश्च । (३. ३. १६९)

चाल्लिङ् । त्वं कन्यां वहेः ।

भट्टिकाव्ये—XX. 18.

उत्तिष्ठस्व मते पत्युर्यतस्वालङ्कृतौ तथा ।
प्रतिष्ठस्व च तं द्रष्टुं द्रष्टव्यं त्वं महीपतिम् ॥ 2481 ॥

द्रष्टव्यं दर्शनार्हम् । अनेनार्हे तव्यप्रत्ययः । अवश्यद्रष्टव्यं वा । 'कृत्याश्च' (सू. 3312.) इत्यावश्यके तव्यप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 256. मान्यो मानार्हः । अनेन ण्यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1036. अर्च्या अर्चनार्हाः । अर्चनीयमर्चनार्हम् ।

२८२३ । शकि लिङ् च । (३. ३. १७२)

शक्तौ लिङ् स्यात् । चात्कृत्याः । भारं त्वं वहेः ।

अस्मिन्नेव ग्रन्थे श्लो० 824. क्रुद्धो भवान् सङ्क्रन्दनस्यापि श्रियो लक्ष्म्या अत्यन्तगो विनाशयिता स्यात् । प्रत्यर्थीभवितुं शक्नुयादित्यर्थः । शक्यार्थे लिङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 816. यो वाली संग्रामे रविमपि शमयेत् अवसादयेत् । शमयितुं शक्नोतीत्यर्थः । पूर्ववत् ।

रघुवंशे—III. 21.

श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थवि-
च्चकार नाम्ना रघुमात्मसंभवम् ॥ 2482 ॥

अयमर्भकः श्रुतस्यान्तं यायात्। युधि परेषामन्तं यायात्। यातुं शक्नुयादित्यर्थः। शक्यार्थे लिङ्।

अस्मिन्नेव ग्रन्थे श्लो० 1956. वध्यः हन्तुं शक्यः।

नैषधे.—III 15.

धार्यः कथंकारमहं भवत्या
वियद्विहारी वसुधैकगत्या।
अहो शिशुत्वं तव खण्डितं न
स्मरस्य सख्या वयसाप्यनेन ॥ 2483 ॥

धार्यः। धर्तुं गृहीतुं शक्य इत्यर्थः। शक्यार्थे कृत्यप्रत्ययः।

२८२५। क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः। (३. ४. २)

पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्। तस्य च हिस्वौ स्तः। 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' (सू. 2827) इत्यनुप्रयोगः। 'क्रियासमभिहारे द्वे वाच्ये' (वा. 4695 सू. 2828) इति वा 'क्रियासमभिहारे च' (वा. 4695 सू. 2147) इति वा द्विर्वचनम्।

अस्मिन्नेव ग्रन्थे श्लो० 1946. हे वायो पुनीहि पुनीहीति जगत्त्रयं पुनः पुनः पुनामि भृशं वा पुनामीत्यभिप्रायः त्वं जगत्त्रयं पुनन्। अनेन लोट्। तस्मै परस्मैपदसंबन्धी हिरादेशः। क्रियासमभिहारे द्विर्वचनम्। पुनन्निति 'यथाविध्यनुप्रयोगः' (सू. 2827) इति पुनातेरनुप्रयोगः।

अस्मिन्नेव ग्रन्थे श्लो० 1087. वसुन्धरे त्वं धत्स्व धत्स्वेति अहं पुनः पुनः दधे भृशं वा दध इति एवमभिप्राया जगन्ति दधती। क्रियासमभिहारे लोट्। तस्य चात्मनेपदसंबन्धिनः स्वादेशः। द्विर्वचनम्। 'यथाविध्यनुप्रयोगः' (सू. 2827) इति दधातेरनुप्रयोगः।

२८२६। समुच्चयेऽन्यतरस्याम्। (३. ४. ३)

अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्। 'समुच्चये सामान्यवचनस्य' (सू. 2828) इत्यनुप्रयोगः।

भट्टिकाव्ये—XX. 32.

रसान्संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम ।
इतीहमानस्तिग्मांशो वृत्तं ज्ञातुं घटस्व मे ॥ 2484 ॥

हे तिग्मांशो त्वमपि अहं रसान् संहर संहरामि दीप्यस्व दीप्ये ध्वान्तं जहि हन्मि नभो भ्रम भ्रमामीत्येवमभिप्रायः ईहमानश्चेष्टमानः । अनेन लोट् । तस्य च यथायोगं हिस्वादेशौ । ईहमान इति सामान्यवचनस्यानुप्रयोगः ।

भट्टिकाव्ये—XX. 33.

स्वर्गे विद्यस्व भुव्यास्व भुजङ्गनिलये भव ।
एवं वसन्ममाकाश संबुध्यस्व कृताकृतम् ॥ 2485 ॥

आकाश त्वं स्वर्गे विद्यस्व अहं विद्ये भुवि आस्व आसे भुजङ्गनिलये भव भवामीत्येवमभिप्रायो वसन् । पूर्ववल्लोट् । हिस्वादेशः । वसन् इति सामान्यवचनस्यानुप्रयोगः ।

भट्टिकाव्ये—XX. 30.

खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावनाः ।
यूयमापो विजानीत मनोवृत्तिं शुभां मम ॥ 2486 ॥

यूयमापः खमट द्यामट उर्वीमट इति । वयमन्तरिक्षमटाम देवलोकमटाम भूलोकमटाम इत्येवमभिप्रायाः सर्वत्राटन्त्यः । आकाशादिकारकभेदात् अनेकाटनक्रियासमुच्चयः । ततश्चानेन लोट् । अटन्त्य इति सामान्यवचनस्यानुप्रयोगः । आकाशाद्युपगामिनीनामटनाक्रियायां पुनरटनक्रियायाः सामान्याया अनुप्रयोगः ।

अस्मिन्नेव ग्रन्थे श्लो० 1090. बलीयो रावणः नमुचिद्विषा विगृह्य विरुध्य पुरीममरावतीमवस्कन्दावस्कन्दामि अवरुणध्मि, नन्दनं लुनीहि लुनामि, रत्नानि मुषाण मुष्णामि । अमराङ्गना हर हरामि, इत्यभिप्रायः अहर्दिवं दिवोऽस्वास्थ्यं चक्रे । अनेन लोट् । चक्रे इति सामान्यवचनस्यानुप्रयोगः ।

॥ इति लकारार्थप्रकरणम् ॥

—:o✻o:—

॥ श्रीरस्तु ॥

## ॥ अथ कृत्यप्रकरणम् ॥

—:o:—

### २८३१ । कृत्याः । (३. १. ९५)

अधिकारोऽयं ण्वुलः प्राक् ।

### २८३२ । कर्तरि कृत् । (३. ४. ६७)

कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते,

### २८३३ । तयोरेव कृत्यक्तखलर्थाः । (३. ४. ७०)

एते भावकर्मणोरेव स्युः ।

रघुवंशे—VIII. 94.

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकचतुरया संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ 2487 ॥

अमरगणनायां लेख्यं लेखनम् । भावार्थे ण्यत् ।

### २८३४ । तव्यत्तव्यानीयरः । (३. १. ९६)

धातोरेते प्रत्ययाः स्युः ।

वा० । वसेस्तव्यत्कर्तरि णिच्च । (1920.)

वसतीति वास्तव्यः ।

वा० । केलिमर उपसंख्यानम् । (1919.)

पचेलिमा माषाः पक्तव्याः । भिदेलिमाः सरला भेत्तव्याः ।

भट्टिकाव्ये—IV. 47.

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत् ।
आत्मानं वनवासं च जेयं चारिं रघूत्तमः ॥ 2488 ॥

प्रष्टव्यम् पृच्छतस्तस्य कथनीयं वक्तव्यम् । क्रमात्तव्यानीयरौ ।

माघे—I. 66.

तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधतः सदर्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥ 2489 ॥

वसन्तीति वास्तव्याः । तव्यत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 214. पचेलिमं स्वतः पक्वम् । 'केलिमर उपसंख्यानम्' इति पचेः केलिमर्प्रत्ययः । कर्मकर्तरि चायमिष्यत इत्याह वृत्तिकारः ।

२८३५ । कृत्यचः । (८. ४. २९)

उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1046. परिमोहिणं तच्छीलम् । नस्य णत्वम् ।

२८३६ । णेर्विभाषा । (८. ४. ३०)

उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत् तत्स्थस्य नस्य णो वा स्यात् । प्रयापणीयम् प्रयापनीयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2186. परिमोहयमाणाभिः व्यामोहयन्तीभिः । मुह्यतेर्ण्यन्तात् लटः शानच् । अनेन कृन्नकारस्य विभाषा णत्वम् । 'अणौ' (सू. 2754) इत्यादिना प्राप्तस्य परस्मैपदस्य 'न पादमि' (सू. 2755) इत्यादिना प्रतिषेधे 'णिचश्च' (सू. 2564) इत्यात्मनेपदम् ।

२८४० । न भाभूपूकमिगमिप्यायीवेपाम् । (८. ४. ३४)

एभ्यः कृत्स्य णो न । प्रभानीयम् । प्रभवनीयम् ।

वा० । पूञ एवेह ग्रहणमिष्यते । (5011.)

पूङस्तु प्रपवणीयः सोमः ।

वा० । ण्यन्तभादीनामुपसंख्यानम् । (5012.)

प्रभापनीयम् ।

भट्टिकाव्ये—IX. 107.

हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः ।
नाति प्रवेपनं वायोर्मया गोपायिते वने ॥ 2490 ॥

हरेः प्रगमनं संचारो नास्ति । हिमद्रुहः न प्रभानम् न प्रकर्षेण दीप्तिः । वायोर्नातिप्रवेपनम् मन्दगमनम् । 'कृत्यचः' (सू. 2835) इति प्राप्तस्य णत्वस्य अनेन प्रतिषेधः ।

२८४१ । कृत्यल्युटो बहुलम् । (३. ३. ११३)

स्नान्त्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ।

भट्टिकाव्ये—VII. 80.

अक्लेश्यमसिनाभ्यन्तं कबन्धवधमभ्यधुः ।
धिङ्गः प्रपतनं घोरं क्लेदान्तत्वमनाथवत् ॥ 2491 ॥

असिना । कृतमिति शेषः । अत एवाक्लेश्यम् अक्लेशकरम् । आशुभावादिति भावः । अनेन कर्तरि कृत्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1005. माद्यन्त्यनेनेति मद्यं मदिरा । अनेन करणार्थे यत्प्रत्ययः ।

रघुवंशे—XVI. 21.

बलिक्रियावर्जितसैकतानि
स्नानीयसंसर्गमनाप्नुवन्ति ।

उपान्तवानीरगृहाणि दृष्ट्वा
शून्यानि दूये सरयूजलानि ॥ 2492 ॥

स्नानीयानि स्नानसाधनानि चूर्णादीनि । करणे अनीयर्प्रत्ययः ।

रघुवंशे—VIII. 65.

धृतिरस्तमिता रतिश्च्युता
विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे ॥ 2493 ॥

शेतेऽस्मिन्निति शयनीयम् तल्पम् । अधिकरणार्थेऽनीयर्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 861. नाकसदां संतर्पयतीति सन्तर्पणः सन्तर्पयिता । कर्तरि ल्युट् ।

भट्टिकाव्ये—VII. 81.

ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम् ।
पयःपानमिवाशंसुः महानायादशोभनः ॥ 2494 ॥

न शोभत इत्यशोभनः । कर्तरि ल्युट् ।

अस्मिन्नेव ग्रन्थे श्लो० 41. प्रियवियुक्तवधूजनचेतसाम् । कर्मणि षष्ठी । अनवनी अरक्षणी । अवतेः कर्तरि ल्युट् । टित्त्वात् ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 76. पङ्क्तेः पावनं पावयितारम् । पावयतेः कर्तरि ल्युट् ।

## २८४२ । अचो यत् । (३. १. १७)

अजन्ताद्धातोर्यत्स्यात् । चेयम् । जेयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2486. जेयं जेतव्यम् । यत्प्रत्ययः ।

किरातार्जुनीये—XV. 5.

स सासिः सासुसूः सासो
येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः
शशीशशिशुशीः शशन् ॥ 2495 ॥

येया यातव्याः । यत्प्रत्ययः ।

२८४३ । ईद्यति । (६. ४. ६५)

यति परे आत ईत्स्यात् । गुणः । देयं ग्लेयम् ।

वा० । तकिशसिचतियतिजनिभ्यो यद्वाच्यः । (1922.)

तक्यं शस्यं चत्यं यत्यं जन्यम् ।

वा० । हनो वा यद्वधश्च वक्तव्यः । (1923.)

वध्यः । पक्षे वक्ष्यमाणो ण्यत् । घात्यः ।

भट्टिकाव्ये—III. 27.

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन्
शुश्राव घोषं न जनौघजन्यम् ।
आकर्णयामास न वेदनादा-
न्न चोपलेभे वणिजां पणायान् ॥ 2496 ॥

जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यम् । 'तकिशसि' इति यत् । अथवा जनौघजन्यं जनसङ्घजातम् । 'भव्यगेय' (सू. 2894) इति कर्तरि निपातः ।

२८४४ । पोरदुपधात् । (३. १. ९८)

पवर्गान्तादुदुपधाद्यत्स्यात् । शप्यम् । लभ्यम् ।

चम्पूरामायणे—I. 35.

योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥ 2497 ॥

लभ्यः प्राप्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 572. वैदेही कथं नु लभ्या प्राप्या । यत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1305. उपलम्भ्यां प्रशस्ताम् । अनेन यत् । 'उपात्प्रशंसायाम्' (सू. 2846) इति यत्प्रत्यये नुम् इति जयमङ्गलः । उपलम्भ्यां प्रशस्ततया सर्वथा द्रष्टव्यामित्यर्थः । 'उपात्प्रशंसायाम्' (सू. 2846) इति लभेर्यकारादिप्रत्ययविषये नुमागमः । अत एव प्रत्ययात्पूर्वं नुमि सत्यदुपधत्वाभावाद्यतोऽप्राप्तौ 'ऋहलोर्ण्यत्' (सू. 2872) इति ण्यत् । यण्ण्यतोः स्वरे विशेष इति मल्लिनाथः ।

भट्टिकाव्ये—IX. 26.

संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुर्द्रुतम् ।
अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः ॥ 2498 ॥

कपिं हन्तुमक्षम्यं क्षन्तुमशक्यमक्षम् । यत् ।

किरातार्जुनीये—IX. 35.

न स्रजो रुरुचिरे रमणीभ्य-
श्चन्दनानि विरहे मदिरा वा ।
साधनेषु हि रतेरुपधत्ते
रम्यतां प्रियसमागम एव ॥ 2499 ॥

रम्यन्ते एष्विति रम्याणि । यत्प्रत्ययः । 'कृत्यल्युटो बहुलम्' (सू. 2841) इत्यधिकरणार्थः ।

## २८४५ । आङो यि । (७. १. ६५)

आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते । नुमि कृते अदुपधत्वाभावात् ण्यदेव । आलम्भ्यो गौः ।

२८४६ । उपात्प्रशंसायाम् । (७. १. ६६)

उपलम्भ्यः साधुः । स्तुतौ किम् । उपलब्धुं शक्य उपलभ्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1305. उपलम्भ्यां प्रशस्ततया सर्वथा द्रष्टव्याम् । अनेन लभेर्यकारादिप्रत्ययविषये नुमागमः । नुमि कृते अदुपधत्वाभावात् ण्यदेव ।

२८४७ । शकिसहोश्च । (३. १. ९९)

शक्यम् । सह्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 572. हरिः सुग्रीवः कथं द्रष्टुं शक्यः । वियोगश्च कथं सह्यः । यत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 77. अरिभिरसह्यं दुःसहं धनुः । यत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 98. अस्य गुरोर्मन्युः क्रोधः कोटिशो गाः स्पर्शयता प्रतिपादयता भवता विनेतुमपनेतुं शक्यः । विनेतुमित्यत्र विपूर्वान्नयतेः परस्मैपदात्तुमुन् । मन्योरकर्तृस्थत्वात् ।

२८४८ । गदमदचरयमश्चानुपसर्गे । (३. १. १००)

गद्यम् । मद्यम् । चर्यम् ।

वा० । चरेराङि चागुरौ । (1925.)

आचर्यो देशः । गन्तव्य इत्यर्थः । अगुरौ किम् । आचार्यो गुरुः ।

अस्मिन्नेव ग्रन्थे श्लो० 572. एतत्सर्वं त्वया मम गद्यं वाच्यम् । यत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1005. माद्यन्त्यनेनेति मद्यं मदिरा । 'कृत्यल्युटो बहुलम्' (सू. 2841) इति करणार्थत्वम् । अनेन यत् । पापं चर्यं चरणीयम् यस्य स पापचर्यः । पूर्ववद्यत् ।

भट्टिकाव्ये—VI. 50.

प्रयातस्तव यम्यत्वं शस्त्रभृतो ब्रवीमि ते ।
रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ 2500 ॥

तव यम्यत्वं वश्यत्वं प्रयातः । यमेः पूर्ववद्यत् ।

रघुवंशे—III. 45.

त्रिलोकनाथेन सदा मखद्विष-
स्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत्स्वयं कर्मसु धर्मचारिणां
त्वमन्तरायो भवसि च्युतो विधिः ॥ 2501 ॥

त्रिलोकनाथेन त्वया मखद्विषः क्रतुविघातका नियम्या ननु शिक्ष्याः खलु ।

अस्मिन्नेव ग्रन्थे श्लो० 310. निगाद्यं निगदितव्यम् । 'ऋहलोर्ण्यत्' (सू. 2872) 'गदमद' (सू. 2848) इत्यादिना सोपसर्गाद्यतेरनिषेधात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1287. आचार्यत्वम् । अगुराविति निषेधान्न यत् ।

२८४९ । अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु । ( ३. १. १०१ )

अवद्यं पापम् । पण्या गौः । व्यवहर्तव्येत्यर्थः । शतेन वर्या कन्या ।

अस्मिन्नेव ग्रन्थे श्लो० 573. वदितुमनर्हमवद्यं गर्ह्यम् । पापमिति यावत् । वदेर्नञ्पूर्वात् क्यबपवादी गर्ह्यार्थे यत्प्रत्ययान्तो निपातः । अनवद्योऽगर्ह्यः । पण्यः पणितव्यः । त्वया प्रत्युपकारेण विनिमेतव्यः । पण व्यवहारे । पणितव्यार्थे ण्यदपवादी पूर्ववद्यत्प्रत्ययान्तो निपातः । असौ सुग्रीवो भवता वर्यः । मित्रत्वेनाप्रतिबन्धं वरणीय इत्यर्थः । अनिरोधेऽर्थे वृञः पूर्ववत् ण्यदपवाद्येव यत्प्रत्ययान्तो निपातः । स्त्रियामस्य निपातनात् पुंसि प्रयोगः कवेः स्वातन्त्र्यात् । यद्वा वार्य इति ण्यदन्तपाठः प्रत्युदाहरणार्थः ।

माघे—XVI. 35.

त्वयि भक्तिमता न सत्कृतः
कुरुराजा कुरुरेव चेदिपः ।

प्रियमांसमृगाधिपोज्झितः
किमवद्यः करिकुम्भजो मणिः ॥ 2502 ॥

अवद्यः किम् । अनवद्य एवेत्यर्थः ।

रघुवंशे—VI. 69.

तं प्राप्य सर्वावयवानवद्यं
व्यावर्ततान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं कांक्षति षट्पदाली ॥ 2503 ॥

सर्वेष्ववयवेषु अनवद्यमदोषम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1507. पण्यैः क्रय्यैः पण्यद्रव्यैः ।

२८५० । वह्यं करणम् । (३. १. १०२)

वहन्त्यनेनेति वह्यं शकटम् । करणं किम् । वाह्यं वोढव्यम् ।

भट्टिकाव्ये—VI. 52.

तेन वह्येन हन्तासि त्वमर्थं पुरुषाशिनाम् ।
राक्षसं क्रूरकर्माणं शक्रारिं दूरवासिनम् ॥ 2504 ॥

हे राम त्वं वहन्त्यनेनेति वह्यं शकटम् । अनेन ण्यदपवादेन यत्प्रत्ययान्तो निपातः । इह वह्येन करणेन सहायभूतेन तेन सुग्रीवेण ।

रघुवंशे—VI. 10.

मनुष्यवाह्यं चतुरस्रयान-
मध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं
पतिंवरा क्लृप्तविवाहवेषा ॥ 2505 ॥

मनुष्यैर्वाह्यम् । ण्यत् ।

## २८५१ । अर्यः स्वामिवैश्ययोः । (३. १. १०३)

ऋ गतौ । अस्माद्यत् । ण्यतोऽपवादः । अर्यः स्वामी वैश्यो वा ।

अस्मिन्नेव ग्रन्थे ग० 2504. पुरुषाशिनामर्यं स्वामिनम् । यत्प्रत्ययान्तो निपातः ।

माघे—XVIII. 52.

शोचित्वाग्रे भृत्ययोर्मृत्युभाजो-
र्यः प्रेम्णा नो तथा वल्लभस्य ।
पूर्वं कृत्वा नेतरस्य प्रसादं
पश्चात्तापादाप दाहं यथान्तः ॥ 2506 ॥

ऋच्छतीत्यर्यः स्वामी ।

भट्टिकाव्ये—VI. 54.

तेन संगतमार्येण रामाजर्यं कुरु द्रुतम् ।
लङ्कां प्राप्य ततः पाप दशग्रीवं हनिष्यसि ॥ 2507 ॥

आर्येण अर्तुमर्हेण । ऋ गतौ । ण्यत् । प्रत्युदाहरणम् ।

## २८५२ । उपसर्या काल्या प्रजने । (३. १. १०४)

गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 471. उपसर्या उपसंक्रमणीया । प्राप्तगर्भग्रहणकालेत्यर्थः । 'काल्योपसर्या प्रजने' II. ix. 70. इत्यमरः । सर्तेरुपपूर्वाद्यत्प्रत्ययान्तो निपातः ।

## २८५३ । अजर्यं संगतम् । (३. १. १०५)

नञ्पूर्वाज्जीर्यतेः कर्तरि यत् संगतं चेद्विशेष्यम् । न जीर्यतीत्यजर्यम् । 'तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्' इति भट्टिः । "मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध" इत्यत्र तु संगतमिति विशेष्यमध्याहार्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2507. हे राम आर्येण तेन सुग्रीवेण । न जीर्यतीत्यजर्यमनपायि । अनेन संगतविषये जीर्यतेर्नञ्पूर्वात्कर्तरि यत्प्रत्ययान्तो निपातः । संगतं संगतिम् । सख्यमित्यर्थः । भावे क्तः । द्रुतं कुरु ।

रघुवंशे—XVIII. 6.

तस्मै विसृज्योत्तरकोसलानां
धर्मोत्तरस्तत्प्रभवे प्रभुत्वम् ।
मृगैरजर्यं जरसोपदिष्ट-
मदेहबन्धाय पुनर्बबन्ध ॥ 2508 ॥

नलस्तस्मै नभसे पुत्रायोत्तरकोसलानां प्रभुत्वं विसृज्य दत्वा मृगैरजर्यम् । संगतमिति शेषः । बबन्ध । मोक्षार्थं वनं गत इत्यर्थः ।

२८५४ । वदः सुपि क्यप्च । ( ३. १. १०६ )

उत्तरसूत्रादिह भाव इत्यपकृष्यते । वदेर्भावे क्यप् स्यात् चाद्यत् अनुपसर्गे सुप्युपपदे । ब्रह्मोद्यं ब्रह्मवद्यम् । ब्रह्म वेदः । तस्य वदनमित्यर्थः ।

भट्टिकाव्ये—VI. 55.

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम् ।
मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ 2509 ॥

तत्र सुग्रीवे अनृतोद्यमनृतवचनं नास्ति । भावे क्यप् । अहं सत्यवद्यं सत्यवचनं ब्रवीमि । अत्रैव सूत्रे चकाराद्यत् ।

भट्टिकाव्ये—V. 60.

मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः ।
निरगाच्छत्रुहस्तं त्वं यास्यसीति शपन्वशी ॥ 2510 ॥

सत्यवद्यं सत्यवादः । चकाराद्यत् । तद्वान् सत्यवद्यः । अर्शआदिभ्योऽच् । अथवा सत्यं वदतीति 'कृत्यल्युटो बहुलम्' (सू. 2841) इति कर्तरि कृत् । अनेन यत् । मृषोद्यं मृषावादम् । 'राजसूय' ( सू. 2865 ) इत्यादिना भावे क्यबन्तो निपातः ।

भट्टिकाव्ये— VI. 58.

स राजसूययाजीव तेजसा सूर्यसन्निभः ।
अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ 2511 ॥

मृषोद्यं मृषावदनम् । मृषापूर्वाद्वदेः अनेन पक्षे यति प्राप्ते नित्यं क्यबेव निपातितः 'राजसूय' ( सू. 2865 ) इत्यादिना ।

अस्मिन्नेव ग्रन्थे श्लो० 573. वदितुमनर्हमवद्यं गर्ह्यम् । वदेर्नञ्पूर्वात् क्यबपवादो गर्ह्यार्थे यत्प्रत्ययान्तो निपातः 'अवद्यपण्य' (सू. 2849) इत्यादिना ।

२८५५ । भुवो भावे । ( ३. १. १०७ )

क्यप् स्यात् । ब्रह्मणो भावो ब्रह्मभूयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2509. मित्रभूयं मित्रभावं । क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 753 द्युनिवासभूयं देवभूयम् । क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 679. ब्रह्मभूयम् ।

नैषधे—V. 61.

वीक्ष्य तस्य वरुणस्तरुणत्वं
यद्बभार निबिडं जडभूयम् ।
नौचिती जडपतेः किमु सास्य
प्राज्यविस्मयरसस्तिमितस्य ॥ 2512 ॥

जडभूयं जडत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 479. देवभूयम् ।

२८५६ । हनस्त च । ( ३. १. १०८ )

अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात् तकारश्चान्तादेशः । ब्रह्मणो हननम् ब्रह्महत्या । स्त्रीत्वं लोकात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2509. रिपुहत्यां शत्रुवधम् । हन्तेः क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 5. ब्रह्महत्या ।

२८५७ । एतिस्तुशास्वृदृजुषः क्यप् । ( ३. १. १०९ )

एभ्यः क्यप् स्यात् ।

२८५८ । ह्रस्वस्य पिति कृति तुक् । ( ६. १. ७१ )

इत्यः । स्तुत्यः । 'शास इदङ्हलोः' ( सू. 2486 ) इतीत् । शिष्यः । वृ वृञ् । वृत्यः । वृङस्तु वार्या ऋत्विजः । आदृत्यः । जुष्यः ।

वा० । शंसिदुहिगुहिभ्यो वा । ( 1835. )

इति काशिका । शस्यं शंस्यम् । दुह्यं दोह्यम् । गुह्यं गोह्यम् ।

भट्टिकाव्ये—VI. 56.

आदृत्यस्तेन वृत्येन स्तुत्यो जुष्येण संगतः ।
इत्यः शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ 2513 ॥

वृत्येन त्वया मित्रत्वेन वरणीयेन जुष्येण हनुमदादीनां सेव्येन । त्वमादृत्यः सुग्रीवादीनामादरणीयः । स्तुत्यः स्तोतव्यः । शिष्येण शासनीयेनान्तेवासिना । 'शास' (सू. 2486) इतीकारः । इत्य एतव्यः । सर्वत्र 'एतिस्तु' (सू. 2857) इति क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1049. स्तुत्यं स्तोतव्यम् ।

२८५९ । ऋदुपधाच्चाक्लृपिचृतेः । ( ३. १. ११० )

वृत् वृत्यम् । वृध् वृध्यम् । क्लृपिचृत्योस्तु कल्प्यम् चर्त्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2513. गृध्यमभिकांक्ष्यम् । क्यप् ।

२८६० । ई च खनः । ( ३. १. १११ )

चात्क्यप् । खेयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 575. तस्य सुग्रीवस्य । 'कृत्यानां कर्तरि वा' (सू. 629) इति षष्ठी । अन्यो द्वितीयोऽपि सागरः नाखेयः । खनितुमशक्यो न । क्यप् । ईकारश्चान्तादेशः ।

२८६१ । भृञोऽसंज्ञायाम् । (३. १. ११२)

भृत्याः कर्मकराः । भर्तव्या इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 575. भृत्या भर्तव्याः कर्मकराः ।

२८६२ । मृजेर्विभाषा । (३. १. ११३)

मृजेः क्यप् वा स्यात् । पक्षे ण्यत् । मृज्यः मार्ग्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 575. तस्य मन्युः शोकस्त्वया मार्ग्यो मार्जनीयः। तेन च ते शोको मृज्यो मार्ष्टव्यः । क्यपि मृज्यः । ण्यति मार्ग्यः ।

२८६५ । राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । (३. १. ११४)

एते सप्त क्यबन्ता निपात्यन्ते । लतात्मकः सोमो राजा । स सूयतेऽत्रेति अधिकरणे क्यब्निपातनाद्दीर्घः । राजसूयः राजसूयम् । अर्धर्चादिः । सरत्याकाशे सूर्यः । कर्तरि क्यब्निपातनादुत्वम् । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयति । क्यपो रुट् । मृषोपपदाद्वदेः कर्मणि नित्यं क्यप् मृषोद्यम् । विशेष्यनिघ्नोऽयम् । 'उच्छ्रायसौन्दर्यगुणा मृषोद्याः' । रोचते रुच्यः । गुपेरादेः कुत्वं च संज्ञायाम् । सुवर्णरजतभिन्नं धनं कुप्यम् । गोप्यमन्यत् कृष्टे पच्यन्त इति कृष्टपच्याः । कर्मकर्तरि क्यप् । न व्यथते अव्यथ्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 2510. मृषोद्यं प्रवदन्तीम् । भावे क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2511. राज्ञा सूयत इति राजसूयः क्षत्रियाधिकारः क्रतुविशेषः । सुनोतेः क्यबन्तो निपातः । सरति सुवतीति वा सूर्यः । पूर्ववन्निपातः । मृषोद्यं मृषावादं न भवतीति अमृषोद्यं सत्यवादम् । मृषापूर्वाद्वदेः 'वदः सुपि क्यप् च' (सू. 2854) इति पक्षे यति प्राप्ते नित्यं क्यबेव निपातितः । रोचत इति रुच्यो रोचमानः । कर्तरि निपातः ।

भट्टिकाव्ये—VI. 59.

अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः ।
रत्नान्नपानकुप्यानामाढ्तुर्नष्टसंस्मृती ॥2514॥

कृष्टे पच्यन्त इति कृष्टपच्याः। कर्मकर्तरि निपातनात्क्यपि ततो नञ्समासः अकृष्टपच्या लताः। कुप्यत इति कुप्यं हेमरूप्यातिरिक्तं धनम्। गुपेर्निपातनात्क्यपि गुपेरादेः कुत्वं च संज्ञायामिति गस्य कः।

भट्टिकाव्ये—VI. 60.

समुत्तरन्तावव्यथ्यौ नदान्भिद्योद्ध्यसन्निभान्।
सिध्यतारामिव ख्यातां शबरीमापतुर्वने ॥ 2515 ॥

अव्यथ्यौ अव्यथमानौ अश्रान्तावित्यर्थः। नञ्पूर्वाद्व्यथेस्तत एव निपातनात्कर्तरि क्यप्।

अस्मिन्नेव ग्रन्थे श्लो० 2510. मृषोद्यं मृषावादम्। 'राजसूय' (सू. 2865) इत्यादिना क्यबन्तो निपातः। सत्यं वदतीति सत्यवद्यः। 'कृत्यल्युटो बहुलम्' (सू. 2841) इति कर्तरि कृत्यः। 'वदः सुपि क्यप् च' (सू. 2854) इति चकाराद्यत्। अर्शआदिभ्योऽच्।

माघे—IV. 10.

मुदे मुरारेरमरैः सुमेरो-
रानीय यस्योपचितस्य शृङ्गैः।
भवन्ति नोद्दामगिरां कवीना-
मुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥ 2516 ॥

उच्छ्रायसौन्दर्यगुणाः कवीनां मृषा उद्यन्त इति मृषोद्या मिथ्यावाच्याः। क्यबन्तो निपातः।

माघे—XIX. 89.

विद्विषोऽद्विषुरुद्वीक्ष्य तथाप्यासन्निरेनसः।
अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥ 2517 ॥

रोचत इति रुच्यम्। न रुच्यम् अरुच्यमरोचमानम्। क्यबन्तो निपातः।

**२८६६। भिद्योद्ध्यौ नदे। (३. १. ११५)**

मिदेरुज्झेश्च क्यप् । उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः । उज्झत्युदकमुद्ध्यः । नदे किम् । भेत्ता । उज्झिता ।

अस्मिन्नेव ग्रन्थे श्लो० 2515. भिद्योद्ध्यौ नदौ । क्यबन्तो निपातः ।

रघुवंशे—XI. 8.

वीचिलोलभुजयोस्तयोर्गतं
शैशवाच्चपलमप्यशोभत ।
तोयदागम इवोद्ध्यभिद्ययो-
र्नामधेयसदृशं विचेष्टितम् ॥ 2518 ॥

उद्ध्यभिद्ययोर्नदविशेषयोः ।

२८६७ । पुष्यसिध्यौ नक्षत्रे । ( ३. १. ११६ )

अधिकरणे क्यब्निपात्यते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन् सिध्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 2515. सिध्यन्त्यस्मिन्नर्थाः इति सिध्यः पुष्यः । अधिकरणे निपातनात् क्यप् ।

२८६८ । विपूयविनीयजित्या मुञ्जकल्कहलिषु । ( ३. १. ११७ )

पुञ्नीञ्जिभ्यः क्यप् । विपूयो मुञ्जः । रज्वादिकरणाय शोधयितव्य इत्यर्थः । विनीयः कल्कः । पिष्टौषधिविशेष इत्यर्थः । पापमिति वा । जित्यो हलिः । बलेन कृष्टव्य इत्यर्थः । कृष्टसमीकरणार्थं स्थूलकाष्ठम् हलिः । विपव्यं विनेयम् जेयम् ।

भट्टिकाव्ये—VI. 61.

वसानां वल्कले शुद्धे विपूयैः कृतमेखलाम् ।
क्षामामञ्जनखण्डाभां दण्डिनीमजिनास्तराम् ॥ 2519 ॥

विपूयन्त इति विपूया मुञ्जाः । विपूर्वात्पवतेर्मुञ्जार्थे कर्मणि क्यबन्तो निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 893. अविनीयसंभ्रमविकासिभक्तिभिः अविनीयोऽकल्कः । अकपट इति यावत् । संभ्रम आदरः । क्यबन्तो निपातः ।

२८६९ । प्रत्यपिभ्यां ग्रहेः । (३. १. ११८)

वा० । छन्दसीति वक्तव्यम । (1944.)

प्रतिगृह्यम । अपिगृह्यम् । लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् ।

२८७० । पदास्वैरिबाह्यापक्ष्येषु च । (३. १. ११९)

अवगृह्यम प्रगृह्यम् पदम् । अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । पञ्जरादि-बन्धनेन परतन्त्रीकृताः इत्यर्थः । बाह्यायां ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशात्पुंनपुंसकयोर्न । पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यत आर्य-गृह्यः । तत्पक्षाश्रित इत्यर्थः ।

भट्टिकाव्ये—VI. 62.

प्रगृह्यपदवत्साध्वीं स्पष्टरूपामविक्रियाम् ।
अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दिताम् ॥ 2520 ॥

प्रगृह्यपदवत् । यस्य पदस्य प्रगृह्यसंज्ञा तत्पदं प्रगृह्यम् । 'प्रत्यपिभ्यां ग्रहेः' (सू. 2869) इत्यनुवृत्तौ अनेन प्रपूर्वाद्ग्रहेः पदेऽभिधेये क्यप् । अगृह्यां स्वतन्त्राम् । ग्रहेरस्वैरिविषये क्यप् । गृह्या अस्वैरिणी । अस्वतन्त्रा न भवतीत्यगृह्या । वीतकामत्वात् । वीतरागा हि स्वतन्त्रा भवन्ति । देवगृह्यां देवपक्ष्यां क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1307. आर्यगृह्यम् आर्याणां सतां गृह्यं पक्ष्यम् । क्यप् ।

२८७१ । विभाषा कृवृषोः । (३. १. १२०)

क्यप् स्यात् । कृत्यम् । वृष्यम् । पक्षे—

२८७२ । ऋहलोर्ण्यत् । (३. १. १२४)

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् स्यात् । कार्यम् । वर्ष्यम् ।

भट्टिकाव्ये—VI. 63.

धर्मकृत्यरतां नित्यमवृष्यफलभोजनाम् ।
दृष्ट्वा तामसुचद्रामो युग्यायात इव श्रमम् ॥ 2521 ॥

नित्यं धर्मकृत्यरतां धर्मकार्यासक्ताम् । अवृष्याणि अनिन्द्रियवर्धनानि । 'विभाषा' (सू. 2871) इत्युभयत्र क्यप् । ह्रस्वस्य तुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 705. कृत्यं कर्म ।

अस्मिन्नेव ग्रन्थे श्लो० 2507. आर्येण अर्तुमर्हेण । ऋ गतौ । अनेन ण्यत् ।

भट्टिकाव्ये—VI. 64.

स तामूचेऽथ कच्चित्त्वममावस्यासमन्वये ।
पितॄणां कुरुषे कार्यमपाक्यैः स्वादुभिः फलैः ॥ 2522 ॥

अपाक्यैरपचनीयैः अनग्निपक्वैरित्यर्थः । अनेन ण्यत् । पितॄणां कार्यम् । पूर्ववत् ण्यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1036. अर्च्या अर्चनार्हाः । 'अर्हे कृत्य' (सू. 2822) इति कृत्यः । अनेन ण्यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 692. ओष्ठाभ्यामेवावलोप्तुमत्तुमर्हाणि ओष्ठावलोप्यानि । अतिमृदूनीत्यर्थः । अनेन ण्यत् । 'कृत्यैरधिकार्थवचने' (सू. 695) इति करणे तृतीयासमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 1305. उपलम्भ्यां प्रशस्ततया सर्वथा द्रष्टव्यामित्यर्थः । 'उपात्प्रशंसायां' (सू. 2846) इति लभेर्यकारादिप्रत्ययविषये नुमागमः । अत एव प्रत्ययात्पूर्वं नुमि सति अदुपधत्वाभावाद्यतोऽप्राप्तौ अनेन ण्यत् । यण्ण्यतोः स्वरे विशेषः ।

रघुवंशे—I. 3.

मन्दः कवियशः प्रार्थी गमिष्याम्यपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ 2523 ॥

अपहास्यताम् । ण्यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1787. अनूच्यत इति अनुवाक्या । सा च प्रशास्तृपाठ्या, तदभावे होतृपाठ्या देवआह्वानी ऋक् । ण्यत् । कुत्वम् । शब्दसंज्ञात्वात् 'वचोऽशब्दसंज्ञायाम्' (सू. 2883) इति न प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 310. इदं न निगाद्यं न निगदितव्यम् । अनेन ण्यत् । 'गदमद' (सू. 2848) इत्यादिना सोपसर्गाद्यतो निषेधात् ।

२८७३ । युग्यं च पत्रे । (३. १. १२१)

पत्रं वाहनम् । युग्यो गौः । शकटादिना योक्तव्य इत्यर्थः । अत्र क्यप् कुत्वं च निपात्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 2521. रामः युग्यं पत्रं वाहनम् । क्यबन्तो निपातः । तेनायात इव श्रममसुचत् । 'तद्वहति रथयुगप्रासंगम्' (सू. 1627) इति तद्धिते तु युगं वहति युग्यः ।

२८७४ । अमावस्यदन्यतरस्याम् । (३. १. १२२)

अमोपपदाद्वसेरधिकरणे ण्यत् वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमा सह वसतोऽस्यां चन्द्रार्कावमावास्या अमावस्या वा ।

अस्मिन्नेव ग्रन्थे श्लो० 2522. अमावस्या । अमावास्येति वा पाठः ।

२८८१ । ण्य आवश्यके । (७. ३, ६५)

कुत्वं न । अवश्यपाच्यम् ।

२८८२ । यजयाचरुचप्रवचर्चश्च । (७. ३. ६६)

ण्ये कुत्वं न । याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यं ग्रन्थविशेषः । अर्च्यम् ।

त्यजेश्च । त्याज्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1787. इज्यतेऽनयेति याज्या होतृपाठ्या यागसाधनं ऋक् । 'ऋहलोर्ण्यत्' (सू. 2872) इति ण्यः । 'कृत्यल्युटो बहुलम्' (सू. 2841) इति करणार्थता । अनेन कुत्वप्रतिषेधः ।

रघुवंशे—I. 28.

द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ 2524 ॥

30

त्याज्यः । 'त्यजेश्च' इति कुत्वप्रतिषेधः ।

२८८३ । वचोऽशब्दसंज्ञायाम् । (७. ३. ६७)

ण्ये कुत्वप्रतिषेधः । वाच्यः । शब्दाख्यायां तु वाक्यम् ।

चम्पूभारते—I. 12.

उपेत्य तां पाण्डुरुदारविक्रमः
प्रजामनः पल्लवयन्प्रशासनात् ।
यशःप्रकाशैर्यमुनासखीसखै-
र्निनाय लोकं निजनामवाच्यताम् ॥ 2525 ॥

ण्ये कुत्वप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1787. अनूच्यत इति अनुवाक्या ऋक् । 'चजोः' (सू. 2863) इति कुत्वम् । शब्दसंज्ञात्वात्कुत्वप्रतिषेधो न । वाक्यलक्षणविदः । पूर्ववत् ।

२८८५ । भोज्यं भक्ष्ये । (७. ३. ६९)

भोग्यमन्यत् ।

२८८६ । ओरावश्यके । (३. १. १२५)

उवर्णान्ताद्धातोर्ण्यत्स्यात् अवश्यंभावे द्योत्ये । लाव्यम् । पाव्यम् ।

भट्टिकाव्ये—VI. 65.

अवश्यपाव्यं पवसे कच्चित्त्वं देवभागधैः ।
आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि ॥ 2526 ॥

अवश्यपाव्यं अवश्यंभावेन पावयितव्यम् । अनेन ण्यत् ।

२८८७ । आसुयुवपिरपिलपित्रपिचमश्च । (३. १. १२६)

षुञ् आसाव्यम् । यु मिश्रणे याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । त्राप्यम् । आचाम्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2526. द्विजैरासाव्यम् अभिषोतव्यम् । आङ्पूर्वात्सुनोतेर्ण्यत् ।

भट्टिकाव्ये—VI. 66.

आचाम्यं सन्ध्ययोः कच्चित्संयक्ते न प्रहीयते ।
कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिम् ॥ 2527 ॥

ते तवाचाम्यमाचमनकर्म । ण्यत् ।

## २८८८ । आनाय्योऽनित्ये । (३. १. १२७)

आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते । गार्हपत्यान्नित्यादानीय प्रणीतोऽग्निरनित्यः आनाय्यः दक्षिणाग्निः । 'यो गार्हपत्यादानीय दक्षिणाग्नौ प्रणीयते । तस्मिन्नानाय्य' II. vii. 21. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 2527. आनाय्यम् । आङ्पूर्वान्नयतेर्ण्यदायादेशनिपातः ।

## २८८९ । प्रणाय्योऽसंमतौ । (३. १. १२८)

संमतिः प्रीतिविषयीभवनं कर्मव्यापारः । तथा भोगेष्वादरोऽपि संमतिः । प्रणाय्यश्चोरः । प्रीत्यनर्ह इत्यर्थः । प्रणाय्योऽन्तेवासी । विरक्त इत्यर्थः । प्रणेयोऽन्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 359. धर्मद्रोही धर्मविघातकः प्रणाय्यो जनः सतामसंमतश्चोरजनः ।

## २८९० । पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु । (३. १.१२९)

मीयतेऽनेन पाय्यं मानम् । ण्यत् धात्वादेः पत्वं च । आतो युक् । सम्यक् नीयते होमार्थमग्निं प्रति इति सान्नाय्यं हविर्विशेषः । ण्यदायादेशः समो दीर्घश्च निपात्यते । निचीयतेऽस्मिन् धान्यादिकमिति निकाय्यो निवासः । अधिकरणे ण्यत् आय् धात्वादेः कुत्वं च निपात्यते । धीयतेऽनया समिदिति धाय्या ऋक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1004. सन्नीयत इति सान्नाय्यं हविर्विशेषः। हविर्विशेषे संपूर्वान्नयतेर्ण्यदायादेशोपसर्गदीर्घाणां निपातः।

अस्मिन्नेव ग्रन्थे श्लो० 359- निकाय्यं निवासम्। ण्यत्। 'निकाय्य-निलयालयाः' II. ii. 5. इत्यमरः।

नैषधे—II. 56.

> अधिलं मधु तत्कथा मम श्रवणप्राहुणिकीकृता जनैः।
> मदनानलबोधने भवेत्खग धाय्या धिगधैर्यधारिणः॥ 2528॥

मदनानलबोधने कामाग्निप्रज्वलने धाय्या सामिधेनी भवेत्। 'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धनी' II. vii. 22. इत्यमरः।

## २८९१। क्रतौ कुण्डपाय्यसंचाय्यौ। (३. १. १३०)

कुण्डेन पीयतेऽस्मिन् सोमः कुण्डपाय्यः क्रतुः। संचीयतेऽसौ संचाय्यः।

भट्टिकाव्ये—VI. 68.

> कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा।
> कथाभी रमसे नित्यमुपचाय्यवतां शुभे॥ 2529॥

कुण्डैः पीयते सोमोऽस्मिन् कुण्डपाय्यः क्रतुविशेषः। स्वरार्थं यत्प्रत्ययान्तो निपातः।

## २८९२। अग्नौ परिचाय्योपचाय्यसमूह्याः। (३. १. १३१)

अग्निधारणार्थे स्थलविशेषे एते साधवः।

अस्मिन्नेव ग्रन्थे श्लो० 2529. उपचाय्यः चित्याग्निविशेषः। चिनोतेर्ण्यत्।

## २८९३। चित्याग्निचित्ये च। (३. १. १३२)

चीयतेऽसौ चित्योऽग्निः। अग्नेश्चयनमग्निचित्या।

अस्मिन्नेव ग्रन्थे श्लो० 2529. अग्निचित्या अग्निचयनम्। चिनोतेः स्वरार्थं भावे यकारः तुक् च निपातितः।

२८९४ । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।
(३. ४. ६८)

एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । भवतीति भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा इत्यादि ।

नैषधे—I. 120.

अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते
जनस्य चित्तेन भृशावशात्मना ॥ 2530 ॥

अवश्यभव्येषु अवश्यंभाव्यर्थेषु । अनेन कर्तरि यत्प्रत्ययान्तो निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 2496. जनौघजन्यं जनसंघजातम् । अनेन कर्तरि निपातः । 'अचो यत्' ( सू. 2842 ) इत्यत्र ।

वा० शसिचतियतिजनीनामुपसंख्यानम् ।

इति केचित् ।

माघे—V. 15.

अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः ॥ 2531 ॥

आपतन्तीत्यापात्याः स्वयमाक्रमितुमागच्छन्तः । अनेन कर्तरि ण्यदन्तो निपातः ।

॥ इति कृत्यप्रकरणम् ॥

—०—

॥ श्रीरस्तु ॥

# ॥ अथ कृदन्तप्रकरणम् ॥

—:o:—

## २८९५ । ण्वुल्तृचौ । (३. १. १३३)

धातोरेतौ स्तः । 'युवोरनाकौ (सू. 1247) इत्यकादेशः । कारकः । कर्ता ।

अस्मिन्नेव ग्रन्थे श्लो० 507. सुग्रीवस्तव सख्यस्य सखित्वस्य । 'कर्तृकर्मणो कृति' (सू. 623) इति कृद्योगे कर्मणि षष्ठी । **कारकः** कर्ता । मैथिल्याः सीतायाः । पूर्ववत् षष्ठी । द्रष्टा असि । कृदृशिभ्यां क्रमात् ण्वुल्तृचौ ।

अस्मिन्नेव ग्रन्थे श्लो० 564. एतानि सहजकवचकुण्डलानि **याचकं** याचिष्यमाणम् । 'अकेनोर्भविष्यदाधमर्ण्ययोः' (सू. 628) इति कृद्योगे षष्ठीप्रतिषेधात् द्वितीया । याचकमित्यत्र 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (सू. 3175) इति भविष्यत्यर्थे ण्वुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 716. धरस्य पर्वतस्य । कृद्योगे कर्मणि षष्ठी । **उद्धर्ता** । कर्तरि तृच् ।

अस्मिन्नेव ग्रन्थे श्लो० 542. वनाकम्पं **कर्ता** साधुकारी । 'तृन्' (सू. 3115) इति साध्वर्थे तृन् । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधात् द्वितीया । नभः **पूरयितारः** । पूर्ववत तृन् द्वितीया च ।

अनर्घराघवे—III. 37.

विपदां प्रति**कर्तारो** यस्योपायैरथर्वभिः ।
त्वादृशाः सन्ति किं तस्य कल्याणमनुयुज्यते ॥ 2532 ॥

त्वादृशा विपदां **प्रतिकर्तारः** । तृच् । कर्मणि षष्ठी । तृनि विपदाशब्दो भिदादिरादन्तः । अत्र सख्यस्य कारकः, मैथिल्या द्रष्टा, धरस्योद्धर्ता, विपदां प्रतिकर्तारः इत्यादौ 'तृजकाभ्यां कर्तरि' (सू. 709) इति न समासः ।

२८९६ । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । (३. १. १३४)

नन्द्यादेर्ल्युः ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । ग्राही । पचतीति पचः । पचादिराकृतिगणः । नन्दिग्रहिपचादयः क्रमेण ३. ५, ३. ६, ३. ७ ।

अस्मिन्नेव ग्रन्थे श्लो० 507 नन्दयतीति नन्दनः । कपीनां नन्दनः **कपिनन्दनः** । निरुपपदाधिकारात् कर्तरि ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 1376. मुनीन्द्राणां **नन्दनानि** नन्दकानि । वनौकसां **रमणानि** मनोरमाणि । उभयत्रापि नन्द्यादित्वाल्ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 1215. वाश्यन्त इति **वाशनैः** कूजद्भिः । रोचन्त इति **रोचनैः** रोचमानैः । उभयत्रापि नन्द्यादित्वाल्ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 1123. ताराणां नक्षत्राणां **परिभावीनि** तिरस्कारीणि । चेतसां विरहितचित्तानां मथ्नन्तीति **मन्थीनि** प्रमाथीनि । **उद्भासीनि** विकासीनि । सर्वत्र ग्रह्यादित्वाण्णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1045. वदतीति वदः । पचाद्यच् । कुत्सितस्य वदः **कद्वदः** । 'रथवदयोश्च' (सू. 1028) इति कोः कदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 704. वर्धयत इति वर्धनौ । भूमेर्वर्धनौ **भूमिवर्धनौ** । नन्द्यादित्वात् ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 705- **क्षितिवर्धनम्** । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 701. सहत इति सहः । पचाद्यच् । गमागमयोः सहः गमागमसहः । **भीषणं** भयङ्करम् । नन्द्यादित्वात् ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 1836. पालयतीति **पालः** । पचाद्यच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1722. **भीषणान**तिभयङ्करान् । नन्द्यादित्वात् ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 206. **स्त्रीपुंसभीषणे** । ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 618. **भीषणाभ्यः** भयङ्कराभ्यः । नन्द्यादित्वात् कर्तरि ल्युप्रत्यये स्त्रियां टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 40. **जमदग्निसूनुपितृतर्पणीः** तेषां तृप्तिकरीः । अपः ।

अस्मिन्नेव ग्रन्थे श्लो० 41. अवतीत्यवनी न अवनी अनवनी नवनीपवनावलिः । 'कृत्यल्युटो बहुलं' (सू. 2841) इति कर्तरि ल्युट्। टित्त्वात् 'टिड्ढाणञ्' (सू. 470) इत्यादिना स्त्रियां ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 23. भीषयतीति भीषणम् । ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 702. ग्राहिणी आग्रहिणी मा स्म भूः । गन्तुमुत्सहत इत्युत्साहिनी भव । उद्भासत इति उद्भासिनी भूत्वा नोऽस्माकं वक्षःसंमर्दिनी वक्षःसंपीडयित्रीति षष्ठीसमासः । अनुपपदाधिकारात् । भव । सर्वत्र ग्रह्यादित्वाण्णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 931. चरतीति चरः । पचाद्यच् । स एव चारः । प्रज्ञादित्वादण् ।

अस्मिन्नेव ग्रन्थे श्लो० 50. चरतीति चरी । सह चरी सहचरीति सुप्सुपेति समासः । पचादिषु चरडिति टित्करणात् 'टिड्ढाणञ्' (सू. 470) इति ङीप् । केचित् सह चरतीति सहचरी । 'विभाषा सेना' (सू. 828) इत्यादिना चकारात् टप्रत्ययः । टित्त्वात् ङीबित्याहुः ।

रघुवंशे—II. 29.

स पाटलायां गवि तस्थिवांसं
धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ 2533 ॥

धरतीति धरः पचाद्यच् । धनुषो धरः धनुर्धरः । प्रफुल्लो विकसितः । फुल्ल विकसन इति धातोः पचाद्यच् । प्रफुल्तमिति पाठे ञि फला विशरण इति धातोः कर्तरि क्तः ।

माघे—I. 23.

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत ।

तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसंभवा मुदः ॥ 2534 ॥

सम्भवन्तीति संभवाः । पचाद्यच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1908. चरतीति चरः । पचाद्यच् । स एव चारः । प्रज्ञाद्यण् ।

माघे—II. 93.

षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥ 2535 ॥

अपेक्षत इत्यपेक्षः । पचाद्यच् ।

अस्मिन्नेव ग्रन्थे श्लो० 542. धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः ।

अस्मिन्नेव ग्रन्थे श्लो० 824. संक्रन्दनस्येन्द्रस्य । ल्युः ।

रघुवंशे—XV. 5.

ते रामाय वधोपायमाचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ 2536 ॥

लुनातीति लवणः । नन्द्यादित्वात् ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 568. कालयवनादयः एनं चैद्यमनुयायिनः अनुयास्यन्तः । 'भविष्यति गम्यादयः' (सू. 3171) इति णिनिः । अतः 'अकेनोः' (सू. 628) इति कर्मणि षष्ठ्याः प्रतिषेधात् द्वितीया । ग्रह्यादिणिनेस्तु ताराणां परिभावीनि । चेतसां मन्थीनि इति [ वत् ] कर्मणि षष्ठी [ स्यात् ] ।

## २८९७ । इगुपधज्ञाप्रीकिरः कः । ( ३. १. १३५ )

एभ्यः कः स्यात् । क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः ।

अस्मिन्नेव ग्रन्थे श्लो० 512. न जानातीत्यज्ञः । प्रीणयतीति प्रियः प्रीतिकरः । यूनां कर्मणि षष्ठी । वितृन्दन्तीति वितृदाः हिंसकाः । उत्किरन्ति विक्षिपन्तीति उत्किराः । कुसुमानामुत्किराः कुसुमोत्किराः ।

अस्मिन्नेव ग्रन्थे श्लो० 695. विशेषेण बुध्यन्त इति विबुधाः । कः ।

अस्मिन्नेव ग्रन्थे श्लो० 1704. गिरिषु ज्ञान् गिरिज्ञान् । कः ।

अस्मिन्नेव ग्रन्थे श्लो० 87. शोभत इति शुभा । कः ।

रघुवंशे—X. 20.

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ 2537 ॥

सर्वेषां ज्ञः सर्वज्ञः । कः ।

## २८९८ । आतश्चोपसर्गे । ( ३. १. १३६ )

कः स्यात् । सुग्लः । प्रज्ञः ।

अस्मिन्नेव ग्रन्थे श्लो० 512. प्रकर्षेण ग्लायतीति प्रग्लः प्रग्लानः । कप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1229. प्रतिष्ठत इति प्रष्ठोऽग्रगामी । तिष्ठतेः प्रोपसृष्टात्कर्तरि कः । 'प्रष्ठोऽग्रगामिनि' (सू. 2917) इति षत्वनिपातः ।

भट्टिकाव्ये—VII. 54.

परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्धसु ।
विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभयोपमे ॥ 2538 ॥

उपमातीत्युपमे सदृशे । कः । 'आतश्चोपसर्गे' (सू. 3283) इत्यङि तु उपमा सादृश्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 846. दुष्ठु तिष्ठतीति दुस्थः । कर्तरि कः ।

अस्मिन्नेव ग्रन्थे श्लो० 952. प्रष्ठम् । पूर्ववत्कः । षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2295. आभातीत्याभः । कः । अङि तु आभा ।

रघुवंशे—XI. 16.

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसास्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ 2539 ॥

उत्थया उत्पन्नया । उत्पूर्वातिष्ठतेः कर्तरि कः ।

नैषधे—V. 51.

मेनका मनसि तापमुदीतं यद्विधित्सुरकरोदवहित्थाम् ।
तत्स्फुटं निजहृदः पुटपाके पङ्क्तिसिमसृजद्बहिरुत्थाम् ॥ 2540 ॥

उत्थाम् । पूर्ववत् ।

२८९९ । पाघ्राध्माधेट्दृशः शः । (३. १. १३७)

पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्त्वात् स्तनन्धयी इति खशीव ङीप् प्राप्तः । पश्यः । 'पाघ्रा' (सू. 2360) पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे इति पश्यादेशः । केचिदुपसर्ग इति नानुवर्तयन्ति ।

अस्मिन्नेव ग्रन्थे श्लो० 511. ध्वनीनाम् । कर्मणि षष्ठी । उद्धमन्तीत्युद्धमाः । मधूनाम् । पूर्ववत् षष्ठी । उद्धयन्तीत्युद्धयाः पातारः । पुष्पगन्धानाम् । पूर्ववत् षष्ठी । आजिघ्रन्तीत्याजिघ्राः आघ्रातारः तैः । सर्वत्र शप्रत्ययः । 'पाघ्रा' (सू. 2360) इत्यादिना घ्राध्मोर्जिघ्रधमादेशौ । धेटो धयादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 2252. धूमस्य दोहदधूमस्य । कर्मणि षष्ठी । धयन्तीति धयान् पातॄन् । अनुपसृष्टाया अपि धेटश्शप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1138. पुष्पन्धयैः भृङ्गैः । अनेन शप्रत्यये पृषोदरादित्वान्मुमि पुष्पन्धय इति साधुः । असूर्यम्पश्यः । उग्रम्पश्यः । पाणिन्धमः । एते खश्प्रत्ययान्ताः । शित्वात् 'पाघ्रा' (सू. 2360) इत्यादिना पश्यधमादेशौ ।

२९०० । अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । (३. १. १३८)

शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातयः । साहयः ।

वा० । नौ लिम्पेर्वाच्यः । ( 1968. )

निलिम्पा देवाः ।

वा० । गवादिषु विन्देस्संज्ञायाम् । ( 1969. )

गोविन्दः । अरविन्दः ।

अस्मिन्नेव ग्रन्थे श्लो० 509. कुसुमोर्मिणाम् । कर्मणि षष्ठी । धारयन्तीति धारयैः धारकैः । पारयन्तीति पारयैः शक्तैः । हृदयानामुदेजयन्तीत्युदेजयैः उत्कम्पनैः । सर्वत्र शप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 513. तनोर्देहस्य लिम्पन्तीति लिम्पैरिव । शप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1858. विन्दन्तीति विन्दान् लब्धॄन् । परमार्थस्य विन्दान् परमार्थविन्दान् । विदेर्लाभार्थादनुपसर्गादिति शः । उदेजयन्ति उत्कम्पयन्तीत्युदेजयान् भीकरान् । शः ।

भट्टिकाव्ये—V. 21.

न तं पश्यामि यस्यासौ भवेन्नोदेजया मतेः ।
त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ 2541 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1002. माल्यानां धारयो धारयिता माल्यधारयः । शः ।

अस्मिन्नेव ग्रन्थे श्लो० 971. धारयो मृदलाबुनः । पूर्ववत् ।

२९०१ । ददातिदधात्योर्विभाषा । ( ३. १. १३९ )

शः स्यात् । अनुपसर्गादित्येव । ददः । दधः । पक्षे वक्ष्यमाणो णः । प्रदः प्रधः ।

अस्मिन्नेव ग्रन्थे श्लो० 513. मादृग्भ्यो वियोगिभ्यो दुःखस्य ददतीति ददैर्दायकैः । विकल्पात्कर्तरि शः । आमोदं सौरभं दधतीति धायैः दधानैः । शाभावपक्षे आकारान्तत्वात् 'श्याद्व्यध' (सू. 2903) इत्यादिना णप्रत्यये युगागमः । 'कर्तृकर्मणोः कृति' (सू. 623) इत्यत्र शेषत्वविवक्षायामेव षष्ठीविधानात्, इह तदविवक्षायामामोदमिति कर्मणि द्वितीया ।

२९०२ । ज्वलितिकसन्तेभ्यो णः । (३. १. १४०)

ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा । पक्षे अच् । ज्वालः ज्वलः । चालः चलः । अनुपसर्गादित्येव ।

अस्मिन्नेव ग्रन्थे श्लो० 513. ज्वलयतीति ज्वलः प्रज्वलनात्मकः । णविकल्पात्पचाद्यच् ।

रघुवंशे—XIX. 38.

सङ्गमाय निशि गूढचारिणं
चारदूतिकथितं पुरोगताः ।
वञ्चयिष्यसि कुतस्तमोवृतः
कामुकेति चकृषुस्तमङ्गनाः ॥ 2542 ॥

चरन्तीति चाराः गूढचारिण्यः । णप्रत्ययः । चाराश्च ता दूतयश्च चारदूतयः ।

२९०३ । श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च । (३. १. १४१)

श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । अवश्यायः । प्रतिश्यायः । आत्, धायः दायः । व्याधः । स्रु गतौ आङ्पूर्वस्सम्पूर्वश्च । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ।

अस्मिन्नेव ग्रन्थे श्लो० 513. आमोदं दधतीति धायैः दधानैः । 'ददातिदधात्योः' (सू. 2901) इति शाभावपक्षे आकारान्तत्वादनेन णप्रत्ययः ।

भट्टिकाव्ये—VI. 81.

अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः ।
कुर्वन्ति चित्रसंस्रावं चलत्पर्णाग्रसम्भृताः ॥ 2543 ॥

अवश्यायत इत्यवश्यायः हिमं तस्य कणाः एवास्रवन्तीत्यास्रावा निष्यन्दाः। निष्यन्दमानहिमबिन्दव इत्यर्थः। चित्तं संस्रवतीति संस्रावं द्रवं कुर्वन्ति। द्रावयन्तीत्यर्थः। सर्वत्र कर्तरि णः।

भट्टिकाव्ये—VI. 82.

अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम्।
न जीवस्यापहारो मां करोति सुखिनं यमः॥ 2544॥

अहं कदा नु अस्य दुःखस्य अवस्यतीत्यवसायः अवसायकः समापको भविष्यामि। यमोऽन्तकोऽपि जीवस्यापहरतीत्यपहारो हर्ता सन् मां सुखिनं करोति। अवापपूर्वास्यतेर्हरतेश्च णप्रत्ययः।

भट्टिकाव्ये—VI. 83.

दह्येऽहं मधुनो लेहैर्दावैस्मैर्यथा गिरिः।
नायः को नु स येन त्वां व्रताहं विगतज्वरः॥ 2545॥

मधुनो मकरन्दस्य लिहन्तीति लेहैर्मधुलिड्भिः। लिहेर्णः।

## २९०४। दुन्योरनुपसर्गे। (३. १. १४२)

णः स्यात्। दुनोतीति दावः। दवतेस्तु पचाद्यच्। दवः। नयतीति नायः।

अस्मिन्नेव ग्रन्थे श्लो॰ 2545. दुन्वन्तीति दावैः दवानलैः। नयतीति नायः उपायः। णः।

## २९०५। विभाषा ग्रहः। (३. १. १४३)

णो वा। पक्षेऽच्। जलचरे ग्राहः। ज्योतिषु ग्रहः। भवतेश्चेति काशिका। भवो देवः संसारश्च। भावाः पदार्थाः।

अस्मिन्नेव ग्रन्थे श्लो॰ 1719 ग्रहेणाङ्गारकादिना। ग्राहेण नक्रेण। व्यवस्थितविभाषया जलचरे कर्तरि णः। ज्योतिषि पचाद्यच्।

अस्मिन्नेव ग्रन्थे श्लो॰ 2276. गृह्णन्तीति ग्राहाः जलचराः। ग्रहेर्जलचरे कर्तरि णप्रत्ययः।

२९०६ । गेहे कः । (३. १. १४४)

गेहे कर्तरि ग्रहेः कः स्यात् । गृह्णाति धान्यादिकमिति गृहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1719. वनान्तान्वनप्रदेशान् स्मरस्य गृह्णन्तीति गृहान् । अर्धर्चादिपाठात्पुंलिङ्गता ।

२९०७ । शिल्पिनि ष्वुन् । (३. १. १४५)

क्रियाकौशलं शिल्पम् । तद्वत्कर्तरि ष्वुन् स्यात् ।

वा० । नृतिखनिरञ्जिभ्य एव । (4197.)

नर्तकः नर्तकी । खनकः खनकी ।

वा० । असि अके अने च रञ्जेर्नलोपो वाच्यः । (4067.)

रजकः रजकी । भाष्यमते क्वुन् । टाप् । रजिका । पुंयोगे रजकी ।

भट्टिकाव्ये—VI. 85.

वाताहतचलच्छाखा **नर्तका** इव शाखिनः ।
दुस्सहा हा परिक्षिप्ताः कणद्भिरलिगाथकैः ॥ 2546 ॥

नृत्यन्तीति **नर्तका** लासका इव । ष्वुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 122. सोऽग्निवर्णः अभिनयातिलङ्घिनीर्नर्तकीः । ष्वुन् । 'षिद्गौरादिभ्यः' (सू. 498) इति ङीष् । 'नर्तकीलासिके समे' I. vi. 9. इत्यमरः ।

२९०८ । गस्थकन् । ( ३. १. १४६ )

गायतेस्थकन् स्यात् शिल्पिनि कर्तरि । गाथकः ।

अस्मिन्नेव ग्रन्थे श्लो० 2546. अलिभिरेव **गाथकैः** गायकैः । गायतेश्शिल्पिनि थकन् ।

२९०९ । ण्युट् च । ( ३. १. १४७ )

गायनः । टित्वाद्गायनी ।

अस्मिन्नेव ग्रन्थे श्लो० 2401. गायनान् गायकान् । गायतेश्शिल्पिनि ण्युट् ।

## २९१० । हश्च व्रीहिकालयोः । (३. १. १४८)

हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि । जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षः । जिहीते प्राप्नोतीति वा ।

भट्टिकाव्ये—VI. 86.

> एकहायनसारङ्गगती रघुकुलोत्तमौ ।
> लवकौ शत्रुशक्तीनामृश्यमूकमगच्छताम् ॥ 2547 ॥

जिहीते भावानिति हायनः संवत्सरः । जहातेर्जिहीतेश्च तन्त्रेणोपादानात् यथासंख्यं व्रीहिकालयोर्ण्युट् ।

## २९११ । प्रुसृल्वः समभिहारे वुन् । (३. १. १४९)

समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः ।

अस्मिन्नेव ग्रन्थे श्लो० 2547. शत्रुशक्तीनां लवकौ साधुच्छेदनौ । लुनातेः समभिहारे लक्षणया साधुकारित्वे वुन् ।

## २९१२ । आशिषि च । (३. १. १५०)

आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात् कर्तरि । जीवतात् जीवकः । नन्दतात् नन्दकः ।

भट्टिकाव्ये—VI. 87.

> तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः ।
> बन्धुना विगृहीतोऽहं भूयासं जीवकः कथम् ॥ 2548 ॥

सुग्रीवः तौ राघवौ वालिप्रणिधी मत्वा अहं कथं जीवको जीव्यसमीत्यर्थः । आशीरर्थे वुन् । भूयासमिति तस्यैव स्फुटार्थमनुवादः ।

## २९१३ । कर्मण्यण् । (३. २. १)

कर्मण्युपपदे धातोरण्प्रत्ययः स्यात् । उपपदसमासः । कुम्भं करोतीति कुम्भकारः ।

वा० । शीलिकामिभक्ष्याचरिभ्यो णः । (1980)

मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा ।

वा० । ईक्षिक्षमिभ्यां च । (1981.)

सुखप्रतीक्षा । बहुक्षामा ।

अस्मिन्नेव ग्रन्थे श्लो० 805. शत्रून् लुनीत इति शत्रुलावौ शत्रुघातिनौ । कर्मण्यण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1669. सुताननुबध्नाति सन्तनोतीति सुतानुबन्धं कर्म । पूर्ववदण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1355. बन्धुता भरतं प्रतीक्षत इति भरतप्रतीक्षा । णप्रत्ययः । अतस्त्रियां टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 61. शालीन् गोपायन्ति रक्षन्तीति शालिगोप्यः सस्यपालिकाः स्त्रियः । कर्मण्यण् । 'टिड्ढाणञ्' (सू. 470) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2465. गोप्या शालिगोप्या । गौरादित्वान्ङीष् । अनुपपदत्वान्नाण् ।

अस्मिन्नेव ग्रन्थे श्लो० 63. कपोतान्पक्षिणः पालयन्तीति कपोतपाल्यः । कर्मण्यणि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 114. हव्यं वहतीति हव्यवाहः । कर्मण्यण् ।

माघे—XX. 70.

ज्वलतः शमनाय चित्रभानोः
प्रलयाप्लावमिवाभिदर्शयन्तः ।
ववृषुर्वृषनादिनो नदीनां
प्रतटारोपितवारि वारिवाहाः ॥ 2549 ॥

वारि वहन्तीति वारिवाहा मेघाः । कर्मण्यण् ।

अस्मिन्नेव ग्रन्थे श्लो० 92. प्रतिहारं रक्षतीति प्रतिहाररक्षी द्वारपालिका । कर्मण्यणि ङीप् ।

माघे—VI. 21.

अरुणिताखिलशैलवना मुहु-
  र्विदधती पथिकान् परितापिनः ।
विकचकिंशुकसंहतिरुच्चकै-
  रुदवहद्धव्यवहव्यवहश्रियम् ॥ 2550 ॥

हव्यवहः । पचाद्यच् । षष्ठीसमासः ।

## २९१४ । ह्वावामश्च । (३. २. २)

एभ्योऽण् स्यात् । कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ।

अस्मिन्नेव ग्रन्थे श्लो० 805. व्योम मिमीत इति व्योममायः । माङ कर्मोपपदादण् ।

## २९१५ । आतोऽनुपसर्गे कः । (३. २. ३)

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यान्नाण् । गोदः । पार्ष्णित्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 806. शर्म सुखं कर्म ददातीति शर्मदं हितकारिणम् । अनेन कः । द्वाभ्यां पिबतीति द्विपः । पिबतेरादन्तत्वेऽपि अनुपसर्गोपपदत्वेऽपि कर्मोपपदत्वाभावात् 'सुपि स्थः' (सू. 2916) इत्यत्र सुपीति योगविभागात् कः ।

अस्मिन्नेव ग्रन्थे श्लो० 1092. मधु पिबतीति मधुपः । अमृतं पिबतीत्यमृतपः । आदन्तात्पिबतेरनुपसर्गकर्मोपपदात्कः । स्त्रियां मधुपा अमृतपेति टाप् ।

किरातार्जुनीये—IV. 13.

गतान् पशूनां सहजन्मबन्धुतां
  गृहाश्रयं प्रेम वनेषु बिभ्रतः ।
ददर्श गोपानुपधेनु पाण्डवः
  कृतानुकारानिव गोभिरार्जवे ॥ 2551 ॥

गाः पान्तीति गोपाः गोपालकाः । अनेन कः । स्त्रियां टाप् । पुंयोगे तु गोप्य इति ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 695. नॄन्पातीति नृपः । पूर्ववत्कः ।

अस्मिन्नेव ग्रन्थे श्लो० 169. गाः पान्तीति गोपाः; तेषां भार्या गोप्यः । अनेन कः । 'पुंयोगादाख्यायाम्' (सू. 504) इति ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 77. अङ्गुलीस्त्रायत इत्यङ्गुलित्रम् । अनेन कः ।

अस्मिन्नेव ग्रन्थे श्लो० 832. किं किं दधातीति किष्किन्धा गुहा । अनेन कः । स्त्रीत्वाट्टाप् । पारस्करादित्वात्सुडादिनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1214. भयदम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1433. अब्दो मेघः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2495. येया यातव्याः । अयेया अयातव्याः । येयाश्चायेयाश्च येयायेयास्तेषामाये लाभे याति प्राप्नोतीति येयायेयाययः । अयः शुभावहदैवं यातीत्यययः । येयायेयाययश्चासावययश्चेति येयायेयाययायय: । याधातोरुभयत्राप्यनेन कः ।

किरातार्जुनीये—XI. 45.

> क्षत्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः ।
> स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥ 2552 ॥

दायं पैतृकं धनमाददत इति दायादा ज्ञातयः । 'स्वामीश्वर' (सू. 636) इत्यादिसूत्रेण सोपसर्गादपि दायादेति कप्रत्ययान्तो निपातनात् साधुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1875. स्वां विटं पिबति पाति इति वा विटपा सा ।

## २९१६ । सुपि स्थः । (३. २. ४)

सुपीति योगो विभज्यते । सुप्युपपदे आदन्तात्कः स्यात् । द्वाभ्यां पिबतीति द्विपः । समस्थः । विषमस्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 806. विषमे तिष्ठतीति विषमस्थः आपन्नः । अनेन कप्रत्ययः । द्विपः । द्वाभ्यां पिबतीत्यर्थे सुपीति योगविभागात्कः ।

अस्मिन्नेव ग्रन्थे श्लो० 1052. जनकाश्रमे तिष्ठतीति जनकाश्रमस्थम् । अनेन कः ।

रघुवंशे—VI. 12.

तां प्रत्यभिव्यक्तमनोरथानां
महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां
शृङ्गारचेष्टा विविधा बभूवुः ॥ 2553. ॥

अस्मिन्नेव ग्रन्थे श्लो० 1704. नद्यां स्नान्तीति नदीष्णान् नदीतरणे कुशलान् । अत्र सुपीति योगविभागात्कः । 'निनदीभ्यां स्नातेः कौशले' (सू. 3082) इति षत्वम् ।

भट्टिकाव्ये—II. 14.

वियोगदुःखानुभवानभिज्ञैः
काले नृपांशं विहितं ददद्भिः ।
आहार्यशोभारहितैरमायै-
रैक्षिष्ट पुंभिः प्रचितान्स गोष्ठान् ॥ 2554 ॥

गावस्तिष्ठन्त्यत्रेति गोष्ठाः गोनिवासव्रजाः । अनेन कः । 'अम्बाम्ब' (सू. 2918) इति षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 892. भूमौ तिष्ठतीति भूमिष्ठः । अनेन कः । अम्बाम्बेति षत्वम् ।

किरातार्जुनीये—XI. 17.

भयङ्करः प्राणभृतां मृत्योर्भुज इवापरः ।
असिस्तव तपःस्थस्य न समर्थयते शमम् ॥ 2555 ॥

तपसि तिष्ठतीति तपःस्थः तपश्चरन्नित्यर्थः । अनेन कः ।

चम्पूभारते—V. 24.

इत्युक्त एष परिघं धरणौ निधाय
कक्षं दृढं परिधाय भुजार्गलाभ्याम् ।

तं कष्टमेव न शशाक स तु प्लवङ्गो
बालस्थया वनतयास्य मनश्चकर्ष ॥ 2556 ॥

बाले तिष्ठतीति बालस्थया । अनेन कः ।

२९१७ । प्रष्ठोऽग्रगामिनि । (८. ३. ९२)

प्रतिष्ठत इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 952. प्रतिष्ठतेऽग्र इति प्रष्ठमग्रगामिनम् । 'आतश्चोपसर्गे' (सू. 2898) इति कर्तरि कः । अनेन निपातनात्षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1229. मारुतिप्रष्ठाः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1119 सर्वनारीगुणैः प्रष्ठाम् ।

रघुवंशे—XV. 10.

आदिष्टवर्त्मा मुनिभिस्स गच्छंस्तपतां वरः ।
विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान् ॥ 2557 ॥

रथैः प्रष्ठैः रथप्रष्ठैः । पूर्ववत् ।

२९१८ । अम्बाम्बगोभूमिसव्यपद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । (८. ३. ९७)

एभ्यः स्थस्य सस्य षः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2554. गावस्तिष्ठन्त्यत्रेति गोष्ठा गोनिवासत्रजाः । 'सुपि स्थः' (सू. 2916) इति कप्रत्ययः । अनेन षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1382. गावस्तिष्ठन्त्येष्विति गोष्ठानि गोस्थानानि । कप्रत्ययः । षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 892. भूमौ तिष्ठतीति भूमिष्ठः । कप्रत्ययः । अनेन षत्वम् ।

भट्टिकाव्ये—XVII. 97.

भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्रं सशस्त्रं मघवाज्ञया ॥ 2558 ॥

भूमिष्ठस्य । पूर्ववत् ।

माघे—XV. 17.

तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथ वा भृशमप्रशस्तमपि मङ्गलं जनाः ॥ 2559 ॥

अपष्ठु असत्यम् । 'अपदुः' (उ. सू. 25) इत्यौणादिकः कुप्रत्ययः । अनेन षत्वम् *

चम्पूरामायणे—V. 20.

ग.—अयि सकलसमाचारप्रतिष्ठानिष्ठः परमेष्ठी ननु कुलगुरुर्भवतः परकलत्ररतिरपत्रपां जनयति हि गोत्रजातानाम् ॥ 2560 ॥

परमे स्थाने तिष्ठतीति परमेष्ठी पितामहः ।

अस्मिन्नेव ग्रन्थे श्लो० 1119. दिवि तिष्ठतीति दिविष्ठाम् । 'सुपि स्थः' (सू. 2916) इति कः । अनेन षत्वम् । दिवीति निर्देशादलुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 2157. दिविष्ठा पूर्ववत् ।

**२९१९ । तुन्दशोकयोः परिमृजापनुदोः । (३. २. ५)**

तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् ।

वा० । आलस्यसुखाहरणयोरिति वक्तव्यम् । (1988.)

तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । अलसादन्यत्र तुन्दपरिमार्ज एव । यश्च संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः ।

---

* इदं चिन्त्यम् । कप्रत्ययान्तस्य तिष्ठतेरेवानेन षत्वविधानात् । अपष्ठु इत्यत्र तु तिष्ठतेः कुप्रत्ययान्तत्वात् 'सुषामादिषु च' (सू. 1022) इति षत्वम् ।

वा० । कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् । (1989.)

मूलानि विभुजति मूलविभुजो रथः । मूलविभुजादिः— २. ८. आकृतिगणोऽयम् ।

अनर्घराघवे—VII. 110.

इह युवतिवदनकान्तिभिराप्यायिततुन्दपरिमृजश्शेते ।
भुक्तापभुक्तहिमरुचिमरीचिरन्तःपुरचकोरः ॥ 2561 ॥

तुन्दपरिमृजोऽलसः । कः ।

अस्मिन्नेव ग्रन्थे श्लो० 806. शोकमपनुदतीति शोकापनुदम् । कः ।

भट्टिकाव्ये—III. 15.

पौरा निवर्तध्वमिति न्यगादी-
चातस्य शोकापनुदा भवेत ।
मा दर्शतान्यं भरतं च मत्तो
निवर्तयेत्याह रथं स दूतम् ॥ 2562 ॥

शोकापनुदाः । पूर्ववत्कः ।

अस्मिन्नेव ग्रन्थे श्लो० 696. शोकमपनुदतीति शोकापनुदेन । कः ।

अस्मिन्नेव ग्रन्थे श्लो० 236. महीं धरन्तीति महीध्राः । मूलविभुजादित्वात्कः ।

२९२० । प्रे दाज्ञः । (३. २. ६)

दारूपाज्जानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः ।

भट्टिकाव्ये—VI. 90.

विश्वासप्रदवेषोऽसौ पथिप्रज्ञस्समाहितः ।
चित्तसंख्यो जिगीषूणामुत्पपात नभःस्थलम् ॥ 2563 ॥

विश्वासं प्रददातीति विश्वासप्रदो वेषो यस्य सः । पन्थानं प्रजानातीति पथिप्रज्ञः । पथि कुशल इत्यर्थः । ददातेर्जानातेश्च प्रोपसृष्टात्कर्मोपपदात्कः ।

अस्मिन्नेव ग्रन्थे श्लो० 2363. भयप्रदा भीषणा । कः ।

२९२१ । समि ख्यः । (३. २. ७)

गोसङ्ख्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 2563. चित्तानि सञ्चष्टे, सङ्ख्यातीति वा चित्तसंख्यः चित्तज्ञः । संपूर्वात्ख्यातेः चक्षिङादेशाच्च कर्मोपपदात् कः ।

२९२२ । गापोष्टक् । (३. २. ८)

वा० । पिबतेस्सुराशीध्वोरिति वाच्यम् । (1990.)

अनुपसृष्टाभ्यामाभ्यां टक् स्यात् कर्मण्युपपदे । सामगः सामगी । उपसर्गे तु सामसङ्गायः । सुरापी । शीधुपी । अन्यत्र क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा । 'आतोऽनुपसर्गे कः' (सू. 2915) इति कः । टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 807. सुरां पिबन्तीति **सुरापा** मद्यपाः । सामानि गायन्तीति **सामगाः** । टक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1246. **सुरापिणः** सुरापैर्युक्ताः । सुरां पिबन्तीति सुरापाः । टक् । ते येषां सन्तीति मत्वर्थीयः ।

अस्मिन्नेव ग्रन्थे श्लो० 887. **सामगम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 1875. वयममुष्य विटपस्य दानयोग्या न खलु । किन्तु या रहस्त्वां विटं पिबति च पाति च । तस्यै । विटं पिबतीति विटपा । विटं पातीति विटपा । उभयत्रापि 'आतोऽनुपसर्गे कः' (सू. 2915) इति कः । अत एव टाप् । सुरापी शीधुपीत्यत्र तु टक्प्रत्ययः । 'टिड्ढाणञ्' (सू. 470) इत्यादिना ङीप् । अमुं विटान् पातीति **विटपं** पल्लवं ददस्व ।

अस्मिन्नेव ग्रन्थे श्लो० 1092. मधु पिबतीति **मधुपः** । अमृतं पिबतीत्यमृतपः । उभयत्रापि आतोऽनुपसर्गे कः (सू. 2915) इति कः ।

२९२३ । हरतेरनुद्यमनेऽच् । (३. २. ९)

अंशहरः । अनुद्यमने किम् ? भारहारः ।

वा० । शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम् । ( 1992. )

शक्तिग्रहः । लाङ्गलग्रहः ।

अस्मिन्नेव ग्रन्थे श्लो० 808. मनो हरतीति मनोहरम् । अनेनाच् ।

माघे—VII. 52.

अधिरजनि जगाम धाम तस्याः
प्रियतमयेति रुषा स्रजावनद्धः ।
पदमपि चलितुं युवा न सेहे
किमिव न शक्तिहरं ससाध्वसानाम् ॥ 2564 ॥

शक्तिं हरतीति शक्तिहरम् । पूर्ववदच् ।

माघे—VI. 65.

शिशिरमासमपास्य गुणोऽस्य नः
क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे
घनमतो नमतोऽनुमतान्प्रियाः ॥ 2565 ॥

शीतं हरतीति शीतहरः । अच् ।

माघे—XVI. 38.

निशमय्य तदूर्जितं शिनेर्वचनं नप्तुरनातुरेनसाम् ।
पुनरुज्झितसाध्वसं द्विषामभिधत्ते स्म वचो वचोहरः ॥ 2566 ॥

वचो हरतीति वचोहरः दूतः ।

अस्मिन्नेव ग्रन्थे श्लो० 197. दुष्प्रवृत्तिर्वार्ता तां हरति प्रापयतीति दुष्प्रवृत्तिहरा । अच् ।

अस्मिन्नेव ग्रन्थे श्लो० 594. पश्यतोहरः । पश्यतः पश्यन्तमनादृत्य 'षष्ठी चानादरे' (सू. 635) इति षष्ठी । हरतीति हरः पचाद्यच् । समासे 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' (वा. 3897. सू. 979) इत्यलुक् ।

## २९२४ । वयसि च । (३. २. १०)

कवचहरः कुमारः ।

अस्मिन्नेव ग्रन्थे श्लो० 808. वर्म हरत इति वर्महरौ कवचधारणवयस्कौ । अनेनाच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1704. योधान् हरन्तीति योधहरैः । योधवयोग्यवयस्कैरित्यर्थः । अच् ।

रघुवंशे—VIII. 93.

सम्यग्विनीतमथ वर्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ 2567 ॥

वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः । अनेनाच् ।

## २९२५ । आङि ताच्छील्ये । (३. २. ११)

पुष्पाण्याहरति तच्छीलः पुष्पाहरः ।

अस्मिन्नेव ग्रन्थे श्लो० 808. सुखमाहर्तुं शीलमस्यास्तीति सुखाहरः आनन्दकरः । अच् ।

रघुवंशे—I. 49.

वनान्तरादुपावृत्तैस्समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ 2568 ॥

समिधश्च कुशाश्च फलानि च आहर्तुं शीलमेषामिति समित्कुशफलाहरैः । हरतेराङ्पूर्वादच् ।

## २९२६ । अर्हः । (३. २. १२)

अर्हतेरच् स्यात्कर्मण्युपपदे । पूजार्हा ब्राह्मणी ।

अस्मिन्नेव ग्रन्थे श्लो० 808. भिक्षामर्हतीति भिक्षार्हः । अर्हतेः कर्मोपपदादच् ।

२९२७ । स्तम्बकर्णयो रमिजपोः । ( ३. २. १३ )

वा० । हस्तिसूचकयोरिति वक्तव्यम् । ( 1994.)

स्तम्बे रमते स्तम्बेरमो हस्ती । 'तत्पुरुषे कृति' (सू. 972 ) इति 'हलदन्तात्' (सू. 966) इति वा अलुक् । कर्णेजपः सूचकः ।

अस्मिन्नेव ग्रन्थे श्लो० 809. स्तम्बे रमेते स्तम्बेरमौ हस्तिनौ । हस्तिन्यच् ।

माघे—V. 34.

पन्थानमाशु विजहीहि पुरः स्तनौ ते
पश्यन्प्रतिद्विरदकुम्भविशङ्किचेताः ।
स्तम्बेरमः परिणिनंसुरसावुपैति
षिङ्गैरगद्यत ससम्भ्रममेव काचित् ॥ 2569 ॥

स्तम्बे तृणे रमत इति स्तम्बेरमः । अनेनाच् । अलुक् ।

रघुवंशे—V. 72.

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ 2570 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1261. कर्णे जपन्त्युपांशु सूचयन्तीति कर्णेजपाः पिशुनाः । अच् ।

अनर्घराघवे—VI. 66.

दिक्पालद्विपदर्पदानलहरीसौरभ्यगर्भानिलैः
पक्षैरेव समस्तराक्षसकथाकल्पान्तकर्णेजपाः ।

दीयन्ते रघुपुङ्गवेन कतिचित्पौलस्त्यमौलिष्वमी
पौलोमीनयनाम्बुसीकरकणावग्राहिणो मार्गणाः ॥ 2571 ॥

कर्णेजपाः ।

२९२८ । शमिधातोस्संज्ञायाम् । (३. २. १४)

शंभवः । शंवदः । शङ्करा नाम परिव्राजिका ।

अस्मिन्नेव ग्रन्थे श्लो० 809. शङ्करेणेश्वरेण । अच् ।

२९२९ । अधिकरणे शेतेः । (३. २. १५)

खे शेते खशयः ।

वा० । पार्श्वादिषूपसंख्यानम् । (1996.)

पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः । पार्श्वादिः—३. ९.

वा० । उत्तानादिषु कर्तृषु । (1998.)

उत्तानश्शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य सः । अधोमुखः शेत इत्यर्थः ।

वा० । गिरौ डश्छन्दसि । (1999.)

गिरौ शेते गिरिशः । कथं तर्हि ‘ गिरिशमुपचचार प्रत्यहं सा सुकेशी ’ इति । गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः ।

अस्मिन्नेव ग्रन्थे श्लो० 810. गुहासु शेरत इति गुहाशयैः । अच् ।

अस्मिन्नेव ग्रन्थे श्लो० 154. मनसि शेत इति मनसिशयः कामः । अनेनाच् । ‘ हलदन्तात् ’ (सू. 966) इत्यलुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1116. वृक्षे शेरत इति वृक्षेशयाः । अच् । ‘ शयवास ’ (सू. 976) इत्यलुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1743. गिरिशः । लोमादित्वाच्छः ।

२९३० । चरेष्टः । (३. २. १६)

अधिकरण उपपदे । कुरुचरः कुरुचरी ।

अस्मिन्नेव ग्रन्थे श्लो० 810. निशासु चरन्तीति निशाचराः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 706. खे चरन्तीति खेचराः खगाः तेषूत्तमम् । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 852. रात्रौ चरन्तीति रात्रिञ्चराः राक्षसाः । चरेष्टः । 'रात्रेः कृति विभाषा' (सू. 1008) इति पक्षे मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 51. रात्रिचरी राक्षसी । चरेष्टः । मुमागमो न । टित्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 862. निशाचराः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1125. निशिचराः । अलुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1777. चमूचराः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 74. निशाचर ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. वने चरन्तीति वनेचराः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1797. नक्तञ्चरी राक्षसी ।

२९३१ । भिक्षासेनादायेषु च । (३. २. १७)

भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । कथं 'प्रेक्ष्य स्थितां सहचरीम्' इति । पचादिषु चरटिति टित्करणान्ङीप् । चकारात्सहोपपदात् चरेष्ट इति केचित् ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. वनेचराग्रयणाम् । कर्मणि षष्ठी । आदाय गृहीत्वा चरति भक्षयतीत्यादायचरः । अनेन टः ।

अस्मिन्नेव ग्रन्थे श्लो० 50. चरतीति चरी । पचाद्यच् । चरडिति टित्करणान्ङीप् । तेन सहशब्दस्य सुप्सुपेति समासः । सह चरतीति सहचरी । अत्र चकाराट्टप्रत्यय इति केचित् । तत्रापि टित्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 396. सुमित्राया अपत्यं पुमान्सौमित्रिः लक्ष्मणः । 'बाह्वादिभ्यश्च' (सू. 1096.) इतीञ् । स च सीता च सौमित्रिसीतम् । सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वचनात् एकवद्भावः । अन्यथा अनुचरशब्दात् पचादिषु चरडिति टित्करणात् स्त्रियां ङीपि 'नद्यृतश्च' (सू. 833) इति कप्प्रसङ्गात् । समासान्तानित्यत्वेऽपि पुंवद्भावानुपपत्तेरिति । तदनुचरं यस्य तस्य रामस्य ।

## २९३२ । पुरोऽग्रतोऽग्रेषु सर्तेः । ( ३. २. १८ )

पुरस्सरः । अग्रतस्सरः । अग्रमग्रेण अग्रे वा सरतीत्यग्रसरः । सूत्रे अग्र इत्येदन्तत्वमपि निपात्यते । कथं तर्हि 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति । बाहुलकादिति हरदत्तः ।

कुमारसंभवे—VI. 49.

गगनादवतीर्णा सा यथावृद्धपुरस्सरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ 2572 ॥

यथावृद्धं वृद्धानुक्रमेण स्थिताः । पुरस्सरा अग्रेसराः यस्यास्सा तथोक्ता । अनुपसर्जनाधिकारान्न ङीप् ।

माघे—XVII. 43.

यथा यथा पटहरवस्समीपता-
मुपागमत्स हरिवराग्रतस्सरः ।
तथा तथा हृषितवपुर्मुदाकुला
द्विषां चमूरजनि जनीव चेतसा ॥ 2573 ॥

अग्रतस्सरतीति अग्रतस्सरः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. अग्रे सरतीत्यग्रेसरः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1779. अग्रेसरः । पूर्ववत् ।

रघुवंशे—VI. 33.

> अस्य प्रयाणेषु समग्रशक्ते-
> रग्रेसरैर्वाजिभिरुत्थितानि ।
> कुर्वन्ति सामन्तशिखामणीनां
> प्रभाप्ररोहास्तमयं रजांसि ॥ 2574 ॥

अग्रेसरैः ।

अस्मिन्नेव ग्रन्थे श्लो० 2365. अग्रसरः ।

## २९३३ । पूर्वे कर्तरि । (३. २. १९)

कर्तृवाचिनि पूर्वशब्द उपपदे सेर्तष्टः स्यात् । पूर्वस्सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. पूर्वस्सरतीति पूर्वसरः अग्रयायी । टप्रत्ययः ।

किरातार्जुनीये—XVI. 33.

> त्विषां ततिः पाटलितांबुवाहा
> सा सर्वतः पूर्वसरीव सन्ध्या ।
> निनाय तेषां द्रुतमुल्लसन्ती
> विनिद्रतां लोचनपङ्कजानि ॥ 2575 ॥

पूर्वा सरतीति पूर्वसरी । टप्रत्यये ङीप् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वा. 1376, सू. 728) इति पूर्वशब्दस्य पुंवद्भावः ।

## २९३४ । कृञो हेतुताच्छील्यानुलोम्येषु । (३. २. २०)

एषु द्योत्येषु करोतेष्टः स्यात् । यशस्करी विद्या । यशोहेतुरित्यर्थः । श्राद्धकरः । श्राद्धं करोति ताच्छील्येनेति श्राद्धकरः । वचनकरः आज्ञाकरः । अनुकूलवर्तीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 279. यशः करोतीति यशस्करः यशोहेतुः । दयां करोति ताच्छील्येनेति दयाकरम् । पितुर्वाक्यकरमाज्ञाकरम् अनुकूलवर्तिनम् । क्रमाद्धेत्वाद्यर्थेषु टः ।

भट्टिकाव्ये—V. 50.

योगिक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ 2576 ॥

योगक्षेमौ करोतीति योगक्षेमकरम् । हेतौ टः । ग्रहणवता तदन्तविधेरभावात् 'क्षेमप्रियमद्रेऽण् च' (सू. 2961) इत्यण्खचौ न भवतः । सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 53. निश्रेयसं कुर्वन्तीति निश्रेयसकरीः । निःश्रेयसहेतूनित्यर्थः । हेत्वर्थे टः । टित्त्वान्ङीप् । शमिधातोः संज्ञायां ( सू. 2928 ) इत्यचि शङ्करा । शङ्करा नाम परिव्राजिका । न ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 106. कामार्थयशांसि कुर्वन्ति ताच्छील्येनेति कामार्थयशस्करीषु । ताछील्ये टः । ङीप् ।

भट्टिकाव्ये—V. 29.

अतुल्यमहसा सार्धं रामेण मम विग्रहः ।
त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ 2577 ॥

त्रपां कर्तुं शीलमस्य त्रपाकरः । ताच्छीलिकष्टः ।

भट्टिकाव्ये—V. 78.

निहन्ता वैरकाराणां सतां बहुकरस्सदा ।
पारश्वथिकरामस्य शक्तेरन्तकरो रणे ॥ 2578 ॥

सतां बहुकरो बहूपकर्ता । ताच्छील्ये टः ।

माघे—XVI. 22.

उपकारपरः स्वभावतस्सततं सर्वजनस्य सज्जनः ।
असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ 2579 ॥

गुरुहृद्रोगकरी । ताच्छील्ये टः । ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2319. किमपि करोत्यानुकूल्येनेति किङ्करः दासः। आनुलोम्ये ट इति केचित्। 'दिवाविभा' (सू. 2935) इति ट इति केचित्।

भट्टिकाव्ये—XXII. 35.

काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेननरेन्द्रपालितायाम्।
कीर्तिरितो भवतान्नृपस्य तस्य
प्रेमकरः क्षितिपो यतः प्रजानाम् ॥ 2580 ॥

प्रजानां प्रेमकरः प्रेमानुकूलः। आनुलोम्ये टः।

भट्टिकाव्ये—XX. 6.

न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः।
एधि कार्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ 2581 ॥

कार्यकरः कार्यकरणे अनुकूलः। आनुलोम्ये टः।

२९३५। दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु। (३. २. २१)

एषु कृञष्टः स्यादहेत्वादावपि। दिवाकरः। विभाकरः। निशाकरः। भास्करः। बहुकरः। बहुशब्दस्य वैपुल्यार्थे सङ्ख्यापेक्षया पृथग्ग्रहणम्। लिपिलिबिशब्दौ पर्यायौ। संख्या, एककरः। द्विकरः। कस्कादित्वादहस्करः। 'नित्यं समासेऽनुत्तरपदस्थस्य' (सू. 159) इति षत्वम्। धनुष्करः। अरुष्करः।

वा०। किंयत्तद्बहुषु कृञोऽज्विधानम्। (2002.)

किङ्करा। यत्करा। तत्करा। हेत्वादौ टं बाधित्वा परत्वादच्। पुंयोगे ङीष्। किङ्करी।

भट्टिकाव्ये—V. 99.

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः।
तव राक्षस रामस्य नेयः कर्मकरोपमः ॥ 2582 ॥

अन्तं करोतीत्यन्तकरः विनाशयिता । दिवाकरस्सूर्यः । अन्तकरदिवाकर-शब्दौ अनेन टप्रत्ययान्तौ ।

भट्टिकाव्ये—V. 100.

सतामरुष्करं पक्षी वैरकारं नराशिनम् ।
हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् ॥ 2583 ॥

सतामरुष्करं धर्मे स्थितानां पीडाकरम् । अरुश्शब्दः पीडोपलक्षणपरः । अनेन टः ।

कुमारसंभवे—IV. 13.

अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥ 2584 ॥

निशाकरः । टः ।

रघुवंशे—X. 74.

कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ 2585 ॥

प्रभाकरः सूर्यः ।

माघे—XX. 33.

सलिलार्द्रवराहदेहनीलो विदधद्भास्करमर्थशून्यसंज्ञम् ।
प्रचलायतलोचनारविन्दं विदधे तद्बलमन्धमन्धकारः ॥ 2586 ॥

भासं प्रकाशं करोतीति भास्करः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1431. भास्करः ।

अस्मिन्नेव ग्रन्थे श्लो० 1160. अहः करोतीत्यहस्करः सूर्यः । टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1253. अहस्करः ।

अस्मिन्नेव ग्रन्थे श्लो० 2578. सतां बहुकार्यं करोतीति बहुकरः। अनेन टः। स्त्रीविवक्षायान्तु 'कियत्तद्बहुषु' इति करोतेरच्। अन्तकरो विनाशयिता। अन्तं करोतीत्यन्तकरः। टः।

अस्मिन्नेव ग्रन्थे श्लो० 2319. किमपि करोतीति किङ्करो दासः। अनेन टः। स्त्रीविवक्षायां पूर्ववदच्। बहुकरः : ताच्छील्ये टः। किङ्करः। आनुलोम्ये टः इति मल्लिनाथः।

अस्मिन्नेव ग्रन्थे श्लो० 1611. लिपिकरी। टः। टित्वान्ङीप्।

अस्मिन्नेव ग्रन्थे श्लो० 163. अविद्यावैदेहीशतलिपिकरीणां मम धियाम्। टः। ङीप्।

## २९३६। कर्मणि भृतौ। (३. २. २२)

कर्मशब्द उपपदे करोतेष्टः स्याद्भृतौ। कर्मकरो भृतकः। कर्मकारोऽन्यः।

अस्मिन्नेव ग्रन्थे श्लो० 2582. कर्म करोतीति कर्मकरो भृत्यः।

## २९३७। न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु। (३. २. २३)

टप्रतिषेधात्कर्मण्यण्।

अस्मिन्नेव ग्रन्थे श्लो० 2583. वैरकारं सीताहरणेन वैरायमाणम्। शब्दकारं सिंहनादकरम्। कलहकारः युद्धकरः। सर्वत्राण्।

अस्मिन्नेव ग्रन्थे श्लो० 2578. वैरकाराणां वैरयितॄणाम्। टप्रतिषेधात्कर्मण्यण्।

अस्मिन्नेव ग्रन्थे श्लो० 2319. सुरतेषु ते तव चाटुकारः प्रियवादी। अण्।

नैषधे—VI. 82.

पदं शतेनापि मखैर्यदिन्द्रस्तस्मै स ते याचनचाटुकारः।
कुरु प्रसादं तदलङ्कुरुष्व स्वीकारकृद्भ्रूनटनक्रमेण॥ 2587॥

ते तव याचनेन प्रार्थनया चाटुकारः प्रियंवदः। टप्रतिषेधात्कर्मण्यण्।

अस्मिन्नेव ग्रन्थे श्लो० 69. चाटुकाराः कराः।

कुमारसंभवे—VIII. 25.

तस्य जातु मलयस्थलीरतेर्धूतचन्दनलतः प्रियाक्लमम् ।
आचचाम सलवङ्गकेसरश्चाटुकार इव दक्षिणानिलः ॥ 2588 ॥

दक्षिणानिलश्चाटुकारश्चाटुप्रयोगः । प्रियवाद इति यावत् । भावे घञ् । पार्वतीश्रममाचचाम जहार । यथा लोके महानपि श्रम एकेन प्रियवादेनापनीयते तद्वद्दक्षिणमारुतेनापि तस्यास्सकलोऽपि सुरतश्रमो हृत इत्यर्थः ।

रघुवंशे—VI. 27.

जगाद चैनामयमङ्गनाथः
सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारै-
रैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ 2589 ॥

सूत्रकारैः । कर्मण्यण् ।

२९३८ । स्तम्बशकृतोरिन् । (३. २. २४)

वा० । व्रीहिवत्सयोरिति वक्तव्यम् । (2003.)

स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तम्बकारः । शकृत्कारः ।

२९३९ । हरतेर्दृतिनाथयोः पशौ । (३. २. २५)

दृतिनाथयोरुपपदयोर्हृञ इन्स्यात् पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहारः । नाथहारः । 'हरतेरनुद्यमनेऽच्' (सू. 2923) शक्तिहरः । शीतहरः । मनोहरः ।

२९४० । फलेग्रहिरात्मम्भरिश्च । (३. २. २६)

फलानि गृह्णातीति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीत्यात्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः ।

'स्युरवन्ध्यः फलेग्रहिः' II. iv. 6. इति, ' उभावात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ' III. i. 21. इति चामरः ।

चम्पूभारते—I. 52.

पुष्पात्प्रागेव सुषुवे पुत्रमेषेति वीरुधः ।
फलेग्रहय एवासन् प्रसूनात्प्राक् पृथावने ॥ 2590 ॥

वीरुधः **फलेग्रहयः** फलधारिण्यः ।

चम्पूभारते—X. 32.

महारथ त्वं मम वाञ्छितद्रुमम्
फलेग्रहिं न प्रतनोषि यस्मात् ।
कृपेतिशब्दोऽपि बभूव नूनं
ह्रस्वस्त्वयि स्याल इव त्वदीये ॥ 2591 ॥

**फलेग्रहिम्** सफलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 478. वनस्पतीनां वृक्षाणां फलानि गृह्णन्तीति **फलेग्रहीन्** फलग्राहिणः । यद्यपि फलेग्रहिर्वृक्ष इति काशिकायाम् । अत्र प्रौढ्या रूढ्यनादरेण योगमात्राश्रयणेन मुनिविशेषणत्वमुक्तम् । नराणां पिशितै**रात्मम्भरिः** । इनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1102. अन्धतमसप्राग्भार**कुक्षिम्भरिः** ।

अनर्घराघवे—II. 44.

यातोऽस्तमेष चरमाचलचूडचुम्बी
पङ्केरुहप्रकरजागरणप्रदीपः ।
आस्सर्वतः स्फुरतु कैरवमाः पिबन्तु
ज्योत्स्नाकरम्भ**मुदरम्भरयश्च**कोराः ॥ 2592 ॥

अनर्घराघवे—II. 83.

स्मेरा दिशः कुमुदमुद्भिदुरं पिबन्ति
ज्योत्स्नाकरम्भ**मुदरम्भरयश्च**कोराः ।

आः कीदृगत्रिमुनिलोचनदूषिकायां
पीयूषदीधितिरिति प्रथितोऽनुरागः ॥ 2593 ॥

चम्पूरामायणे—VI. 11.

सरसपटीरकुञ्जवनसञ्जवनाभिपत-
न्मृगमदगन्धगन्धवहमेदुरितेऽम्बुनिधेः ।
तटनिकटे लुठत्पनसतालरसालफलै-
रुदितमदा विचेरुरुदरम्भरयो हरयः ॥ 2594 ॥

२९४१ । एजेः खश् । (३. २. २८)

ण्यन्तादेजेः खश् स्यात् ।

२९४२ । अरुर्द्विषदजन्तस्य मुम् । (६. ३. ६७)

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्त उत्तरपदे न त्वव्ययस्य । जनमेजयतीति जनमेजयः ।

वा० । वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम् । (2005.)

वातमजा मृगाः ।

अस्मिन्नेव ग्रन्थे श्लो० 811. सत्वान्प्राणिन एजयन्ति कम्पयन्तीति **सत्वमेजयाः** सर्वप्राणिभीषणाः । एजेः खश् । अजन्तान्मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 695. परान् तापयतीति **परन्तपः** शत्रुघाती । पूर्ववन्मुमागमः ।

भट्टिकाव्ये—II. 17.

विचित्रमुच्चैः प्लवमानमारात्
कुतूहलं त्रस्नु ततान तस्य ।
मेघात्ययोपात्तवनोपशोभं
कदम्बकं वातमजं मृगाणाम् ॥ 2595 ॥

वातमजतीति वातमजं मृगाणां कदम्बकम्। 'वातप्रमीर्वातमृगः' II. v. 7. इत्यमरः। वातोपपदादजेः खशि मुमागमः।

## २९४३। खित्यनव्ययस्य। (६. ३. ६६)

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। ततो मुम्। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा माषाः। शर्धोऽपानशब्दस्तं जहातीति विग्रहः। जहातिरन्तर्भावितण्यर्थः।

अस्मिन्नेव ग्रन्थे श्लो० 811. नाडीस्सिरा धमन्त्युपप्लोत्पीडनादापूरयन्तीति नाडिन्धमान्। 'नाडी तु धमनिस्सिरा' II. vi. 65. इत्यमरः। खश्। मुम्। ह्रस्वः। मार्गान्।

भट्टिकाव्ये—VII. 13.

निन्दको रजनिंमन्यं दिवसं क्लेशको निशाम्।
प्रावृष्यनैषीत्काकुत्स्थः कथञ्चित्परिदेवकः॥ 2596 ॥

दिवसं रजनिंमन्यं रजनीमात्मानं मन्यमानं मेघान्धकारात्। 'आत्ममाने खश्च' (सू. 2993) इति ह्रस्वः।

माघे—IV. 62.

प्रीत्यै यूनां व्यवहिततपनाः
प्रौढध्वान्तं दिनमिह जलदाः।
दोषामन्यं विदधति सुरत-
क्रीडायासश्रमशमपटवः॥ 2597 ॥

दिनं दोषा रात्रिमात्मानं मन्यत इति दोषामन्यं रात्रिमानिनम्। दोषेत्यव्ययम्। तदुपपदान्मन्यतेर्धातोः पूर्ववत् खश्। अनव्ययस्येत्यव्ययनिषेधात् न दोषाशब्दस्य ह्रस्व-मुमागमौ।

## २९४४। नासिकास्तनयोर्ध्माधेटोः। (३. २. २९)

वा०। स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्। (2006—7.)

स्तनं धयतीति स्तनन्धयः। धेटष्टित्वात् स्तनन्धयी। नासिकंधमः नासिकन्धयः।

अस्मिन्नेव ग्रन्थे श्लो० 811. स्तनं धयतीति स्तनन्धयो बालः । धेटः खश् । मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 226. स्तनन्धयान्वत्सान् । खश् । मुम् ।

रघुवंशे—XIV. 78.

पयोधरैराश्रमबालवृक्षान्
संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः
स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ॥ 2598 ॥

स्तनन्धयति पिबतीति स्तनन्धयः शिशुः । खश् । मुम् ।

चम्पूभारते—I. 69.

ग.—अथास्मिन्नमुना तपोवनपरिसरे पटीरगिरिबन्धुना गन्धवहस्तनन्धयेन सन्निधिं नीयमानः मद्रजःपरिग्रहः तपस्यन्तमपि मनस्यन्तः कं परितापसम्पदा न लिम्पेदित्यर्थान्तरमपि अलिगिरा बोधयन्त्यामिव वनवासन्त्यां समुन्मिषन्त्यामयं क्षणादेव क्षितिपतिरिक्षुधन्वनो लक्ष्यतामध्यरुक्षत् ॥ 2599 ॥

स्तनन्धयेन । पूर्ववत् ।

चम्पूरामायणे—VI. 86.

ग.—तदनु वारुणेन वैश्वानरं वैननेयेन वातन्धयं वायव्येन वारिदं प्राभाकरेण तामिस्रं माहेन्द्रेण दानवं माहेश्वरेण वैष्णवं च परस्परमेवमस्त्रमस्त्रेण भिन्दानयोरनयोरनिशमाहवाग्रहादविदितान्यहानि सप्त व्यतीयुः ॥ 2600 ॥

वातन्धयं नागास्त्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1138. पुष्पन्धयाः । उभयत्रापि पाघ्रादिना शप्रत्यये पृषोदरादित्वान्मुम् ।

## २९४५ । नाडीमुष्ट्योश्च । ( ३. २. ३० )

एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् । यथासङ्ख्यं नेष्यते । नाडिन्धमः नाडिन्धयः । मुष्टिन्धमः मुष्टिन्धयः ।

वा० । घटीखारीखरीषूपसंख्यानम् । (2008.)

घटिन्धमः घटिंधय इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी ।

अस्मिन्नेव ग्रन्थे श्लो० 811. नाडीर्धमन्तीति नाडिन्धमान् । खश् ।

अनर्घराघवे—IV. 2.

प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे
पश्यैता रुचयः पतङ्गदृषदामाग्नेयनाडिन्धमाः ।
लोकस्य क्षणदानिरङ्कुशरसौ सम्भोगनिद्रागमौ
कोकस्तोमकुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥ 2601 ॥

आग्नेयनाडीं धमन्तीति आग्नेयनाडिन्धमाः ।

अस्मिन्नेव ग्रन्थे श्लो० 30. चतुस्समुद्रमुष्टिन्धयेन कलशयोनिना ।

२९४६ । उदि कूले रुजिवहोः । (३. २. ३१)

उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः ।

अस्मिन्नेव ग्रन्थे श्लो० 812. कूलान्युद्वहन्त्युत्क्रम्य वहन्तीति कूलमुद्वहाः । कूलान्युद्रुजन्तीति कूलमुद्रुजाः । उभयत्रापि खशि मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1097. कूलान्युद्रुजन्तीति कूलमुद्रुजाः । खश्प्रत्ययः । 'अरुर्द्विष' (सू. 2942) इति मुमागमः ।

अनर्घराघवे—V. 53.

प्राणैस्समं कनकपुष्करकण्ठमाला-
सूत्रेण दाशरथये विहितातिथेयः ।
दिक्कूलमुद्वहयशस्सरिदादिशैल-
श्शेते स वीरशयने कपिचक्रवर्ती ॥ 2602 ॥

२९४७ । वहाभ्रे लिहः । (३. २. ३२)

वहः स्कन्धस्तं लेढीति वहंलिहो गौः । अभ्रंलिहो वायुः ।

अस्मिन्नेव ग्रन्थे श्लो० 297. अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् । खश् । 'अरुर्द्विष' (सू. 2942) इत्यादिना मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 813. अभ्रं लेढीत्यभ्रंलिहम् । खश् । मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 701. अभ्रं लिहन्तीत्यभ्रंलिहान् अभ्रंकषान् । खशि मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1340. अभ्रंलिहानि । खशि मुम् ।

रघुवंशे—XIV. 29.

तस्यै प्रतिश्रुत्य रघुप्रवीर-
स्तदीप्सितं पार्श्वचरानुयातः ।
आलोकयिष्यन्मुदितामयोध्यां
प्रासादमभ्रंलिहमारुरोह ॥ 2603 ॥

अभ्रंलिहम् । खश् । मुम् ।

## २९४८ । परिमाणे पचः । ( ३.२.३३ )

प्रस्थंपचा स्थाली । खारिम्पचः कटाहः ।

## २९४९ । मितनखे च । ( ३. २. ३४ )

मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची ।

अस्मिन्नेव ग्रन्थे श्लो० 813. अल्पं पचन्तीति अल्पंपचान् । अत्र मितेत्यर्थग्रहणात् खश् । चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 814. मितं पचतीति मितंपचः । खश् । नञ्समासेऽमितम्पचः ।

अस्मिन्नेव ग्रन्थे श्लो० 173. नखान्पचन्तीति नखम्पचाः । खशि मुमागमः ।

चम्पूरामायणे—II. 41.

घर्मे निदाघकिरणस्य करैः कठोरैः
कान्तारमध्यपदवीषु नखम्पचासु ।
त्वां वीक्ष्य संस्थुलपदां वनदेवताभि-
र्निन्दिष्यते नियतमेव निमेषहानिः ॥ 2604 ॥

नखम्पचासु । खश् । मुम् ।

२९५० । विध्वरुषोस्तुदः । ( ३. २. ३५ )

विधुन्तुदः । अरुन्तुदः ।

नैषधे—IV. 43.

अथ मुहुर्बहुनिन्दितचन्द्रया
स्तुतविधुन्तुदया च तया बहु ।
पतितया स्मरतापमये गदे
निजगदेऽश्रुविमिश्रमुखी सखी ॥ 2605 ॥

विधुं तुदतीति विधुन्तुदो राहुः । खश् । मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1770. विधुन्तुदो राहुः ।

रघुवंशे—I. 71.

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ 2606 ॥

अरुर्मर्म तुदतीत्यरुन्तुदम् मर्मस्पृक् । खश् । मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 815. अरुं तुदतीत्यरुन्तुदेन मर्मभेदिना । खश् । मुमागमः ।

२९५१ । असूर्यललाटयोर्दृशितपोः । ( ३. २. ३६ )

असूर्यमित्यसमर्थसमासः दृशिना नञस्सम्बन्धात् । सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदाराः । ललाटन्तपस्सूर्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 815. सूर्यं न पश्यन्तीत्यसूर्यम्पश्या: । खशि मुमागम: । 'पाघ्रा' (सू. 2360) इति दृशे: पश्यादेश: ।

अस्मिन्नेव ग्रन्थे श्लो० 816. ललाटं तपतीति ललाटन्तप: । खशि मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 206. असूर्यम्पश्य: । खश् ।

२९५२ । उग्रम्पश्येरम्मदपाणिन्धमाश्च । ( ३. २. ३७ )

एते निपात्यन्ते । उग्रमिति क्रियाविशेषणम् । तस्मिन्नुपपदे दृशे: खश् । उग्रं पश्यतीत्युग्रम्पश्य: । इरा उदकं तेन माद्यति दीप्यतेऽविन्धनत्वादिति इरंमदो मेघज्योति: । इह निपातनाच्छ्यन्न । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थ: । तत्र हि सर्पाद्यपनोदनाय पाणय: शब्द्यन्ते ।

अस्मिन्नेव ग्रन्थे श्लो० 104. उग्रं पश्यन्तीत्युग्रम्पश्या: ।

अस्मिन्नेव ग्रन्थे श्लो० 817. उग्रं पश्यतीत्युग्रम्पश्य: ।

अस्मिन्नेव ग्रन्थे श्लो० 916. पाणिन्धमा: ।

२९५३ । प्रियवशे वद: खच् । ( ३. २. ३८ )

प्रियंवद: । वशंवद: ।

वा० । गमे: सुपि वाच्य: । (2009.)

असंज्ञार्थमिदम् । मितङ्गमो हस्ती ।

वा० । विहायसो विह इति वाच्यम् । (2010.)

वा० । खच्च डिद्वा वाच्य: । (2011.)

विहङ्ग: विहङ्गम: । भुजङ्ग: भुजङ्गम: । संज्ञायां तु 'गमश्च' (सू. 2964) इति खच् । सुतङ्गम: ।

अस्मिन्नेव ग्रन्थे श्लो० 499. प्रियंवद: ।

अस्मिन्नेव ग्रन्थे श्लो० 1705. प्रियं वदतीति प्रियंवदा । खच् । मुमागम: ।

अस्मिन्नेव ग्रन्थे श्लो० 50. वशंवदां वशवर्तिनीम् । खच् । मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 817. वशं वदतीति वशंवदोऽनुकूलचारी ।

अस्मिन्नेव ग्रन्थे ग० 1488. प्लवङ्गमानाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2262. प्लवङ्गम् ।

चम्पूरामायणे--V. 32.

अथ तमुवाच सा जनकराजसुता मुदिता
किमु तव दुष्करं चरणलंघितवारिनिधेः ।
अपि तु मया सह प्लवगपुङ्गव यास्यसि चे-
न्नियतमपायिनी परिणमेद्भवतः पदवी ॥ 2607 ॥

'अन्यत्रापि दृश्यत इति वक्तव्यम्' (वा. 2018. सू. 2965) इति डप्रत्ययः ।

चम्पूभारते—II. 4.

मर्मदत्तदशना भुजङ्गमा
मारुतेर्वपुषि सुप्तिभूरुहः ।
मुष्टिमेयतनवो विरेजिरे
मूलिका इव बहिर्विनिर्गताः ॥ 2608 ॥

चम्पूरामायणे—IV. 35.

तत्रासनं द्रुतमपास्य पतिः कपीनां
तत्रास नम्रवदनो घनचापघोषात् ।
सन्तोषमोक्षमिव भूरि भजन्भुजङ्ग-
स्सन्तापनाशपिशुनात्तरुणाभ्रघोषात् ॥ 2609 ॥

भुजङ्गः । 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' I. vii. 6. इत्यमरः । भुजगः । डप्रत्ययः । भुजङ्गः । खचि डित्पक्षः । भुजङ्गमः । खचि डिदभावपक्षः ।

माघे—VI. 45.

तनुरुहाणि पुरो विजितध्वने-
धवलपक्षविहङ्गमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः
परिभवोऽरिभवो हि सुदुस्सहः ॥ 2610 ॥

विहङ्गमाः पक्षिणः । खचि डिद्भावपक्षः ।

माघे—I. 7.

विहङ्गराजाङ्गरुहैरिवायतै-
र्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकै-
र्घनं घनान्ते तटितां गणैरिव ॥ 2611 ॥

विहङ्गाः । खश् । डित्पक्षः ।

माघे—IV. 36.

विहगाः कदम्बसुरभाविह गाः
कलयन्त्यनुक्षणमनेकलयम् ।
भ्रमयन्नुपैति मुहुरभ्रमयं
पवनश्च धूतनवनीपवनः ॥ 2612 ॥

विहगाः । 'अन्यत्रापि दृश्यते' (वा. 2018. सू. 2965) इति डः । 'डे च विहायसो विहादेशो वक्तव्यः' (वा. 2012. सू. 2965) इति विहादेशः ।

२९५४ । द्विषत्परयोस्तापेः । (३. २. ३९)

खच् स्यात् ।

२९५५ । खचि ह्रस्वः । (६. ४. ९४)

खचि परे णावुपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः ।

अस्मिन्नेव ग्रन्थे श्लो० 499. परन्तप । द्विषन्तपम् । खच् ।

अस्मिन्नेव ग्रन्थे श्लो० 695. परान् तापयतीति परन्तपः शत्रुघाती । खच् । ह्रस्वः । मुम् ।

चम्पूभारते—I. 26.

ग. तदनन्तरमसौ परन्तपस्समन्ततः शकुन्तरवनिरन्तरदिगन्तरादखिलमृगशरण्यादरण्यादुत्प्लवमानस्य कस्यचिदनुप्लवनमन्दीभूतजवचमूरोश्चमूरोस्सरणिमनुसरमाणस्तदीयतनूरुहचित्रबिन्दुनिकरैरिव गगनमुत्पतद्भिः खुररजोभिरनुमीयमानतुरगगतिः सुदूरनुपपात ॥ 2613 ॥

परन्तपः । पूर्ववत् ।

## २९५६ । वाचि यमो व्रते । (३. २. ४०)

वाक्शब्द उपपदे यमेः खच् स्याद्व्रते गम्ये ।

## २९५७ । वाचंयमपुरन्दरौ च । (६. ३. ६९)

वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः ।

अस्मिन्नेव ग्रन्थे श्लो० 818. वाचं यच्छतीति वाचंयमः । खच् । निपातनान्मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1150. वाचंयमान् । पूर्ववत् ।

चम्पूभारते—IV. 38.

तादृक्षे समुपस्थिते परिभवे सभ्येषु वाचंयमे-
ष्वाध्यायत्सु विधेर्बलं स्वदयितेष्वन्येष्वशक्तेष्वपि ।
निश्चित्यार्तिमतां गतिं यदुपतिं नीव्यां करौ कुर्वती
सा चक्रन्द तदोच्चकैरिह हरे त्रायस्व हा मामिति ॥ 2614 ॥

वाचंयमेषु ।

२९५८। पूःसर्वयोर्दारिसहोः। (३. २. ४१)

पुरं दारयतीति पुरन्दरः। 'वाचंयम' (सू. 2957) इति निपातनान्मुम्। सर्वंसहः। 'अरुर्द्विष' (सू. 2942) इति मुम्। सहिग्रहणमसंज्ञार्थम्। संज्ञायां तु 'संज्ञायां' (सू. 2963) इति खचि शत्रुंसह इति। 'भगे च दारेः' (वा. 2013) इति काशिका। बाहुलकेन लब्धमिदमित्याहुः। भगं दारयतीति भगन्दरः।

अस्मिन्नेव ग्रन्थे श्लो० 818. सर्वं सहत इति सर्वंसहं सर्वकार्यक्षमम्। खचि मुम्। सुग्रीवम्।

अस्मिन्नेव ग्रन्थे श्लो० 267. सर्वंसहायाः सीतायाः. खचि मुम्।

२९५९। सर्वकूलाभ्रकरीषेषु कषः। (३. २. ४२)

सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो वायुः। करीषङ्कषा वात्या।

अस्मिन्नेव ग्रन्थे श्लो० 819. सर्वं कषन्तीति सर्वङ्कषाणि सर्वव्यापीनि। अभ्रं कषतीत्यभ्रंकषम्। उभयत्रापि खचि मुम्।

माघव्याख्या—5.

मल्लिनाथः सुधीस्सोऽयं महोपाध्यायशब्दभाक्।
विधत्ते माघकाव्यस्य व्याख्यां सर्वङ्कषाभिधाम्॥ 2615॥

अस्मिन्नेव ग्रन्थे श्लो० 1974. गर्वसर्वङ्कषः।

अनर्घराघवे—VI. 3.

दोस्सन्दोहवशंवदत्रिभुवनश्रीगर्वसर्वङ्कषः
कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः।
यत्रायं स्वयमस्ति सेयममरावत्यापि वन्द्या पुरी
नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम्॥ 2616॥

सर्वङ्कषः।

माघे—XII. 60.

कृष्णोरुरोधःपरिपूरिताम्भसः
समस्थलीकृत्य पुरातनीर्नदीः ।
कूलङ्कषौघास्सरितस्तथापराः
प्रवर्तयामासुरिभा मदाम्बुभिः ॥ 2617 ॥

कूलं कषन्तीति कूलङ्कषाः । खच् ।

चम्पूभारते—IX. 38.

नद्यास्सुतेन जनितैर्नवदेववर्गै-
स्सान्द्रे स्वधाम्नि सति सङ्कुचितस्थितीनाम् ।
स्वर्गौकसामजनि सा स्वयमेव काम्या
कूलङ्कषा कुशिकनन्दनकोपमुद्रा ॥ 2618 ॥

कूलङ्कषा ।

चम्पूभारते—II. 17.

तस्याशयं हृदि विदन्नपि धर्मसूनु-
स्तातस्य वाचमविलम्ब्य तथेत्यगृह्णात् ।
तत्तादृशेषु गुरुशासनपालनेषु
कूलङ्कषं गुणगणेन कुलं हि पूरोः ॥ 2619 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2393. अभ्रङ्कषतीत्यभ्रङ्कषम् अत्युन्नतम् । खचि मुम् ।

## २९६० । मेघर्तिभयेषु कृञः । (३. २. ४३)

मेघङ्करः । ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः । अभयङ्करः ।

अस्मिन्नेव ग्रन्थे श्लो० 820. मेघान्करोतीति मेघङ्करम् । भयङ्करम् । खच् । मुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 487. मेघान् करोतीति मेघङ्करं मेघजनकं । खच् । मुम् ।

माघे—XV. 58.

इति तददा विकृतरूपमभजदविभिन्नचेतसम् ।
मारबलमिव भयङ्करतां हरिबोधिसत्त्वमभि राजमण्डलम् ॥ 2620 ॥

भयङ्करताम् । खच् । मुम् ।

माघे—XVII. 45.

क्षणेन च प्रतिमुखतिग्मदीधिति-
प्रतिप्रभास्फुरदसिदुःखदर्शना ।
भयङ्करा भृशमपि दर्शनीयतां
ययावसावसुरचमूश्च भूभृताम् ॥ 2621 ॥

भयं करोतीति भयङ्करा ।

नैषधे—IV. 55.

शशकलङ्क भयङ्कर मादृशां
ज्वलसि यन्निशि भूतपतिं श्रितः ।
तदमृतस्य तवेदृशभूतता-
द्भुतकरी परमूर्धविधूननी ॥ 2622 ॥

भयङ्कर ।

अस्मिन्नेव ग्रन्थे श्लो० 1138. मेघङ्करम् । खच् । मुम् । पुष्पन्धया भृङ्गाः 'पाघ्रा' (सू. 2899) इत्यादिना शप्रत्यये पृषोदरादित्वान्मुमि पुष्पन्धय इति साधुः ।

चम्पूरामायणे—V. 37.

ग—तदनु सरभसमारक्षिकरक्षोगणनिवेदितप्रमदवनकदनकुपितदशवदनप्रेषितान् पितृपतिकिङ्करभयङ्करान् किङ्करान् प्रहस्तपुत्रेण जम्बुमालिना सह निहत्यचैत्यतोरण-मुपगतवति हनूमति ॥ 2623 ॥

भयङ्करान् ।

अस्मिन्नेव ग्रन्थे श्लो० 2555. भयङ्करः ।

२९६१ । क्षेमप्रियमद्रेऽण् च । (३. २. ४४)

एषु कृञोऽण् स्यात् । चात्खच् । क्षेमङ्करः क्षेमकारः । प्रियङ्करः प्रियकारः । मद्रङ्करः मद्रकारः । कथं तर्हि 'अल्पारम्भाः क्षेमकरा' इति । कर्मणश्शेषत्वविवक्षायां पचाद्यच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 625. अन्योन्यस्य प्रियं कुरुत इति **प्रियङ्करौ** । क्षेमं कुर्वन्तीति **क्षेमङ्कराणि** । चकारादुभयत्रापि खच् । मुम् ।

भट्टिकाव्ये—IX. 131.

> यत्स्वधर्ममधर्मं त्वं दुर्बलं प्रत्यपद्यथाः ।
> रिपौ रामे च निश्शङ्को नैतत्क्षेमङ्करं चिरम् ॥ 2624 ॥

**क्षेमङ्करम्** । खच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1265. पितुः **प्रियङ्करः** प्रियकारी । तपस्विनां **क्षेमकारः** क्षेमङ्करः । यथाक्रमं खजणौ ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2319. प्रियं करोतीति **प्रियकारी** । अणि ङीप् ।

रघुवंशे—XIV. 48.

> सा नीयमाना रुचिरान्प्रदेशान्
> प्रियङ्करो मे प्रिय इत्यनन्दत् ।
> नाबुद्ध कल्पद्रुमतां विहाय
> जातं तमात्मन्यसिपत्रवृक्षम् ॥ 2625 ॥

**प्रियङ्करः** । खच् । मुम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2576. योगक्षेमौ शरीरस्थितिपालने करोतीति **योगक्षेमकरम्** । 'कृञो हेतु' (सू. 2934) इत्यादिना हेतौ टः । ग्रहणवता तदन्तविधेरभावात् अण्खचौ न भवतः ।

२९६२ । आशिते भुवः करणभावयोः । (३. २. ४५)

आशितशब्द उपपदे भवतेः खच् । आशितो भवत्यनेन आशितम्भवः ओदनः । आशितस्य भवनं आशितम्भवः । आशितः कर्ता ।

अस्मिन्नेव ग्रन्थे श्लो० 821. आशित इति आङ्पूर्वादश्नातेरविवक्षिते कर्मणि कर्तरि क्तः। आशितस्य भाव आशितम्भवः। भावे खच्। मुमागमः। अशनम्।

अस्मिन्नेव ग्रन्थे श्लो० 2276. आशिता भुक्तवन्तः। कर्तरि क्तः। आशितानां भवनमाशितम्भवमाशितत्वम्। भावे खच्। मुम्।

अस्मिन्नेव ग्रन्थे श्लो० 1888. आशितानामाशितवतां भवनमाशितम्भवं मृष्टाशितत्वम्। भावे खच्। मुम्।

२९६३। संज्ञायां भृतॄवृजिधारिसहितपिदमः। (३. २. ४६)

विश्वं बिभर्तीति विश्वम्भरः विश्वम्भरा। रथन्तरं साम। इह रथेन तरतीति व्युत्पत्तिमात्रम्। न त्ववयवार्थानुगमः। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुन्तपः। शत्रुंसहः। अरिन्दमः। दमिः शमनायाम्। 'रसा विश्वम्भरा। स्थिरा'। II. i. 2. 'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा' II. i. 3. इत्यमरः।

अस्मिन्नेव ग्रन्थे श्लो० 822. बलिं दमयतीति बलिन्दमो बलिध्वंसी विष्णुः। विश्वं बिभर्तीति विश्वम्भरा भूः। उभयत्रापि खच्।

अस्मिन्नेव ग्रन्थे श्लो० 823. वसूनि धारयतीति वसुन्धरा भूः। खच्।

अस्मिन्नेव ग्रन्थे श्लो० 1773. विश्वं बिभर्तीति विश्वम्भरो विश्वत्राता। खच्। मुम्।

अस्मिन्नेव ग्रन्थे श्लो० 93. विश्वम्भरा।

अस्मिन्नेव ग्रन्थे श्लो० 2505. पतिं वृणोतीति पतिंवरा। 'अथ स्वयंवरा। पतिंवरा च वर्या' II. vi. 7. इत्यमरः। खच्।

अस्मिन्नेव ग्रन्थे श्लो० 82. धनञ्जयाभिधाम्। खच्।

चम्पूभारते—VII. 57.

ग.—तदनु हरिदङ्गणविशृङ्खलविश्रमितजयशङ्खरवो निजायुधनिक्षेपरक्षिषु भूतकुटुम्बेषु नवरुधिराञ्जलिपानतृप्तिकिलिकिलितमनुभवितुकाम इव पुनरपि पितृवनमेत्य तरुनिहितशस्त्रसम्भारः पुरात्सहायातेषु गुणेष्वावामेव तव रणाद्भुतदर्शनं प्रतिबध्निते

इत्युपालब्धुं कृतसान्निध्याभ्यां क्लैव्यसारथ्याभ्यां भूयः कृतानुषङ्गनः कुरुकुञ्जरो भूमिञ्जयमेवं जगाद ॥ 2626 ॥

भूमिञ्जय इत्युत्तरस्यैव नामान्तरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1544. परंतप इति संज्ञा ।

## २९६४ । गमश्च । ( ३. २. ४७ )

सुतङ्गमः ।

अस्मिन्नेव ग्रन्थे श्लो० 823. वालिना समोऽन्यो बली नास्तीति हृदयङ्गमम् । मम स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते । तेन 'संज्ञायां' (सू. 2963) इत्यधिकृत्य अनेन खच् ।

भट्टिकाव्ये—V. 67.

हृदयङ्गममूर्तिस्त्वं सुभगम्भावुकं वनम् ।
कुर्वाणा भीमम्प्येतद्ददाभ्यैः केन हेतुना ॥ 2627 ॥

हृदयं गच्छतीति हृदयङ्गमा हृद्या । अनेन खच् मुम् । असंज्ञायाम् 'गमेस्सुपि वाच्यः' ( वा. 2009. सू. 2953 ) इति खच् । मितङ्गमो हस्ती । प्लवङ्गमः कपिः । भुजङ्गमस्सर्पः । विहङ्गमः पक्षी । 'खच्च डिद्वा वाच्यः' ( वा. 2011. सू. 2953 ). प्लवङ्गः । भुजङ्गः । 'विहायसो विह इति वाच्यम्' । ( वा. 2010. सू. 2953 ) विहङ्गः । प्लवगः । भुजगः । विहगः । 'अन्यत्रापि दृश्यत इति वाच्यम्' ( वा. 2018. सू. 2965 ) इति डः । 'डे च विहायसो विहादेशो वक्तव्यः' ( वा. 2012. सू. 2965 ) इति विहादेशः ।

## २९६५ । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । ( ३. २. ४८ )

संज्ञायामिति निवृत्तम् । एषु गमेर्डः स्यात् । अन्तं गच्छतीत्यन्तगः इत्यादि ।

वा० । सर्वत्रपन्नयोरुपसङ्ख्यानम् । ( 2014. )

सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् ।

वा० । उरसो लोपश्च । ( 2015. )

उरसा गच्छतीत्युरगः ।

वा० । सुदुरोरधिकरणे । ( 2016. )

सुखेन गच्छत्यत्र सुगः । दुर्गः ।

वा० । अन्यत्रापि दृश्यत इति वक्तव्यम् । ( 2018. )

ग्रामगः ।

वा० । डे च विहायसो विहादेशो वक्तव्यः । ( 2012. )

विहगः ।

अस्मिन्नेव ग्रन्थे श्लो० 1024. अन्तगान् पारगान् । डः ।

अस्मिन्नेव ग्रन्थे श्लो० 67. अध्वानं गच्छन्तीत्यध्वगाः पथिकाः । डः ।

रघुवंशे—X. 5.

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ 2628 ॥

अध्वगाः । डः ।

अस्मिन्नेव ग्रन्थे श्लो० 824. दूरगैर्दूरगामिभिः । [1]अत्यन्तगाः अतिभूमिं गताः । सर्वत्र गमेर्डः ।

नैषधे—II. 9

मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः ।
स्मरसुन्दर मां यदत्यजस्तव धर्मस्स दयोदयोज्ज्वलः ॥ 2629 ॥

धर्मागममर्मपारगैर्धर्मशास्त्रतत्त्वपारदर्शिभिः । डः ।

---

1. इदमत्यन्तगश्रिय इति पाठाभिप्रायेण ।

किरातार्जुनीये—IX. 63.

रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु ।
सर्वगापि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ॥ 2630 ॥

सर्वगा सर्वाङ्गगता । डः ।

माघे—IV. 15.

यत्रोज्झिताभिर्मुहुरम्बुवाहैः
समुन्नमद्भिर्न समुन्नमद्भिः ।
वनं बबाधे विषपावकोत्था
विपन्नगानामविपन्नगानाम् ॥ 2631 ॥

पन्नगाः सर्पाः । डः ।

अस्मिन्नेव ग्रन्थे श्लो० 2160. पन्नगैः । डः ।

अस्मिन्नेव ग्रन्थे श्लो० 670. उरगः । डः ।

किरातार्जुनीये—XIV. 32.

सुगेषु दुर्गेषु च तुल्यविक्रमै-
र्जवादहंपूर्विकया यियासुभिः ।
गणैरविच्छेदनिरुद्धमाबभौ
वनं निरुच्छ्वासमिवाकुलाकुलम् ॥ 2632 ॥

सुखेन दुःखेन च गच्छन्त्येष्विति सुगेषु सुगमेषु । दुर्गेषु दुर्गमेषु च । समविषमदेशेष्वित्यर्थः । अधिकरणार्थे डः । टिलोपः ।

माघे—VI. 33.

शमिततापमपोढमहीरजः
प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् ।

अविरलैरचलाङ्गनमङ्गना-
जनसुगं न सुगन्धि न चक्रिरे ॥ 2633 ॥

सुखेन गच्छत्यस्मिन्निति सुगम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2607. प्लवगः । 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति डः ।

चम्पूरामायणे—V. 39.

अनिमिषभुवने वा व्योम्नि वा भूतले वा
समरमुपगतं त्वां वीक्षितुं कस्समर्थः ।
इति नुतिवचनेन श्लाघयन्मेघनादं
प्लवगमिह नयेति प्राहिणोद्राक्षसेन्द्रः ॥ 2634 ॥

प्लवगम् । पूर्ववत् ।

चम्पूरामायणे—I. 14.

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः
कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे
निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥ 2635 ॥

भुजगः । पूर्ववत् ।

चम्पूभारते—III. 22.

नालीकात्कुवलयसङ्क्रमे स्खलित्वा
मग्नाधः पयसि रमेव तत्र काचित् ।
तं दृष्ट्वा भुजगसुता मिथो रिरंसु-
स्सन्तुष्टा हृदयमिवानयत्स्वगेहम् ॥ 2636 ॥

भुजगः । पूर्ववत् ।

माघे—VI. 50.

कृतमदं निगदन्त इवाकुली-
कृतजगत्त्रयमूर्जमतङ्गजम् ।
ववुरयुक्छदगुच्छसुगन्धय-
स्सततगास्ततगानगिरोऽलिभिः ॥ 2637 ॥

सततं गच्छन्तीति **सततगाः** सदागतयः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1037. अपां समूहः आपम् । तेन गच्छन्तीत्यापगा नद्यः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1150. पादाभ्यां गच्छन्तीति **पद्गाः** पादचारिणः । पूर्ववड्डः । 'पादस्य पदा' (सू. 990) इति पादशब्दस्य पदादेशः इति मल्लिनाथः । तदा पदग इति स्यात् । पूर्ववड्डः । 'हिमकाषि' (सू. 992) इति चकारस्यानुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः । 'पद्यत्य' (सू. 991) इत्यत्र पदिति योगविभागाद्वा पदादेशः । तदा पद्ग इति स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2612. **विहगाः** । पूर्ववड्डः । विहायसो विहादेशः ।

२९६६ । आशिषि हनः । (३. २. ४९)

शत्रुं वध्याच्छत्रुहः । आशिषि किम् । शत्रुघातः ।

वा० । दारावाहनोऽणन्तस्य च टः संज्ञायाम् । (2019.)

दारुशब्द उपपदे आङ्पूर्वाद्धन्तेरण् टकारस्यान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः ।

वा० । चारौ वा । (2020.)

चार्वाघाटः चार्वाघातः ।

वा० । कर्मणि समि च । (2021.)

कर्मण्युपपदे सम्पूर्वाद्धन्तेरुक्तं वेत्यर्थः । वर्णान्संहन्तीति वर्णसङ्घाटः । पदसङ्घाटः । वर्णसङ्घातः । पदसङ्घातः ।

अस्मिन्नेव ग्रन्थे श्लो० 825. दस्यून् शत्रून्वध्यात् दस्युहः। आशीरर्थे हन्तेर्डप्रत्ययः।

२९६७। अपे क्लेशतमसोः। (३. २. ५०)

अपपूर्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोऽपहः सूर्यः।

अस्मिन्नेव ग्रन्थे श्लो० 825. तमांस्यपहन्तीति तमोऽपहः सूर्यः। हन्तेरपपूर्वाड्डप्रत्ययः।

भट्टिकाव्ये—VI. 112.

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते।
चेतो वालिवधं रामक्लेशापहमुपस्थितम् ॥ 2638 ॥

क्लेशानपहन्तीति क्लेशापहम् सर्वदुःखोच्छेदकम्। पूर्ववड्डः।

अस्मिन्नेव ग्रन्थे श्लो० 2403. तमोऽपघ्नन्तीति तमोऽपहाः। डः।

अस्मिन्नेव ग्रन्थे श्लो० 634. तमांस्यपहन्तीति तमोऽपहं अहर्पतिम्। डः।

रघुवंशे—X. 2.

न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम्।
सुताभिधानं स ज्योतिः सद्यः शोकतमोऽपहम् ॥ 2639 ॥

शोक एव तमस्तदपहन्तीति शोकतमोऽपहम्। अत्राभयङ्कर इतिवत् उपपदेऽपि तदन्तविधिमाश्रित्य डप्रत्ययः।

रघुवंशे—X. 66.

अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती।
पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ 2640 ॥

तमोऽपहम्। डः।

२९६८। कुमारशीर्षयोर्णिनिः। (३. २. ५१)

कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती।

अस्मिन्नेव ग्रन्थे श्लो० 827. शीर्षाणि हन्तीति शीर्षघातिनम् शिरश्छेदिनम्। हन्तेर्णिनिः ।

२९६९ । लक्षणे जायापत्योष्टक् । ( ३. २. ५२ )

हन्तेष्टक् स्याल्लक्षणवति कर्तरि । जायाघ्नो ना । पतिघ्नी स्त्री । टित्त्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 827. पतिं हन्तीति पतिघ्नम् । टक् । 'गमहन' (सू. 2363) इत्यादिनोपधालोपः ।

२९७० । अमनुष्यकर्तृके च । ( ३. २. ५३ )

जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्य इति किम् । आखुघातः शूद्रः । अथ कथं 'बलभद्रः प्रलम्बघ्नः शत्रुघ्नः कृतघ्न' इत्यादि । मूलविभुजादित्वात्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादणि बोध्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 828. शत्रुं घ्नन्तीति शत्रुघ्नान्गिरीन् ।

भट्टिकाव्ये—XIV. 33.

मित्रघ्नस्य प्रचुक्षोद गदयाङ्गं विभीषणः ।
सुग्रीवः प्रघसं नेहे बहूनरामस्ततर्द च ॥ 2641 ॥

मित्रघ्नस्य राक्षसस्य ।

अस्मिन्नेव ग्रन्थे श्लो० 215. शत्रून् हन्तीति शत्रुघ्नः । अमानुषत्वविवक्षया टक् । चकारात्कचिन्मनुष्यकर्तृकेऽपि टक्प्रत्यय इति कौमारः ।

रघुवंशे—VII. 54.

स दक्षिणं तूणमुखेन वामं व्यापारयन्हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान्सुषुवे रिपुघ्नान् ॥2642॥

रिपून् घ्नन्तीति रिपुघ्नान् बाणान् । टक् ।

अस्मिन्नेव ग्रन्थे श्लो० 2517. रोगान् हन्तीति रोगघ्नम् आरोग्यकारि भेषजम् । टक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1074. सन्तापघ्नं कालमेघम् । टक् ।

रघुवंशे—XV. 6.

आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ 2643 ॥

शत्रून् हन्तीति शत्रुघ्नः । चकारात्कृतघ्नशत्रुघ्नादयस्सिद्धा इति दुर्गसिंहः । पाणिनीयेऽपि 'कृत्यल्युटो बहुलम्' ( सू. 2841 ) इति बहुलग्रहणाद्यथेष्टसिद्धिः ।

रघुवंशे—XI. 21.

नैर्ऋतघ्नमथ मन्त्रवन्मुनेः
प्रापदस्त्रमवदानतोषितात् ।
ज्योतिरिन्धननिपाति भास्करा-
त्सूर्यकान्त इव ताटकान्तकः ॥ 2644 ॥

नैर्ऋतघ्नं अस्त्रम् । टक् ।

## २९७१ । शक्तौ हस्तिकवाटयोः । ( ३. २. ५४ )

हन्तेष्टक् स्याच्छक्तौ द्योत्यायाम् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कवाटघ्नश्चोरः । कपाटेति पाठान्तरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 828. हस्तिनो हन्तुं शक्तो हस्तिघ्नः । कुत्वोपधालोपौ । हस्तिघ्न इव हस्तिघ्नः । अस्य सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् । वाली चामनुष्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1388. कपाटघ्नीं किरणलहरीम् । पूर्ववत् ।

## २९७२ । पाणिघताडघौ शिल्पिनि । ( ३. २. ५५ )

हन्तेष्टक् टिलोपो घत्वञ्च निपात्यते पाणिताडयोरुपपदयोः । पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । ताडघातः ।

वा० । राजघ उपसंख्यानम् । ( 2022. )

राजानं हन्ति राजघः ।

अस्मिन्नेव ग्रन्थे श्लो० 828. पाणीन् घ्नन्तीति पाणिघैः पाणिवादकैः शिल्पिभिः तद्विदैः । निपातनाट्टकि टिलोपकुत्वे ।

नैषधे—I. 10.

अनल्पदग्धारिपुरानलोज्ज्वलै-
निर्जप्रतापैर्वलयं ज्वलद्भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया
रराज नीराजनया स राजघः ॥ 2945 ॥

राज्ञो हन्तीति राजघः ।

२९७३ । आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । (३. २. ५६)

एषु च्व्यर्थेषु अच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 541. अनाढ्य आढ्यः क्रियतेऽनेनेति आढ्यङ्करणम् । अप्रियं प्रियं क्रियतेऽनेनेति प्रियङ्करणम् । उभयत्र ख्युन् ।

अस्मिन्नेव ग्रन्थे श्लो० 88. नग्नङ्करणी । ख्युन् । 'नञ्स्नञ्' (वा. 2425. सू. 470) इति ङीप् ।

चम्पूभारते—X. 95.

ग.—तदनु कोककुटुम्बिनीनां नग्नंकरणे महसि समारूढविहायसि क्रोधनिद्रारोधसाधारणीभवदरुणिमदुष्कृतिफलैरायोधनधरणीरुधिरधुनीषु पङ्केरुहाण्यङ्कुरयन्तो घटोत्कचविराटपाञ्चालपञ्चताप्रपञ्चितवैरभारतया गुरोरायुर्हेतुमलीकाक्षरं परिमार्ष्टुमलीकवचनमेकं प्रयुज्यतां भवतेति धर्मजातमनुकूलयन्तो वसुदेववासवकुमारादयः प्रथमसन्निकृष्टस्य धृष्टद्युम्नस्य वरूथिनीविमाथिनीं वारणधोरणीं प्रचेतसमिव पयोधरपरम्परां पुरोधाय भृशं खस्य गुणं शङ्खस्य परिपूरणेन दुर्वहं कुर्वन्तं कौरवसेनापतिमभिजग्मुः ॥ 2646 ॥

नग्नङ्करणे । ख्युन् ।

चम्पूभारते—IV. 42.

> चेलानि कर्षन्निरमन्धसूनु-
> स्तस्यास्तु नग्नङ्करणस्स नाभूत् ।
> श्रमात्स्खलित्वा धरणौ पतन्सन्
> दन्तावलेरेव जनव्रजानाम् ॥ 2647 ॥

नग्नंकरणः । ख्युन् ।

चम्पूभारते—V. 17.

ग—एकदा तत्र स्नुषावत्सलतयेव मारुतेन पुरतोनीतमसासहिमटवीपर्यटनखेद-सम्पदामन्धङ्करणमलिकुलचेतसामासेचनकमक्ष्णां कमपि कल्हारमुकुलमादाय क लभ्येत पुनरेतादृशमिति कुतुकहर्षाभ्यां सूचिततर्षया पार्षद्या रहसि याचितः पार्षदश्चिः क्षणं विचिन्त्य तद्विचिचीषया दिशमुदीचीं प्रतस्थे ॥ 2648 ॥

अन्धङ्करणमलिकुलचेतसाम् । ख्युन् ।

अस्मिन्नेव ग्रन्थे श्लो० 89. पलितङ्करणी जरेयम् । ख्युन् । 'नञ्स्नञी-कक् (वा. 2425. सू. 470) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 90. प्रियङ्करणीरपः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1115. सुभगङ्करणैः । ख्युन् ।

अनर्घराघवे—VII. 100.

> अस्मिन्माल्यवतस्तटीपरिसरे कादम्बिनीडम्बरः
> स स्थूलङ्करणो मदश्रुपयसामासीदवर्षन्नपि ।
> यद्धारावलितैर्न शाखिभिरपि त्वत्पालितैर्मा तथा
> दृष्ट्वा कन्दलितं न केकिभिरपि प्रारम्भि सङ्गीतकम् ॥ 2649 ॥

स्थूलङ्करणः । ख्युन् ।

२९७४ । कर्तरि भुवः खिष्णुच्खुकञौ । (३ २ ५७)

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवतीत्याढ्यम्भविष्णुः । आढ्यम्भावुकः । 'स्पृशोऽनुदके क्विन्' (सू. 432) घृतस्पृक् । कर्मणीति निवृत्तम् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् । 'ऋत्विक्' (सू. 373) व्याख्यातम् । 'त्यादादिषु' (सू. 429.) व्याख्यातम् ।

वा० । समानान्ययोश्चेति वाच्यम् । (2029.)

सदृक् सदृशः । अन्यादृक् अन्यादृशः ।

वा० । क्सोऽपि वाच्यः । (2030.)

तादृक्षः । सदृक्षः । अन्यादृक्षः । 'दृग्दृशवतुषु' (सू. 1017) इति समानस्य सभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 540. अप्रियः प्रियो भवन् **प्रियम्भावुकः** । **प्रियम्भविष्णुः** । 'आढ्यसुभग' (सू. 2973.) इत्यनुवृत्तौ अनेन भवतेः कर्त्रर्थे यथायोगमुभौ प्रत्ययौ ।

चम्पूभारते—VII. 70.

ग—अन्येद्युरात्मजमुखादमीषां याथार्थ्यमवगम्य चकितचकितः कुटुम्बेन सह सचिवान्पुरस्कृत्य सभामागतो विराटो नामान्तरसन्निधानादिव हायनमेकमनुपसर्पद्भिः स्वैः स्वैर्वेषैः प्रकृतिमापन्नेन सोदर्यजनेन समुपास्यमानस्य युधिष्ठिरस्य चरणनलिनयोः **पलितम्भावुकेन** मौलिना मरालयुगकेलिमुल्लुलयाञ्चकार ॥ 2650 ॥

**पलितम्भावुकेन** धवलीभूतशिरोरुहेण । खुकञ् ।

चम्पूभारते—XI. 25.

ग—इति तस्य मद्राध्यक्षस्य **तादृक्षमृभुक्षणः** कुमारपक्षपातं समीक्ष्य कर्मसाक्षिनन्दनोऽपि रौक्ष्यवर्जितं पदविभागचमत्कृति**सुभगम्भावुकं** वचनमेवमवादीत् ॥ 2651 ॥

**सुभगम्भावुकम्** । खुकञ् । **तादृक्षं** तादृशम् । 'क्सोऽपि वाच्यः' इति क्सः ।

अस्मिन्नेव ग्रन्थे श्लो० 2247. **पलितम्भावुकाः** । खुकञ् ।

भट्टिकाव्ये—IV. 13.

परेद्यव्यद्यपूर्वेद्युरन्येद्युश्चापि चिन्तयन् ।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥ 2652 ॥

**प्रियम्भावुकः** । खुकञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2627. **सुभगम्भावुकम्** । खुकञ् ।

भट्टिकाव्ये—III. 1.

वधेन संख्ये पिशिताशनानां
क्षतान्तकस्याभिभवेन चैव ।
आढ्यभविष्णुर्यशसा कुमारः
प्रियम्भविष्णुर्न स यस्य नासीत् ॥ 2653 ॥

अनाढ्य आढ्यो भवतीत्याढ्यम्भविष्णुः । अप्रियः प्रियो भवतीति **प्रियम्भविष्णुः** । खिष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1087. **सुभगम्भावुको** मनोहरीभूतः ।

अस्मिन्नेव ग्रन्थे श्लो० 1069. **प्रियम्भावुकैः** ।

अस्मिन्नेव ग्रन्थे श्लो० 2293. अनन्धः एवान्धो भवतीत्यन्धम्भविष्णुः । खिष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 578. समाना दृश्यत इति **सदृक्** सदृशी । 'समानान्ययोश्च' इत्युपसंख्यानात् समानोपपदात्दृशेः क्विन् । 'दृग्दृशवतुषु' (सू. 1017) इति समानस्य सभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 830. ऋतौ ऋतुं वा ऋतुप्रयुक्तो वा यजतीति **ऋत्विक्** । **दधृक्** धृष्टः। क्विन्।

भट्टिकाव्ये—VI. 119.

गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन् ।
भ्रातरं युङ् भियस्संख्ये घोषेणापूरयन् दिशः ॥ 2654 ॥

युङ् योक्ता । दिक् ।

अस्मिन्नेव ग्रन्थे श्लो० 832. सदृक् । किन् ।

२९७५. । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् । (३.२.६१)

एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्यपपदे । द्युसत् उपनिषत् । अण्डसूः प्रसूः । मित्रद्विट् प्रद्विट् । मित्रध्रुक् प्रध्रुक् । गोधुक् प्रधुक् । अश्वयुक् प्रयुक् । वेदवित् निविदित्यादि ।

वा० । अग्रग्रामाभ्यां नयतेर्णो वाच्यः । ( 5064. )

अग्रणीः । ग्रामणीः ।

अस्मिन्नेव ग्रन्थे श्लो० 832. किष्किन्धाद्रौ सीदतीति किष्किन्धाद्रिसत् । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 833. वालिने द्रुह्यतीति वालिद्रुहम् । क्विप् । अङ्गदं सूत इत्यङ्गदसूः । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 798. नभसि सीदन्तीति नभस्सदः । क्विप् ।

चम्पूभारते—II. 47.

तमिमं प्रसुवा रहस्युदन्तं
गदितो वायुसुतो बलावलेपात् ।
मनसा न बकं लिलेह रात्र्या-
मनसा धारितमन्नराशिमेव ॥ 2655 ॥

प्रसुवा जनन्या । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1924. द्विषः । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1016. मनद्रुहाम् । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 226. गा दुहन्तीति गोदुहः गोदोहकान् । क्विप् । '

अस्मिन्नेव ग्रन्थे श्लो० 761. पिशङ्गमौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक् । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 227. वाचो विदन्ति वाग्विदः । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1787. वाक्यरुग्गाभिदः । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 110. गोलभित् । क्विप्

अस्मिन्नेव ग्रन्थे श्लो० 834. वाजरसेनान्योः । नयतेः क्विप् । तनुच्छिदः । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1034. लोकच्छिदः । भ्राजादिसूत्रादनुपपदे क्विप्यनुवृत्ते 'अन्येभ्योऽपि दृश्यते' (सू. 3153) इति तच्छील्ये क्विप् ।

माघे—IX. 30.

उदमज्जि कैटभजितश्शयना-
दपनिद्रपाण्डुरसरोजरुचा ।
प्रथमप्रबुद्धनदराजसुता-
वदनेन्दुनेव तुहिनद्युतिना ॥ 2656 ॥

कैटभजित् । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2216. परिवादिनी स्वरजित् । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 55. तिथीः प्रणयतीति तिथिप्रणीः चन्द्रः । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2503. कुरुराट् । क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 371. भूतानामनभिद्रुहः अहिंसकस्य । क्विप् । 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (सू. 576) इति कर्मसंज्ञायां 'कर्तृकर्मणोः कृति' (सू. 623) इति कर्मणि षष्ठी ।

अस्मिन्नेव ग्रन्थे ग० 2495. असून् जुदन्ति प्रेरयन्तीत्यसुसुवो बाणाः । क्विप् ।

रघुवंशे—V. 4.

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ 2657 ॥

अग्रणीः । क्विप् ।

चम्पूरामायणे—II. 29.

ग.—बहवः खलु पितृनिदेशगौरवात् गोहत्यामपि मातृवधमपि तारुण्यविनिमयमपि कण्डुरैणुकेयपूरुप्रभृतयः कुर्वाणाः निर्विचारं तेनाचारवतामग्रण्य इति गण्यन्ते ॥ 2658 ॥

अग्रणीः । क्विप् ।

२९७६ । भजो ण्विः । ( ३. २. ६२ )

सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अंशभाक् प्रभाक् ।

अस्मिन्नेव ग्रन्थे श्लो० 834. दूरभाक् दूरगतः । ण्विः ।

अस्मिन्नेव ग्रन्थे श्लो० 753. क्षितिपालभाग्भ्यः राजार्हेभ्यः । ण्विः ।

अस्मिन्नेव ग्रन्थे श्लो० 25. अर्धांशभाक् । ण्विः ।

२९७७ । अदोऽनन्ने । ( ३. २. ६८ )

विट् स्यात् । आमनत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नादः । 'विड्वनो' ( सू. 2982 ) इत्यात्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 834. प्राणानत्तीति प्राणादं प्राणहारिणम् । विट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2030. नृमांसमदन्तीति नृमांसादः । विट् ।

२९७८ । क्रव्ये च । (३. २. ६९)

अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाधनार्थम् । क्रव्यात् आममांसभक्षकः । कथं तर्हि 'क्रव्यादोऽस्रप आशरः' इति । पक्वमांसशब्द उपपदेऽण् । उपपदस्य क्रव्यादेशः पृषोदरादित्वात् ।

अस्मिन्नेव ग्रन्थे श्लो० 835. क्रव्यमदन्तीति **क्रव्यादो** मांसभक्षकाः गृध्रगोमायुप्रभृतयः ।

अस्मिन्नेव ग्रन्थे श्लो० 810. क्रव्यमदन्तीति **क्रव्याद्भिः** आममांसभक्षकैः सिंहव्याघ्रादिभिः । विट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2288. क्रव्यमदन्तीति **क्रव्यादो** मांसभक्षकाः कङ्क-गृध्रादयः । विट् ।

चम्पूरामायणे—I. 68.

क्रव्याद्वपुषा सोऽश्वमहारि हरिणा हयः ।
ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे ॥ 2659 ॥

पक्वमांसमत्तीति **क्रव्यादः** । अत्र कर्मण्यण् । क्रव्यादेशः ।

२९७९ । दुहः कब्घश्च । (३. २. ७०)

कामदुघा ।

अस्मिन्नेव ग्रन्थे श्लो० 835. कामान् दोग्धीति **कामदुघः** । कप् । घकार-श्चान्तादेशः ।

रघुवंशे—I. 81.

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता **कामदुघा** हि सा ॥ 2660 ॥

**कामदुघा** । कप्प्रत्ययः घादेशश्च ।

२९८० । अन्येभ्योऽपि दृश्यन्ते । (३. २. ७५)

मनिन् कनिप् वनिप् विच् एते प्रत्ययाः स्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 836. अग्रे गच्छतीत्यग्रेगावा अग्रगामी। गमेर्वनिप्। 'विड्वनोः' (सू. 2982) इत्यात्वम्। 'वनो र च' (सू. 456) इति स्त्रियां ङीपि अग्रेगावरीति स्यात्।

## २९८२। विड्वनोरनुनासिकस्यात्। (६. ४. ४१)

अनुनासिकस्य आत्स्यात्। विजायत इति विजावा।

अस्मिन्नेव ग्रन्थे श्लो० 834. प्राणानत्तीति प्राणादम्। विट्।

अस्मिन्नेव ग्रन्थे श्लो० 836. अग्रे गच्छतीत्यग्रेगावा। वनिप्।

## २९८३। क्विप्च। (३. २. ७६)

उखास्रत वाहभ्रट् इत्यादयः। 'ब्रह्मभ्रूण' (सू. 2998) इत्यादिना भूते क्विप्। 'भ्राजभास' (सू. 3157) इति निरुपपदताच्छील्यादौ क्विप्।

अस्मिन्नेव ग्रन्थे श्लो० 836. अभिभवतीत्यभिभूरभिभविता। क्विप्।

भट्टिकाव्ये—VI. 40.

न्यवर्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्क्षयम्।
क्षात्रं तेजो विवृण्वन्तं दिधक्षन्तमिवानलम्॥ 2661॥

सुमित्रायां भवतीति सुमित्राभूः सौमित्रिः। क्विप्।

अस्मिन्नेव ग्रन्थे श्लो० 135. पवनाद्भवतीति पवनभूः। क्विप्।

अस्मिन्नेव ग्रन्थे श्लो० 25. नरभुजाम्। क्विप्।

अस्मिन्नेव ग्रन्थे श्लो० 173. हिमानीभृत्। क्विप्।

अनर्घराघवे—III. 61.

समन्तादुत्तालैस्सुरसहचरीचामरमरु-
तरङ्गैरुन्मीलद्भुजपरिघसौरभ्यशुचिना।
स्वयं पौलस्त्येन त्रिभुवनभुजा चेतसि कृता-
मरे राम त्वं मा जनकपतिपुत्रीमुपयथाः॥ 2662॥

त्रिभुवनं भुनक्तीति त्रिभुवनभुक्। क्विप्।

२९८७ । स्थः क च । ( ३. २. ७७ )

चात्क्विप् । संस्थः संस्थाः । शमि सुखे तिष्ठतीति शंस्थः सुखैकवृत्तिः । तिष्ठतेः कप्रत्ययः ।

२९८८ । सुप्यजातौ णिनिस्ताच्छील्ये । ( ३. २. ७८ )

अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम् । उष्णं भुङ्क्ते कदाचित् । प्रसिद्धश्चोपसर्गेऽपि णिनिः 'स बभूवोपजीविनाम्' । 'अनुयायिवर्गः' 'पतत्यधो धाम विसारि' 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादौ ।

वा० । साधुकारिण्युपसंख्यानम् । ( 2038. )

वा० । ब्रह्मणि वदः । ( 2039. )

अताच्छील्यार्थं वार्तिकद्वयम् । साधुदायी । ब्रह्मवादी ।

अस्मिन्नेव ग्रन्थे श्लो० 837. रिपून् हन्तुं शीलमस्येति रिपुघातिनम् । णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1328. द्विरदैर्गच्छतीति द्विरदगामिना । अनेन णिनिः । द्विरदवद्गच्छतीति द्विरदगामिना इति तु 'कर्तर्युपमाने' ( सू. 2989 ) इति णिनौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1292. अध्वन्यतुरङ्गैः यातीति अध्वन्यतुरङ्गयायी । णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 752. पादौ कषन्तीति पत्काषिणः । ताच्छील्ये णिनिः । 'हिमकाषि' ( सू. 992 ) इति पादशब्दस्य पदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1152. पत्काषी पादाभ्यां गमनशीलः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1212. मधु लेढुं शीलमेषामिति मधुलेहिनः । ताच्छील्ये णिनिः । मधुलेहगीताविति पाठान्तरम् । तत्र लिहन्तीति लेहाः । पचाद्यच् । मधुनो लेहा इति षष्ठीसमासः । मधु लिहन्तीति वा कर्मण्यण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1966. पिपासावधं कांक्षितुं शीलं येषामिति पिपासावधकांक्षिणः । ताच्छील्ये णिनिः । साधुकारिणि वा ।

चम्पूभारते—V. 52.

स्वसमाननाम्न्यनयवे नटद्गुणा-
द्धनुषश्च्युतैस्स युधि देवगायिनाम् ।
अतिरस्कृतां गलतलैकवर्तिनी-
मखिले वपुष्यपि चकार सायकैः ॥ 2663 ॥

देवगायिनाम् । साधुकारिणि णिनिः । गलतलैकवर्तिनीम् । ताच्छील्ये णिनिः । 'ऋन्नेभ्य' (सू. 306) इति ङीप् ।

चम्पूभारते—V. 53.

गगने शिरश्चलयतः श्रवोऽञ्चला-
द्गलितापि दूरमवतंसमञ्जरी ।
पुनरुन्नमद्भिरिषुपक्षवायुभिः
पुरतोऽभवत्कलहभोजिनो मुनेः ॥ 2664 ॥

कलहभोजिनो नारदस्य । ताच्छील्ये णिनिः ।

रघुवंशे—I. 16.

भीमकान्तैर्नृपगुणैस्स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ 2665 ॥

उपजीविनामाश्रितानाम् । उपपूर्वाज्जीवतेर्णिनिः ।

रघुवंशे—II. 4.

व्रताय तेनानुचरेण धेनो-
र्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा
स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ 2666 ॥

अनुयायिनः । अनुपूर्वाद्यातेर्णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 568. कालयवनादयः एनं चैद्यमनुयायिनः अनुयास्यन्तः। अत्र तु 'भविष्यति गम्यादयः' (सू. 3171) इति णिनिः। 'अकेनोर्भविष्यत्' (सू. 628) इति षष्ठीप्रतिषेधः।

अस्मिन्नेव ग्रन्थे श्लो० 1890. **विसारि**। विपूर्वात्सृ गतौ इति धातोर्णिनिः।

## २९८९। कर्तर्युपमाने। (३. २. ७९)

णिनिः स्यात्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थं जात्यर्थश्च सूत्रम्।

अस्मिन्नेव ग्रन्थे श्लो० 837. बान्धवा इव क्रोशन्तीति **बान्धवक्रोशिनः** तद्वद्विलपन्तः। णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 2372. मनोवद्यातीति **मनोयायी** मनोवेगीत्यर्थः। यातेर्णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 18. सिंहवन्नर्दतीति **सिंहनर्दी**। णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 1127. प्रावृषिजाम्भोद इव नदतीति **प्रावृषिजाम्भोदनादी**। णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 37. हंसवद्गच्छतीति **हंसगामिनी**। णिनिः। 'ऋन्नेभ्यो ङीप्' (सू. 306) इति ङीप्।

अस्मिन्नेव ग्रन्थे श्लो० 2339. खरवन्नदन्तीति **खरनादिनः**। णिनिः। **अशुभशंसिनः** अनिष्टसूचनशीलान्। अत्र तु 'सुप्यजातौ' (सू. 2988) इति ताच्छील्ये णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 1328. **द्विरदगामिना**। णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 2549. वृषवद्वृषभवन्नदन्ति गर्जन्तीति **वृषनादिनः**। णिनिः।

किरातार्जुनीये—XVI. 55.

ततो धरित्रीधरतुल्यरोधस-
स्तटिल्लतालिङ्गितनीलमूर्तयः।

अधोमुखाकाशसरिन्निपातिनी-
रपः प्रसक्तं मुमुचुः पयोमुचः ॥ 2667 ॥

अधोमुखाकाशसरिन्निपातिनीः । णिनिः । ङीप् ।

किरातार्जुनीये—XVI. 57.

महानले भिन्नसिताभ्रपातिभि-
स्समेत्य सद्यः कथनेन फेनताम् ।
व्रजद्भिरार्द्रेन्धनवत्परिक्षयं
जलैर्वितेने दिवि धूमसन्ततिः ॥ 2668 ॥

भिन्नसिताभ्राणीव पतन्तीति भिन्नसिताभ्रपातिभिः । णिनिः ।

किरातार्जुनीये—XII. 42.

बृहदुद्वहञ्जलदनादि धनुरुपहितैकमार्गणम् ।
मेघनिचय इव संववृते रुचिरः किरातपृतनापतिश्शिवः ॥ 2669 ॥

जलद इव नदतीति जलदनादि । णिनिः ।

## २९९० । व्रते । (३. २. ८०)

णिनिः स्यात् । स्थण्डिलशायी । 'यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ । स्थाण्डिलश्चाथ' II. vii. 44. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 838. वने वर्तन्ते शास्त्रतो नियमादिति वनवर्तिनः अनेन णिनिः ।

## २९९१ । बहुलमाभीक्ष्ण्ये । (३. २. ८१)

पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः ।

अस्मिन्नेव ग्रन्थे श्लो० 838. मधु पिबन्त्यभीक्ष्णमिति मधुपायिन्यो नित्यभोगिन्यः । आभीक्ष्ण्ये णिनिः ।

किरातार्जुनीये—XII. 34.

द्विषतः परासिसिषुरेष सकलभुवनाभितापिनः ।
क्रान्तकुलिशकरवीर्यबलान्मदुपाश्रनं विहितवान्महत्तपः ॥ 2670 ॥

सकलभुवनान्यभितापयन्त्यभीक्ष्णमिति सकलभुवनाभितापिनः । णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2013. आवर्तिभिरभीक्ष्णं भ्रमद्भिः । णिनिः ।

२९९२ । मनः । (३.२.८२)

सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ।

अस्मिन्नेव ग्रन्थे श्लो० 2034. शूरमानिनः । णिनिः ।

२९९३ । आत्ममाने खश्च । (३.२.८३)

स्वकर्मके मनने वर्तमानान्मन्यतेस्सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः । पण्डितमानी । 'खित्यनव्ययस्य' (सू. 2943) इति पूर्वपदस्य ह्रस्वः । कालीमन्या । दिवामन्या । ह्रस्वो न । 'क्यङ्मानिनोश्च' (सू. 837.) इति पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 839. शूरमात्मानं मन्यत इति शूरमानी । चकारान्मन्यतेर्णिनिः । साधुमात्मानं मन्यत इति साधुंमन्यम् । खश् ।

अस्मिन्नेव ग्रन्थे श्लो० 18. शूरमात्मानं मन्यत इति शूरंमन्यः । खश् ।

भट्टिकाव्ये—XVI. 40.

भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।
ज्ञास्येऽहमद्य सङ्ग्रामे समस्तैश्शूरमानिभिः ॥ 2671 ॥

चकारान्मन्यतेर्णिनिः ।

भट्टिकाव्ये—XVI. 41.

ज्ञायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः ।
गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम् ॥ 2672 ॥

वीरम्मन्याः । खश् ।

अस्मिन्नेव ग्रन्थे श्लो० 790. श्रियमात्मानं मन्यत इति श्रियम्मन्या। श्रीमन्तमात्मानं मन्यत इति श्रीमन्म्मन्यः। उभयत्र खश्।

अस्मिन्नेव ग्रन्थे श्लो० 2596. रजनिमात्मानं मन्यत इति रजनिम्मन्यम्। खशि मुमागमः।

अस्मिन्नेव ग्रन्थे श्लो० 2597. दोषा रात्रिमात्मानं मन्यत इति दोषामन्यम्। दोषेत्यव्ययम्। तदुपपदान्मन्यतेर्धातोः खश्प्रत्ययः। 'खित्यनव्ययस्य' (सू. 2943.) इत्यव्ययनिषेधान्न दोषाशब्दस्य ह्रस्वमुमागमौ।

भट्टिकाव्ये—XII. 83.

करोति वैरं स्फुटमुच्यमानः
प्रतुष्यति श्रोत्रसुखैरपथ्यैः।
विवेकशून्यः प्रभुरात्ममानी
महाननर्थस्सुहृदां बतायम्॥ 2673॥

आत्ममानी।

## २९९५। भूते। (३.२.८४)

अधिकारोऽयम्।

## २९९६। करणे यजः। (३.२.८५)

करण उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी।

अस्मिन्नेव ग्रन्थे श्लो० 840. हविषा इष्टवान् हविर्याजी। भूते णिनिः।

अस्मिन्नेव ग्रन्थे श्लो० 2511. राज्ञा सूयत इति राजसूयः क्षत्रियाधिकारः क्रतुविशेषः। तेनेष्टवान् राजसूययाजी। भूतार्थे णिनिः।

माघे—XIV. 10.

पूर्वमङ्ग जुहुधि त्वमेव वा
स्नातवत्यवभृथे ततस्त्वयि।

सोमपायिनि भविष्यते मया
वाञ्छितोत्तमवितानयाजिना ॥ 2674 ॥

वाञ्छितोत्तमवितानेन राजसूयाख्येन यजतीति वाञ्छितोत्तमवितानयाजिना ।

## २९९७ । कर्मणि हनः । (३.२.८६)

कुत्सितग्रहणं कर्तव्यमित्युक्तम् । कर्मणीत्येतत् 'सहे च' (सू. 3006) इति यावदधिक्रियते । पितृव्यघाती ।

अस्मिन्नेव ग्रन्थे श्लो० 840. ब्रह्म हतवतां ब्रह्मघ्नाम् । भूते क्विप् । अन्यव्यासक्तघाती । अन्येन व्यासक्तं हतवान् अन्यव्यासक्तघाती । भूते णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1870. सीतां हतवन्तं सीताघातिनम् । हन्तेः कुत्सितार्थे भूते णिनिः ।

## २९९८ । ब्रह्मभ्रूणवृत्रेषु क्विप् । (३. २. ८७)

एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा ।
अस्मिन्नेव ग्रन्थे श्लो० 840. ब्रह्माणं हतवतां ब्रह्मघ्नाम् । भूते क्विप् ।

रघुवंशे—III. 62.

तथापि शस्त्रव्यवहारनिष्ठुरे
विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा
पदं हि सर्वत्र गुणैर्निधीयते ॥ 2675 ॥

वृत्रं हतवानिति वृत्रहा । भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2086. वृत्रहा इन्द्रः ।

कुमारसंभवे—VII. 46.

कम्पेन मूर्ध्नश्शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्सम्भावयामास यथाप्रधानम् ॥ 2676 ॥

वृत्रं हतवन्तं वृत्रहणम् इन्द्रम् । भूते क्विप् ।

रघुवंशे—IX. 23.

प्रियतमाभिरसौ तिसृभिर्बभौ
तिसृभिरेव भुवं सहशक्तिभिः ।
उपगतो विनिनीषुरिव प्रजा
हरिहयोऽरिहयोगविचक्षणः ॥ 2677 ॥

अरीन्घ्नन्तीति अरिहणः रिपुघ्नाः । हन्तेः क्विप् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (सू. 2998) इति नियमस्य प्रायिकत्वात्कचिदन्यस्मिन्नप्युपपदे दृश्यते । मधुहा ।

## २९९९ । सुकर्मपापमन्त्रपुण्येषु कृञः । (३. २. ८९)

सुकर्मादिषु कृञः क्विप् स्यात् । सुकृत । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ।

अस्मिन्नेव ग्रन्थे श्लो० 841. पुण्यकृतः पुण्यं कृतवतः । पापकृत् पापं कृतवान् । सुकृतां साधुकारिणाम् । सर्वत्र भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2319. शोभनं कृतवान् सुकृत् । पुण्यकृत् । उभयत्र भूते क्विप् ।

भट्टिकाव्ये—VII. 83.

जटायुः पुण्यकृत्पक्षी दण्डकारण्यसञ्चरः ।
कृत्वा राघवकार्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ 2678 ॥

पुण्यं कृतवान्पुण्यकृत् । भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2166. मन्त्रकृत् मन्त्रद्रष्टा । भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2657. मन्त्रकृतां मन्त्रद्रष्टॄणाम् । भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1505. पुण्यकृतः । भूते क्विप् ।

रघुवंशे—I. 61.

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदश्शराः ॥ 2679 ॥

मन्त्रान्कृतवान्मन्त्रकृत् । भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 984. अपुण्यकृतां पुण्यमकृतवताम् । भूते क्विप् ।

३००० । सोमे सुञः । (३. २. ९०)

सोमसुत् ।

अस्मिन्नेव ग्रन्थे श्लो० 842. सोमं सुतवान् सोमसुत् । सोमयाजीत्यर्थः । क्विप् ।

रघुवंशे—XVIII. 26.

कौसल्य इत्युत्तरकोसलानां
पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसस्सोमसुतस्सुतोऽभू-
न्नेत्रोत्सवस्सोम इव द्वितीयः ॥ 2680 ॥

सोमसुतः सोमं सुतवतः ।

३००१ । अग्नौ चेः । (३. २. ९१)

अग्निचित् ।

अस्मिन्नेव ग्रन्थे श्लो० 842. अग्निं चितवानग्निचित् । अग्न्यर्थमिष्टकाचयनं कृतवानित्यर्थः । भूते क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1326. अग्निं चितवन्तोऽग्निचितः । क्विप् ।

रघुवंशे—VIII. 25.

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिस्सार्धमनग्निमग्निचित् ॥ 2681 ॥

अग्निं चितवानग्निचित् । क्विप् ।

३००२ । कर्मण्यग्न्याख्यायाम् । (३. २. ९२)

कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् यात् अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः श्येनचित् ।

अस्मिन्नेव ग्रन्थे श्लो० 842. रथचक्रवच्चीयत इति रथचक्रचित् । क्विप् । रथचक्रविधः अग्न्यर्थो हि तदाकारेष्टकाचय इत्युच्यते । तद्द्वारेणाग्निरपि ।

३००३ । कर्मणीनि विक्रियः । (३. २. ९३)

कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् ।

वा० । कुत्सितग्रहणं कर्तव्यम् । (2047.)

सोमविक्रयी । घृतविक्रयी ।

अस्मिन्नेव ग्रन्थे श्लो० 843. मांसं विक्रीतवान्मांसविक्रयी । निकृष्टकर्मकारीत्यर्थः । क्रीणातेः कुत्सायामिनिः ।

३००४ । दृशेः क्वनिप् । (३. २. ९४)

कर्मणि भूत इत्येव । पारं दृष्टवान्पारदृश्वा । 'वनो र च' (सू. 456) इति स्त्रियां ङीप् । रेफश्चान्तादेशः । पारदृश्वरी ।

अस्मिन्नेव ग्रन्थे श्लो० 843. पापं दृष्टवान् तेन पापदृश्वना निरन्तरपापचिन्तकेन । दृशेः क्वनिप् ।

अस्मिन्नेव ग्रन्थे श्लो० 271. विवेकदृश्वा विवेकदर्शी । क्वनिप् ।

अस्मिन्नेव ग्रन्थे श्लो० 18. यमास्यं दृष्टवती यमास्यदृश्वरी । भूतार्थे कर्मोपपदाद्दृशेः क्वनिप् । 'वनो र च' (सू. 456) इति ङीप् ।

चम्पूभारते—I. 26.

ग—एवमश्रान्तमृगयापरिश्रान्तमपरिमितस्वेदशीकरनिकरकोरकितफालमूलमातेनिरे तमाश्यानं तुहिनगिरिदेश्याः नन्दनीयमन्दिमानः मानससरोऽरविन्दमकरन्दसौरभपारदृश्वानो मातारिश्वानः ॥ 2682 ॥

पारं दृष्टवन्तः पारदृश्वानः । क्वनिप् ।

३००५ । राजनि युधिकृञः (३. २. ९५)

क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान्राजयुध्वा । राजकृत्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 844. राजानं कृतवान् राजकृत्वा । कृञः क्वनिप् ।

३००६ । सहे च । (३. २. ९६)

कर्मणीति निवृत्तम् । सहयुध्वा । सहकृत्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 844. सह युद्धवन्तं सहयुध्वानम् । युधेः क्वनिप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2340. सहयुध्वानौ ।

अस्मिन्नेव ग्रन्थे श्लो० 19. सहकृत्वरी सहकारिणी । क्वनिप् । 'वनो र च' (सू. 456.) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1729. सहकृत्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1564. सहयुध्वा ।

३००७ । सप्तम्यां जनेर्डः (३. २. ९७)

सरसिजम् । मन्दुरायां जातो मन्दुरजः । 'ङ्यापोः' (सू. 1001) इति ह्रस्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 845. कृते कृतयुगे जातैः कृतजैः । अनेन जनेर्डः । द्विजैः द्विजातैः । 'अन्येष्वपि दृश्यते' (सू. 3011) इति डः । सप्तम्यामित्युपलक्षणम् । असप्तम्यामपि दृश्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 1123. जले जातानि जलेजानि । अनेन डः । 'तत्पुरुषे कृति बहुलम्' (सू. 972) इत्यलुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1120. शिरसि जाताश्शिरसिजाः । सप्तम्यां जनेर्डः । 'अमूर्धमस्तकात्स्वाङ्गात्' (सू. 970) इत्यलुक् । 'उपपदमतिङ्' (सू. 782) इति समासः । एतेन मनसिजो व्याख्यातः ।

३००८ । पञ्चम्यामजातौ । (३. २. ९८)

जातिशब्दवर्जिते पञ्चम्यन्त उपपदे जनेर्डः स्यात् । संस्कारजः । अदृष्टजः ।

अस्मिन्नेव ग्रन्थे श्लो० 845. कौसल्याया जातः कौसल्याजः । अनेन डः । कौसल्याशब्दस्यासंज्ञात्वात् 'ङ्याप्योः' (सू. 1001) इति ह्रस्वो न ।

## ३००९ । उपसर्गे च संज्ञायाम् । (३. २. ९९)

'प्रजा स्यात्सन्ततौ जने' III. iii. 32 इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 846. प्रजाताः प्रजाः । अनेन डः ।

## ३०१० । अनौ कर्मणि । (३. २. १००)

अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात् । पुमांसमनुरुध्य जाता पुमनुजा ।

अस्मिन्नेव ग्रन्थे श्लो० 846. आत्मानमनु जात आत्मानुजः । अनेन डः ।

अस्मिन्नेव ग्रन्थे श्लो० 2426. राममनु जातवान्रामानुजः । अनेन डः ।

## ३०११ । अन्येष्वपि दृश्यते । (३. २. १०१)

अन्येष्वप्युपपदेषु जनेर्डः स्यात् । अजः । द्विजः । ब्राह्मणजः । धात्वन्तरादपि कारकान्तरेष्वपि क्वचित् । परितः खाता परिखा ।

भट्टिकाव्ये—VI. 136.

मन्ये किंजमहं भ्रन्तं त्वामक्षत्रियजे रणे ।
लक्ष्मणाधिज दुर्वृत्तं प्रयुक्तमनुजेन नः ॥ 2683 ॥

अधिजातोऽधिजो । भज इत्यर्थः 'उपसर्गे च संज्ञायाम्' (सू. 3009) इत्युक्तम् । असंज्ञायामपि दृश्यते । अनुजातेनानुजेन । 'अनौ कर्मणि' (सू. 3010) इत्युक्तम् । अकर्मण्यपि दृश्यते । क्षत्रियाज्जातं क्षत्रियजम् । 'पञ्चम्यामजातौ' (सू. 3008) इत्युक्तम् । जातावपि दृश्यते । किंजं कुतोऽपि जातम् । 'सप्तम्यां जनेर्डः' (सू. 3007) इत्युक्तम् । असप्तम्यामपि दृश्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 1150. पादाभ्यां गच्छन्तीति पद्गाः पादचारिणः । 'अन्यत्रापि दृश्यते' (वा. 2018. सू. 2965) इत्यभूते गमेर्डः । 'हिमकाषिहतिषु

च' (सू. 992) इति चकारात् 'पद्यति' (सू. 991) इत्यत्र पदिति योगविभागाद्वा पादशब्दस्य पत् इत्यादेशः । 'कर्मण्यण्' (सू. 2913) इत्यत आरभ्य 'अन्येष्वपि दृश्यते' (सू. 3011) इत्येतत्पर्यन्तं 'उपपदमतिङ्' (सू. 782) इति उपपद-समासः ।

३०१२ । क्तक्तवतू निष्ठा । (१. १. २६)

एतौ निष्ठासंज्ञौ स्तः ।

३०१३ । निष्ठा । (३. २. १०२)

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र 'तयोरेव' (सू. 2833) इति भावकर्मणोः क्तः । 'कर्तरि कृत्' (सू. 2832) इति कर्तरि क्तवतुः । स्नातं मया । स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ।

भट्टिकाव्ये—VI. 137.

प्रत्यूचे वालिनं रामो नाकृतं कृतवानहम् ।
यज्वभिस्सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर ॥ 2684 ॥

नाकृतं कृतवानहम् । अपि तु कृतमेव कृतवानहम् । अनेन भूते क्तक्तवतू ।

अस्मिन्नेव ग्रन्थे श्लो० 9. व्याप्तवत्या । विपूर्वादाप्लृ व्याप्ताविति धातोः भूते क्तवतुप्रत्ययः । 'उगितश्च' (सू. 455) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 622. आरूढवता । अनेन रुहेः क्तवतुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2114. अवतीर्णवान् रथादवरूढः । अनेन तरतेः क्तवतुः ।

अस्मिन्नेव ग्रन्थे श्लो० 586. त्वया कर्त्रा प्रहृतं तु प्रहारस्तु । भावे क्तः । 'नपुंसके भावे क्तः' (सू. 3090) इति नपुंसकत्वविशिष्टे भावे कालसामान्ये क्तः ।

३०१६ । रदाभ्यां निष्ठातो नः पूर्वस्य च दः । (८. २. ४२)

रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1023. अभ्यर्णं विदूरमासन्नमित्यर्थः। अभिपूर्वा-र्दर्देः कर्तरि क्तः। 'अर्मेश्चाविदूर्ये' (सू. 3065) इतीट्प्रतिषेधाद् अनेन नत्वम्।

३०१७। संयोगादेरातो धातोर्यण्वतः। (८. २. ४३)

निष्ठातस्य नः स्यात्। द्राणः। स्त्यानः। ग्लानः।

अस्मिन्नेव ग्रन्थे श्लो० 1270. आप्यानं स्थूलम्। 'प्यैङ् वृद्धौ' इति धातोरात्वे अनेन निष्ठातो नः। ओ प्यायी वृद्धावित्यस्य तु 'ओदितश्च' (सू. 3019) इति निष्ठानत्वम्। यलोपः। 'आङ्पूर्वस्यान्धू' (वा. 3461. सू. 3072) इति नियमात् 'प्यायः पी' (सू. 3072) इति पीभावो न।

रघुवंशे—IV. 24.

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत्॥ 2685॥

आश्यानकर्दमान् शुष्कपङ्कान्। श्यैङ् गतावित्यस्मान्निष्ठानत्वम्।

अस्मिन्नेव ग्रन्थे श्लो० 2682. आश्यानम्। पूर्ववत्।

३०१८। ल्वादिभ्यः। (८. २. ४४)

एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः। ज्या, 'ग्रहिज्या' (सू. 2412) इति संप्रसारणे जीनः।

वा०। दुग्वोर्दीर्घश्च। (4832.)

दु गतौ, दूनः। 'टु दु उपतापे' इत्ययं तु न गृह्यते सानुबन्धकत्वात्। 'मृदुतया दुतया' इति माघः। गूनः।

वा०। पूञो विनाशे। (4833.)

पूना यवाः। विनष्टा इत्यर्थः। पूतमन्यत्।

वा०। सिनोतेर्ग्रासकर्मकर्तृकस्य। (4834.)

सिनो ग्रासः । ग्रास इति किम् । सिता पाशेन सूकरी । कर्मकर्तृक इति किम् । सितो ग्रासो देवदत्तेन ।

अस्मिन्नेव ग्रन्थे श्लो॰ 691. नखैर्लूनं क्षतम् । निष्ठानत्वम् ।

माघे—IV. 30.

धूमाकारं दधति पुनस्सौवर्णे
वर्णेनाग्नेस्सदृशि तटे पश्यामी ।
श्यामीभूताः कुसुमसमूहेऽलीनां
लीनामालीमिह तरवो बिभ्राणाः ॥ 2686 ॥

लीनां स्थिताम् । निष्ठानत्वम् ।

माघे—VI. 59.

व्रणभृता सुतनोः कलसीत्कृत-
स्फुरितदन्तमरीचिमयं दधे ।
स्फुटमिवावरणं हिममारुतै-
र्मृदुतया द्रुतया सरलेखया ॥ 2687 ॥

टु दु उपतापे इति धातोर्स्वादिकात्कर्मणि क्तः ।

**३०१९ । ओदितश्च । (८. २. ४५)**

भुजो, भुग्नः । टु ओ श्वि, उच्छूनः । ओ हाक्, प्रहीणः ।

किरातार्जुनीये—XVI. 36.

महास्त्रदुर्गे शिथिलप्रयत्नं
दिग्वारणेनेव परेण रुग्णे ।
भुजङ्गपाशान्भुजवीर्यशाली
प्रबन्धनाय प्रजिघाय जिष्णुः ॥ 2688 ॥

रुग्णे भग्ने । रुजो भङ्गे । कर्मणि क्तः । निष्ठातकारस्य नत्वम् ।

भट्टिकाव्ये —IX. 1.

द्रुभङ्गध्वनिसंविग्ना रुदत्पक्षिकुलाकुलाः ।
अकार्षुः क्षणदाचर्यो रावणस्य निवेदनम् ॥ 2689 ॥

संविग्नाः सन्त्रस्ताः । ओ विजि भये । कर्तरि क्तः । नत्वम् ।

भट्टिकाव्ये—IX. 2.

यदताप्सीच्छनैर्भानुर्यत्रावासीन्मितं मरुत् ।
तदाप्यानं हिमोऽस्रेण भनक्त्युपवनं कपिः ॥ 2690 ॥

आप्यानं वर्धितम् । ओ प्यायी वृद्धौ । कर्मणि क्तः । निष्ठानत्वम् ।

भट्टिकाव्ये—IX. 16.

मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः ।
उद्वृत्तनयनो मित्रान्मन्त्रिणः स्वान्व्यसर्जयत् ॥ 2691 ॥

उद्विग्नान्भीतान् । ओ विजि भये । कर्तरि क्तः । शूनान् स्थूलान् । टु ओ श्वि गतिवृद्ध्योः । कर्तरि क्तः । निष्ठानत्वम् ।

## ३०२६ । परिस्कन्दः प्राच्यभरतेषु । (८. ३. ७५)

मूर्धन्याभावो निपात्यते । परिस्कन्दः । प्राच्य इति किम् । परिष्कन्दः परिस्कन्दः । 'परेश्च' (सू. 2399) इति षत्वविकल्पः । 'परेश्च' (सू. 2399) इत्यत्र अनिष्ठायामिति न सम्बध्यते । परिस्कन्नः परिष्कण्णः । षत्वपक्षे णत्वम् । 'वेः स्कन्देरनिष्ठायाम्' (सू. 2398) षत्वं वा स्यात् । विष्कन्ता विस्कन्ता । निष्ठायां तु विस्कन्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 2121. मेघनादः परिस्कन्दन् परिष्कन्दन्तं अरिम् । 'परेश्च' (सू. 2399) इति वा षत्वम् । अपरिस्कन्दम् । अनेन षत्वाभावनिपातः । अवध्नात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2073. विष्कन्तॄन् विविधं स्कन्तुं शीलमेषामिति तान् । अविस्कन्ता कपिः । विभाषा षत्वम् ।

३०२७ । प्रतिस्तब्धनिस्तब्धौ च । (८. ३. ११४)

अत्र षत्वं न स्यात् । 'स्तम्भेः' (सू. 2272) इति षत्वस्यायं प्रतिषेधनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 2087. अनिस्तब्धोऽनभिभूतः । अप्रतिस्तब्धः अनभिभूतः । उभयत्र षत्वप्रतिषेधनिपातनम् ।

३०२८ । द्विवोऽविजिगीषायाम् । (८. ३. ४९)

इति निष्ठानत्वम् । द्यूनः । विजिगीषायां तु द्यूतम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1235. आद्यूनः औदरिकः । 'आद्यूनस्स्यादौदरिको विजिगीषाविवर्जिते' III. i. 21. इत्यमरः । आङ्पूर्वाद्दीव्यतेः क्तः । निष्ठानत्वम् ।

३०२९ । निर्वाणोऽवाते । (८. २. ५०)

निःपूर्वाद्वातेर्निष्ठातस्य नत्वं स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1241. उद्यानं निर्वाणं वृक्षरहितम् । अवाते किम् । निर्वातः प्रदेशः ।

३०३० । शुषः कः । (८. २. ५१)

निष्ठात इत्येव । शुष्कः ।

भट्टिकाव्ये—III. 14.

विद्युत्प्रणाशं स वरं प्रनष्टो
यद्वोर्ध्वशोषं तृणवद्विशुष्कः ।
अर्थे दुरापे किमुत प्रवासे
न शासनेऽवास्थित यो गुरूणाम् ॥ 2692 ॥

विशुष्कः । निष्ठातकारस्य कः ।

अस्मिन्नेव ग्रन्थे श्लो० 1819. शुष्कं नीरसम् । निष्ठातकारस्य ककारः ।

## ३०३१ । पचो वः (८. २. ५२)

पक्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 190. पक्कम् ।

## ३०३२ । क्षायो मः । (८. २. ५३)

अस्मिन्नेव ग्रन्थे श्लो० 190. मध्ये क्षामा कृशा ।

किरातार्जुनीये—XIV. 35.

ततस्सदर्पं प्रतनुं तपस्यया
मदस्रुतिक्षाममिवैकवारणम् ।
परिज्वलन्तं निधनाय भूभृतां
दहन्तमाशा इव जातवेदसम् ॥ 2693 ॥

क्षामं कृशम् । निष्ठातकारस्य मकारः ।

## ३०३५ । अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः । (८. २. ५५)

ञि फला । फुल्लः । निष्ठातस्य लत्वं निपात्यते । फुल्लवान्, क्तवतुः । क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः । क्षीबो मत्तः । कृशस्तनुः । उल्लाघो नीरोगः ।

अस्मिन्नेव ग्रन्थे श्लो० 2533. प्रफुल्लो विकसितः । 'फुल्ल विकसने, इति धातोः पचाद्यच् सोपसर्गत्वात् । प्रफुल्तमिति तकारपाठे 'ञि फला विशरणे' इति धातोः कर्तरि क्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 2383. क्षीबा मत्ता । 'मत्ते शौण्डोत्कटक्षीबा' III. i. 33. इत्यमरः । 'क्षीबृ मदे' इति धातोः कर्तरि क्तः । निपातनात्तलोपः ।

किरातार्जुनीये—IX. 3.

अंशुपाणिभिरतीव पिपासुः
पद्मजं मधु भृशं रसयित्वा ।
क्षीबतामिव गतः क्षितिमेष्य-
ल्लोहितं वपुरुवाह पतङ्गः ॥ 2694 ॥

क्षीबः ।

किरातार्जुनीये—IX. 67.

रुन्धती नयनवाक्यविकासं
सादितोभयकरा परिरम्भे ।
व्रीडितस्य ललितं युवतीनां
क्षीबता बहुगुणैरनुजह्रे ॥ 2695 ॥

**क्षीबः** ।

३०३६ । आदितश्च । (७. २. १६)

आकारेतो निष्ठाया इण् न स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1259. **विश्वस्तः** विस्रब्धः । 'समौ विस्रम्भविश्वासौ' II. viii. 24. इत्यमरः । विश्वस्ता विधवा । 'विश्वस्ताविधवे समे, II. vi ii. इत्यमरः । अत्र चकारादनुक्तसमुच्चयार्थाच्छ्वसेर्निष्ठायामिट्प्रतिषेधः ।

३०३८ । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् । (८. २. ५६)

एभ्यो निष्ठातस्य नो वा । नुन्नः नुत्तः । विद विचारणे रौधादिक एव गृह्यते उन्दिना परेण साहचर्यात् । विन्नः वित्तः । वेत्तेस्तु विदितः । विद्यतेर्विन्नः ।

३०३९ । श्वीदितो निष्ठायाम् । (७. २. १४)

श्वयतेरीदितश्च निष्ठायामिण् न । उन्दी, उन्नः उत्तः । त्राणः त्रातः । घ्राणः घ्रातः । ह्रीणः ह्रीतः ।

चम्पूरामायणे—IV. 11.

तत्र वालिकरनुन्ननिष्पत-
द्दुन्दुभिप्रभवरक्तबिन्दुभिः ।
पाटलं तदभवन्मुनेर्वनं
तस्य वक्त्रमपि रोषरूषितम् ॥ 2696 ॥

**नुन्नः** प्रेरितः । 'नुद प्रेरणे' इति धातोः कर्मणि क्तः । निष्ठातस्य नः ।

माघे—I. 27.

जगत्यपर्याप्तसहस्रभानुना
　　न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसङ्ख्यतां गतै-
　　रतस्त्वया नुत्तमनुत्तमं तपः ॥ 2697 ॥

नुत्तं नुन्नम् । विकल्पान्निष्ठानत्वाभावः ।

नैषधे—III. 67.

इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी ।
चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥2698॥

ह्रीणा लज्जिता । विकल्पान्निष्ठानत्वम् ।

चम्पूरामायणे—IV. 10.

ग.—अथ विदितवृत्तान्तैरमात्यैरभिषेचिते मयि वाली मायाविनं निहत्य खरतरभुजपरिघविघट्टितबिलवदनपिधानस्तरसा रसातलात्पुरं प्रविष्टोऽतीव रुष्टः प्रभ्रष्टाशयं बहुशः प्रणिपतन्तं प्रतिपादितयाथातथ्यममुं जनं निरागसमपि नगरान्निरकासयत् ॥ 2699 ॥

विदितः ज्ञातः । 'विद ज्ञाने' इति वेत्तेः कर्मणि क्तः ।

## ३०४६ । वसतिक्षुधोरिट् । (७. २. ५२)

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । क्षुधितः ।

भट्टिकाव्ये—IX. 39.

पवितो नु गुणैर्वातैश्शीतैः पूत्वा पयोनिधौ ।
बभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम् ॥ 2700 ॥

पत्रिभिरध्युषितं क्षुधित्वा बुभुक्षित्वा । नित्यमिट् ।

अस्मिन्नेव ग्रन्थे श्लो० 1432.उषितेन । कर्तरि क्तः । इट् ।

रघुवंशे—IV. 46.

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ 2701 ॥

अध्युषिताः । 'उपान्वध्याङ्वसः' (सू. 544) इति कर्मत्वम् । अतः कर्मणि क्तः ।

रघुवंशे—II. 19.

वसिष्ठधेनोरनुयायिनं त-
मावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥ 2702 ॥

उपपूर्वो वसधातुर्भोजननिवृत्तावकर्मकः । अतः कर्तरि क्तः ।

रघुवंशे—II. 39.

तस्यालमेषा क्षुधितस्य तृप्त्यै
प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे
सुरद्विषश्चान्द्रमसी सुधेव ॥ 2703 ॥

क्षुधितस्य बुभुक्षितस्य ।

**३०४७ । अञ्चेः पूजायाम् । (७. २. ५३)**

पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । गतौ तु अक्तः ।

भट्टिकाव्ये—XII. 21.

अथाञ्चितोरस्कमुदीर्णदृष्टिः
कृत्वा विवक्षाप्रवणं शरीरम् ।
निवृत्तपाणिर्विवृतोत्तरार्धं
विभीषणोऽभाषत यातुधानान् ॥ 2704 ॥

अञ्चितं पूजितम् । इट् । 'नाञ्चेः पूजायाम्' (सू. 424) इत्यनुनासिकलोपप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 891. उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः आकाशस्थापितदृष्टिः । अञ्चितः सङ्कोचितः दक्षिणोरुर्येन सोऽञ्चितदक्षिणोरुः ।

भट्टिकाव्ये—IX. 40.

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वैव संवहन् ।
दधद्विलुभितं वातैः केसरं वह्निपिङ्गलम् ॥ 2705 ॥

अञ्चितलाङ्गूलः उदञ्चितवालधिः । शिरोऽञ्चित्वैव उदञ्चयैव । पूजार्थे इट् । इयमेवानयोः पूजा यदुन्नमनम् ।

३०४८ । लुभो विमोहने । (७. २. ५४)

लुभः क्त्वानिष्ठयोर्नित्यमिट् स्यान्न तु गार्ध्ये । लुभितः । गार्ध्ये, लुब्धः ।

अस्मिन्नेव ग्रन्थे श्लो० 1214. विलुभितप्लवं व्याकुलितगमनम् । इट् । विमोहनं व्याकुलीकरणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2705. वातैर्विलुभितम् । अनेन विमोहने क्त्वानिष्ठयोर्नित्यमिट् । विमोहनं व्याकुलीकरणमिति काशिका ।

३०४९ । क्लिशः क्त्वानिष्ठयोः । (७. २. ५०)

इड्वा स्यात् । क्लिशितः क्लिष्टः ।

अस्मिन्नेव ग्रन्थे श्लो० 1214. क्लिशित्वा क्लिष्ट्वा । क्लिश्यतेर्विकल्पादिडागमः ।

भट्टिकाव्ये—XXII. 7.

त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिरं द्वन्द्वैर्ययोः क्लिशितवानहम् ॥ 2706 ॥

अहं क्लिशितवान्पीडामनुभूतवान् । निष्ठायामिट् ।

भट्टिकाव्ये—IX, 38.

मायाभिस्सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।
संप्राप्य वानरं भूमौ पपात परिघाहतः ॥ 2707 ॥

**क्लिष्ट्वा** क्लिशित्वा । अक्लिशितक्रियम् । इड्विकल्पः ।

अनर्घराघवे—II. 57.

अलं क्लिशित्वा गुरुमल्पकोऽयं
विधिस्त्वदाज्ञैव गरीयसी नः ।
न कौशिकस्य त्वयि धर्मपुत्रे
पुत्रे मधुच्छन्दसि वा विशेषः ॥ 2708 ॥

**क्लिशित्वा** । इट् ।

३०५० । पूङश्च । (७. २. ५१)

पूङः क्त्वानिष्ठयोरिड्वा स्यात् ।

३०५१ । पूङः क्त्वा च । (१. २. २२)

पूङः क्त्वा निष्ठा च सेट् कित्र स्यात् । पवितः पूतः । क्त्वाग्रहणमुत्तरार्थम् । 'नोपधात्' (सू. 3324) इत्यत्र हि क्त्वैव सम्बध्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 2700. पयोनिधौ **पूत्वा** स्नानेन पवित्वा । **अतः पवितः** पूतस्सन् । क्त्वानिष्ठयोरिड्विकल्पः ।

माघे—XIV. 26.

तत्र मन्त्रपवितं हविः क्रतावश्नतो न वपुरेव केवलम् ।
वर्णसम्पदमतिस्फुटां दधन्नाम चोज्ज्वलमभूद्धविर्भुजः ॥ 2709 ॥

**पवितं** पूतम् । विकल्पादिडागमः ।

**३०५२ । आदिकर्मणि क्तः कर्तरि च । (३. ४. ७१)**

**आदिकर्मणि यः क्तस्स कर्तरि स्यात् । चाद्भावकर्मणोः ।**

३०५४ । विभाषा भावादिकर्मणोः । (७. २. १७)

भावे आदिकर्मणि च आदितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन ।

अस्मिन्नेव ग्रन्थे श्लो० 2104. प्ररुदितः क्रन्दितुमारब्धः । आदिकर्मणि क्तः ।

३०५५ । मृषस्तितिक्षायाम् । (१. २. २०)

सेट् निष्ठा किन्न स्यात् । मर्षितः मर्षितवान् । क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 526. अपमृषितमतितिक्षितम् । तितिक्षायामेव कित्त्वप्रतिषेधः । अतितिक्षायां कित्त्वान्न गुणः ।

३०५६ । उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । (१. २. २१)

उदुपधात्परा भावादिकर्मणोस्सेट् निष्ठा वा किन्न स्यात् । द्युतितम् द्योतितम् । मुदितं मोदितम् ।

३०५८ । क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु । (७. २. १८)

क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु । द्रवद्रव्यसंपृक्तास्सक्तवो मन्थः, मन्थनदण्डश्च । क्षुब्धो मन्थश्चेत् । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम् । निष्ठानत्वमपि निपात्यते । म्लिष्टमविस्पष्टम् । विरिब्धः स्वरः । 'म्लेच्छ रेभृ, इत्यनयोरुपधाया इत्वमपि निपात्यते । फाण्टमनायाससाध्यः कषायविशेषः । माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह । बाढं भृशम् । अन्यत्र तु क्षुभितम् । क्षुब्धो राजा इति त्वागमशास्त्रस्यानित्यत्वात् । स्वनितं ध्वनितं लगितं म्लेच्छितं विरेभितं फणितं बाहितम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2256. क्षुब्धो मन्थे निपातितः ।

अनर्घराघवे—I. 35.

निर्मुक्तशेषधवलैरचलेन्द्रमन्थ-
संक्षुब्धदुग्धमयसागरगर्भगौरैः ।

राजन्निदं बहुलपक्षदलन्मृगाङ्क-
च्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ 2710 ॥

संक्षुब्धो मथितः । पूर्ववत् । ततस्समस्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 1082. आस्वान्ताः आस्वनिताः । 'रुष्यम' (सू. 3069) इतीट्प्रतिषेधविकल्पादुभयरूपता । अनेन निपातनात् मनसि नित्यमनिट् ।

अस्मिन्नेव ग्रन्थे श्लो० 1004. विरिब्धाः स्वराः । अनेन 'रेभृ शब्दे' इति धातोः स्वरे विरिब्धशब्दो निष्ठान्तोऽनिट्त्वेन निपातितः ।

३०५९ । धृषिशसी वैयात्ये । (७. २. १९)

धृष्टः विशस्तः । अन्यत्र धर्षितः विशसितः ।

अस्मिन्नेव ग्रन्थे श्लो० 447. [1]धृष्टम् ।

भट्टिकाव्ये—IX. 18.

तान्दृष्ट्वातिदृढान् धृष्टान्प्राप्तान्परिवृढाज्ञया ।
कष्टं विनर्दतः क्रूरान् शस्त्रघुष्टकरान्कपिः ॥ 2711 ॥

धृष्टो वियातः । धृषेर्निष्ठायामिट्प्रतिषेधः ।

३०६० । दृढः स्थूलबलयोः । (७. २. २०)

स्थूले बलवति च निपात्यते । दृह दृहि वृद्धौ । क्तस्येडभावः । तस्य ढत्वम् । हस्य लोपः । इदितो नलोपश्च । दृहितः । दृंहितोऽन्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 2711. अतिदृढान्बलवतः ।

३०६१ । प्रभौ परिवृढः । (७. २ २१)

वृह वृहि वृद्धौ । निपातनं प्राग्वत् । परिवृहितः । परिवृंहितोऽन्यः ।

---

1. धृष्णमिति पाठे नैतदुदाहरणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2711. परिवृढस्य प्रभोः । निपातनादनिट् । क्त्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 395. भुवः परिवृढाः प्रभवो भूपतयः ।

## ३०६२ । कृच्छ्रगहनयोः कषः । (७. २. २२)

कषो निष्ठाया इट् न स्यात् एतयोरर्थयोः । कष्टं दुःखं तत्कारणञ्च । 'स्यात्कष्टं कृच्छ्रमाभीलम्' I. ix. 3. इत्यमरः । कष्टो मोहः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः । कषितमन्यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2711. कष्टं कृच्छ्रम् । कषेर्निष्ठायामिडभावः ।

## ३०६३ । घुषिरविशब्दने । (७. २. २३)

घुषिर्निष्ठायामनिट् स्यात् । घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2711. शस्त्रैः शस्त्रघर्षणैः घुष्टकरान् शब्दायमानपाणीन् । घुषेऽर्विशब्दनात् स्वाभिप्रायाविष्करणात् अन्यत्र शब्दनमात्रेऽनेन निष्ठायामिट्प्रतिषेधः ।

## ३०६४ । अर्देस्संनिविभ्यः । (७. २. २४)

एतत्पूर्वादर्देर्निष्ठाया इट् न स्यात् । समर्णः न्यर्णः व्यर्णः । अर्दितोऽन्यः ।

भट्टिकाव्ये—IX. 19.

अन्यर्णोगिरिकूटाभानभ्यर्णानार्दिदद् द्रुतम् ।
वृत्तशास्त्रान्महारम्भानदान्तांस्त्रिदशैरपि ॥ 2712 ॥

नितरामर्दितो न्यर्णः । स न भवतीत्यन्यर्णः । स्वयं परैरहिंसितः । अर्द हिंसायामिति धातोर्निष्ठा । अनेनेट्प्रतिषेधः ।

## ३०६५ । अभेश्चाविदूर्ये । (७. २. २५)

अभ्यर्णम् । नातिदूरमासन्नं वा ।

अस्मिन्नेव ग्रन्थे श्लो० 2712. अभ्यर्णानविदूरान् । निष्ठायामाविदूर्यार्थे इट्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1024. अभ्यर्णमविदूरम् आसन्नमित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1990. अभ्यर्णम् ।

३०६६ । णेरध्ययने वृत्तम् । (७. २. २६)

ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक् चाधीयमानेऽर्थे ।

अस्मिन्नेव ग्रन्थे श्लो० 2712. वृत्तशास्त्रोऽधीताम्नवेदः । अनेन निपातः ।

३०६७ । शृतं पाके । (६. १. २७)

श्रातिश्रपयत्योः क्ते शृभावो निपात्यते क्षीरहविषोः पाके । शृतं क्षीरम् । स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः । क्षीरहविर्भ्यामन्यत्तु श्राणं श्रपितं वा ।

३०६८ । वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः । (७. २. २७)

एते णिचि निष्ठान्ता वा निपात्यन्ते । पक्षे, दमितः शमितः पूरितः दासितः स्पाशितः छादितः ज्ञापितः ।

अस्मिन्नेव ग्रन्थे श्लो० 2712. त्रिदशैरप्यदान्तान् अदमितान् । दमेर्ण्यन्तात् निष्ठायामिडभावणिलोपनिपातः ।

भट्टिकाव्ये—IX. 20.

दमितारिः प्रशान्तौजा नादापूरितदिङ्मुखः ।
जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ 2713 ॥

दमिता अरयो येन स दमितारिः । प्रशान्तं शत्रूणामोजो येन स प्रशान्तौजाः । नादापूरितानि दिङ्मुखानि येन सः नादापूरितदिङ्मुखः । दमिशमिपुरीणां ण्यन्तानां निष्ठायां विकल्पेनेट्प्रतिषेधनिपातनादुभयरूपता ।

किरातार्जुनीये—XII. 54.

कच्छान्ते सुरसरितो निधाय सेना-
मन्वीतः स कतिपयैः किरातवर्यैः ।
प्रच्छन्नस्तरुगहनैस्स गुल्मजालै-
र्लक्ष्मीवाननुपदमस्य सम्प्रतस्थे ॥ 2714 ॥

तरुगहनैः प्रच्छन्नः छादितः ।

माघे—IV. 19.

आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालश्रृङ्गम् ।
मूर्ध्नि स्फुरत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥ 2715 ॥

आच्छादितानि ।

अस्मिन्नेव ग्रन्थे श्लो० 2633. शमिततापं शान्ततापम् । उभयरूपता ।

३०६९ । रुष्यमत्वरसंघुषास्वनाम् । (७. २. २८)

एभ्यो निष्ठाया इड्वा । रुषितः रुष्टः । आन्तः अमितः । तूर्णः त्वरितः । संङ्घुष्टः संघुषितः । आस्वान्तः आस्वनितः ।

अस्मिन्नेव ग्रन्थे श्लो० 2713. रुषितः क्रुद्धः । रुष्टान् क्रुद्धान् । तूर्णमागतान् । त्वरितः त्वरावान् । विकल्पादुभयरूपता ।

अस्मिन्नेव ग्रन्थे श्लो० 1082. सङ्घुष्टैः सङ्घुषितैः । आक्रन्दनैरित्यर्थः । अभ्यमितत्रासं प्राप्तभयम् । अम गत्यादिषु । आस्वान्ता आस्वनिताः । सङ्घुष्टाभ्यमितास्वान्ताः विकल्पितेटः । 'क्षुब्धस्वान्त' (सू. 3058) इति निपातनान्मनसि नित्यमनिट् । मा माने, माङ् माने च । निष्ठा । मितमल्पम् । अमितमनल्पम् । 'द्यति' (सू. 3074) इति इकारोऽन्तादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 659. निमितानि निक्षिप्तानि । 'डुमिञ् प्रक्षेपणे' इति धातोः कर्मणि क्तः ।

३०७० । हृषेर्लोमसु । (७. २. २९)

हृषेर्निष्ठायां इड्वा स्यात् लोमसु विषये । हृष्टं हृषितं लोम ।

वा० । विस्मितप्रतिघातयोश्च । (4417.)

हृष्टो हृषितो मैत्रः । विस्मितः प्रतिहतो वेत्यर्थः । अन्यत्र तु, हृषु अलीके । उदित्वान्निष्ठायां नेट् । हृष तुष्टौ । इट् ।

भट्टिकाव्ये—IX. 22.

भयसंहृष्टरोमाणस्ततस्तेऽपचितत्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयम् ॥ 2716 ॥

संहृष्टरोमाणः भयोद्गतरोमाञ्चाः । विकल्पादनिट्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1986. हृषिततनुरुहा । इडागमः ।

३०७१ । अपचितश्च । (७. २. ३०)

चायेर्निपातोऽयं वा । अपचितः अपचायितः ।

अस्मिन्नेव ग्रन्थे श्लो० 2716. अपचितत्विषोऽपचायितत्विषः । नष्टचेतस इत्यर्थः । पाठान्तरं अपचितद्विषः । अपचितानां पूजितानामृषीणां शत्रवः । निपातनाच्चायतेर्निष्ठायां विकल्पादनिट्त्वम् ।

माघे—VII. 61.

अपचितकुसुमा विहाय वल्ली-
र्युवतिषु कोमलमाल्यमालिनीषु ।
पदमुपदधिरे कुलान्यलीनां
न परिचयो मलिनात्मनां प्रधानम् ॥ 2717 ॥

अपचितानि युवतिभिरुपात्तानि कुसुमानि । पूर्ववत् ।

३०७२ । प्यायः पी । (६. १. २८)

पी वा स्वान्निष्ठायाम् । व्यवस्थितविभाषेयम् । तेन स्वाङ्गे नित्यम् । पीनं मुखम् । अन्यत्र प्यानः । पीनः स्वेदः ।

वा० । सोपसर्गस्य न । ( 5065. )

प्रप्यानः ।

वा० । आङ्पूर्वस्यान्धूधसोस्स्यादेव । ( 3461. )

आपीनोऽन्धुः । आपीनमूधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1270. आप्यानं स्थूलं स्कन्धकण्ठांसम् । 'प्यैङ् वृद्धौ' इत्यस्मादाङ्पूर्वात् 'संयोगादेः' ( सू. 3017 ) इति निष्ठातो नः । ओ प्यायी वृद्धावित्यस्य वा रूपम् । 'ओदितश्च' ( सू. 3019 ) इति निष्ठानत्वम् । पीभावस्तु आङ्पूर्वस्यान्धूधसोर्नित्यमिति नियमान्न भवति । सोपसर्गस्य न पीभावः ।

रघुवंशे—II. 18.

आपीनभारोद्वहनप्रयत्नात्
गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।
उभावलञ्चक्रतुरञ्चिताभ्यां
तपोवनावृत्तिपथं गताभ्याम् ॥ 2718 ॥

आपीनमूधः । अत्र पीभावः ।

शतकत्रये—III. 11.

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ 2719 ॥

पीनौ पयोधरौ । स्वाङ्गे नित्यं पीभावः ।

३०७४ । द्यतिस्यतिमास्थामित्ति किति । ( ७. ४. ४० )

एषामिकारोऽन्तादेशः स्यात्तादौ किति । दो अवखण्डने, दितः । षोऽन्तकर्मणि, सितः । मा, माङ्, मेङ्, मितः । ष्ठा, स्थितः ।

अस्मिन्नेव ग्रन्थे ग. 2682. अपरिमितस्वेदशीकरनिकरैः ।

अस्मिन्नेव ग्रन्थे श्लो० 10. स्थितः । स्थिताम् ।

३०७५ । शाच्छोरन्यतरस्याम् । (७. ४. ४१)

शितः शातः । छितः छातः ।

अस्मिन्नेव ग्रन्थे श्लो० 2151. शिताग्रं तीक्ष्णमुखं सृणिम् । शो तनूकरणे । विकल्पादिकारोऽन्तादेशः ।

माघे—I. 45.

पुराणि दुर्गाणि निशातमायुधं
बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकफलानि नाकिनां
गणैर्यमाशङ्क्य तदादि चक्रिरे ॥ 2720 ॥

आयुधं च निशातं निशितम् । 'शो तनूकरणे' इति धातोः क्तः । विकल्पात्पक्षे आत्वम् ।

माघे—XVIII. 71.

सन्दानान्तादस्त्रिभिः शिक्षिताश्वै-
राविश्याधश्शातशस्त्रावलूनाः ।
कूर्मौपम्यं व्यक्तमन्तर्नदीना-
मैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीनाम् ॥ 2721 ॥

शातं निशितम् । विकल्पादित्वाभावः ।

माघे—XIX. 5.

रामे रिपुश्शरानाजिमहेष्वास विचक्षणे ।
कोपादथैनं शितया महेष्वा स विचक्षणे ॥ 2722 ॥

शितया शातया । विकल्पादित्वम् ।

३०७६ । दधातेर्हिः । (७. ४. ४२)

तादौ किति । अभिहितं निहितम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1293. निहितम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1024. पुरो धीयत इति पुरोहितः । निष्ठा । हिरादेशः ।

३०७७ । दो दद्घोः । (७. ४. ४६)

घुसंज्ञकस्य दा इत्यस्य दद् स्यात्तादौ किति । दत्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 1293. गुरुणा दत्तम् ।

३०७८ । अच उपसर्गात्तः । (७. ४. ४७)

अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति । प्रत्तः । अवत्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 648. प्रत्तं दत्तम् ।

अस्मिन्नेव ग्रन्थे श्लो० 348. प्रियैः प्रत्तं दत्तम् ।

अस्मिन्नेव ग्रन्थे श्लो० 334. श्रियं प्रत्तवान् प्रकर्षेण दत्तवान् । प्रपूर्वाद्ददातेः क्तवतुप्रत्ययः ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते ॥ [ इति भाष्यम ]

चशब्दाद्यथाप्राप्तम् ।

३०८१ । वाक्रोशदैन्ययोः । (६. ४. ६१)

क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव । क्षितायुर्वा । क्षीणोऽयं तपस्वी । क्षितो वा । 'निष्ठायामण्यदर्थे' (सू. 3014) इति दीर्घः । 'क्षियो दीर्घात्' (सू. 3015) इति निष्ठातस्य नः । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया ।

### ३०८२ । निनदीभ्यां स्नातेः कौशले । (८. ३. ८९)

आभ्यां स्नातेस्सस्य षः स्यात् कौशले गम्ये । निष्णातः शास्त्रेषु । नद्यां स्नातीति नदीष्णः ।

अस्मिन्नेव ग्रन्थे श्लो० 2148. चारकर्मणि निष्णातः कुशलः । षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1136. आतिथ्ये निष्णान्तीति आतिथ्यनिष्णाः आतिथ्यकुशलाः । षत्वम् । 'आतश्चोपसर्गे' (सू. 2898) इति कः ।

अस्मिन्नेव ग्रन्थे श्लो० 1704. नद्यां स्नान्तीति नदीष्णान् । षत्वम् । 'सुपि स्थः' (सू. 2916) इत्यत्र सुपीति योगविभागात्कः ।

रघुवंशे—XVI. 75.

ततस्समाज्ञापयदाशु सर्वा-
नानायिनस्तद्विचये नदीष्णान् ।
बन्ध्यश्रमास्ते सरयूं विगाह्य
तमूचुरम्लानमुखप्रसादाः ॥ 2723 ॥

नद्यां स्नान्ति कौशलेनेति नदीष्णान् । षत्वं कः । पूर्ववत् ।

### ३०८३ । सूत्रं प्रतिष्णातम् । (८. ३. ९०)

प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । अन्यत्र प्रतिस्नातम् ।

भट्टिकाव्ये—IX. 83.

सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषाम् ।
स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥ 2724 ॥

सुष्ठु प्रतिष्णातं शुद्धं सूत्रं येषां तेषां सुप्रतिष्णातसूत्राणाम् ।

### ३०८४ । कपिष्ठलो गोत्रे । (८. ३. ९१)

कपिष्ठलेनामकस्य पुत्रः कापिष्ठलिः । गोत्रे किम् । कपीनां स्थलम् कपिस्थलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2724. कपिष्ठलः । कपिष्ठलो नाम गोत्रप्रवर्तकः कश्चिदृषिः । निपातनात्षत्वम् ।

३०८५। विकुशमिपरिभ्यः स्थलम्। (८. ३. ९६)

एभ्यः स्थलस्य सस्य षः स्यात्। विष्ठलं कुष्ठलं शमिष्ठलं परिष्ठलम्।

अस्मिन्नेव ग्रन्थे श्लो० 1119. कुष्ठले भूतले। षत्वम्।

३०८६। गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च।
(३. ४. ७२)

एभ्यः कर्तरि क्तः स्यात् भावकर्मणोश्च। गङ्गां गतः। गङ्गां प्राप्तः। ग्लानस्सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितः। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः। राममनुजातः। गरुडमारूढः। विश्वमनुजीर्णः। पक्षे प्राप्ता गङ्गा तेनेत्यादि।

अस्मिन्नेव ग्रन्थे श्लो० 1805. दिलीपेऽपि दिवं याते। कर्तरि क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 2255. आश्लिष्टा भूमिर्येन स आश्लिष्टभूमिः। कर्मणि क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 527. मणिरत्नाधिशयितं मणिरत्नैरधिशयितम्। कर्मणि क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 1494. अधिरूढेन। कर्तरि क्तः। महीरुहा। सुराधिपेनाधिष्ठिता। कर्मणि क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 1432. उषितेन वसता। वसेः कर्तरि क्तः। 'मतिबुद्धि' (सू. 3089) इत्यादिना सूत्रेण चकाराद्वर्तमानार्थता।

अस्मिन्नेव ग्रन्थे श्लो० 2701. मलयाद्रेरुपत्यकाः बलैरध्युषिताः। 'उपान्वध्याङ्वसः' (सू. 544) इति कर्मत्वम्। अतः कर्मणि क्तः।

रघुवंशे—VI. 78.

असौ कुमारस्तमजोऽनुजात-
स्त्रिविष्टपस्येव पतिं जयन्तः।

गुर्वीं धुरं यो भुवनस्य पित्रा
धुर्येण दम्यस्सदृशं बिभर्ति ॥ 2725 ॥

अजः तं रघुमनुजातः। तस्माज्जात इत्यर्थः। कर्तरि क्तः। सोपसृष्टत्वात्सकर्मकत्वम्। आह चात्र सूत्रे वृत्तिकारः श्लिषादयस्सोपसृष्टास्सकर्मका भवन्तीति।

अस्मिन्नेव ग्रन्थे श्लो० 1822. दिनकरे उदयगिरिशिखरमधिरूढे। कर्तरि क्तः।

३०८७। क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः। (३. ४. ७६)

एभ्योऽधिकरणे क्तः स्यात्। चाद्यथाप्राप्तम्। ध्रौव्यं स्थैर्यम्।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥

'अधिकरणवाचिनश्च' (सू. 626) इति षष्ठी। 'अधिकरणवाचिना च' (सू. 707) इति न समस्यते।

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च। आसितो मुकुन्दः। आसितं तेन। गत्यर्थेभ्यः कर्तरि कर्मणि च। रमापतिरिदं यातः। तेनेदं यातम्। भुजेः कर्मणि। अनन्तेनेदं भुक्तम्। कथं भुक्ता ब्राह्मणा इति। भुक्तं भावे क्तः। तदस्ति एषामिति मत्वर्थीयोऽच्।

अस्मिन्नेव ग्रन्थे श्लो० 528. रामस्य षष्ठी। शेतेऽस्मिन्निति शयितं शयनस्थानम्। ध्रौव्ये अधिकरणे क्तः। भुंक्तेऽस्मिन्निति भुक्तं भोजनस्थानम्। प्रत्यवसानार्थे अधिकरणे क्तः। तिष्ठत्यस्मिन्निति स्थितं निवासस्थानम्। ध्रौव्यार्थेऽधिकरणे क्तः। प्रकामति गच्छत्यस्मिन्निति प्रक्रान्तं चङ्क्रमणस्थानम्। गत्यर्थेऽधिकरणे क्तः। सर्वत्र 'अधिकरणवाचिना' (सू. 707) इति निषेधान्न समासः। जल्पितं। हसितम्। भावे क्तः। 'न लोक' (सू. 627) इति निषेधेऽपि नपुंसके भाव उपसंख्यानमिति शेषे षष्ठी।

अस्मिन्नेव ग्रन्थे श्लो० 527. मणिरत्नानामधिशयितमधिष्ठानमिति ध्रौव्येऽधिकरणे क्त इति व्याख्यायां वर्तते। तदा न समासः स्यात्। अतः कर्मणि क्तः। मणिरत्नैरधिशयितं मणिरत्नाधिशयितमिति तृतीयासमासः मृगाध्यासितशाद्वलानीतिवत्।

३०८९ । मतिबुद्धिपूजार्थेभ्यश्च । (३. २. १८८)

वर्तमाने क्तः । मतिरिहेच्छा बुद्धेः पृथगुपादानात् । राज्ञां मत इष्टः । तैरिष्यमाण इत्यर्थः । 'क्तस्य च वर्तमाने' (सू. 625) इति षष्ठी । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । 'शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि' इत्यादि । 'क्तेन च' (सू. 706) इति न समस्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 714. अहमेव महीपतेः मतः महीपतिना मन्यमानः । वर्तमाने क्तः । षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 514. रामस्य संमतं रामेण संमन्यमानम् । वर्तमाने क्तः । 'क्तस्य च वर्तमाने' (सू. 625) इति 'न लोक' (सू. 627) इति प्रतिषेधबाधेन षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 196. जनमता जनेनावबुद्धा । 'मनु अवबोधने' इत्यस्य भूते निष्ठायां रूपम् । 'न लोक' (सू. 627.) इति षष्ठीप्रतिषेधात्कर्तरि तृतीया । तस्याश्च 'कर्तृकरणे' (सू. 694) इति समासः । अनेन वर्तमाने क्तप्रत्यये तु 'क्तस्य च वर्तमाने' (सू. 625) इति षष्ठ्यां 'क्तेन च पूजायां' (सू. 706) इति समासप्रतिषेधः स्यात् ।

कुमारसंभवे—IV. 36.

तदनुज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥2726॥

ते तव विदितं खलु । वर्तमाने क्तः । षष्ठी ।

कुमारसंभवे—VI. 26.

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः ॥ 2727 ॥

वः युष्माकं विदितम् । बुद्ध्यर्थत्वात् वर्तमाने क्तः । तद्योगात् षष्ठी । समासश्च न ।

अस्मिन्नेव ग्रन्थे श्लो० 524. तव न **विदितम्** । त्वया न ज्ञायमानमित्यर्थः । वर्तमाने क्तः । षष्ठी । समासो न ।

अस्मिन्नेव ग्रन्थे श्लो० 715. भुवनेषु विदिते प्रसिद्धे **भुवनविदिते** । 'निष्ठा' (सू. 3013) इति भूतार्थे क्तः । 'मतिबुद्धि' (सू. 3089) इत्यादिना क्ते 'क्तस्य च वर्तमाने' (सू. 625) इति षष्ठ्यां 'क्तेन च पूजायाम्' (सू. 706) इति निषेधात्समासो न स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 521. सतामपूजितम् । सद्भिरपूज्यमानमित्यर्थः । वर्तमाने क्तः । षष्ठी । समासप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 522. महीभृतां **महितं** पूजितम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 523. ते तव न **ज्ञातम्** । त्वया न ज्ञायत इत्यर्थः । पूर्ववत् ।

माघे—IV. 33.

कुशेशयैरत्र जलाशयोषिता
मुदा रमन्ते कलभा विकस्वरैः ।
प्रगीयते सिद्धगणैश्च योषिता-
मुदारमन्ते कलभाविकस्वरैः ॥ 2728 ॥

**जलाशयोषिता** ह्रदेषु वसन्तः । 'गत्यर्थाकर्मक' (सू. 3086) इत्यादिना वसेः कर्तरि क्तः । अत्र सूत्रे चकारात् वर्तमानार्थत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1432. मनस्सु चित्तेषु **उषितेन** वसता । पूर्ववत्कर्तरि क्तः । 'वसतिक्षुधोः' (सू. 3046) इतीडागमः । पूर्ववद्वर्तमानार्थता ।

अस्मिन्नेव ग्रन्थे श्लो० 2439. अभिप्र**नृत्ता** नृत्यन्तीः । 'गत्यर्थ' (सू. 3086) इत्यादिना कर्तरि क्तः । अत्र सूत्रे चकाराद्वर्तमानार्थत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 526. अच्युतार्चनं यस्याप**मृषितं** अतितिक्षितम् । असोढमित्यर्थः । 'मृष तितिक्षायां' इति धातोः कर्मणि क्तः । उपसर्गवशाद्विपरीतार्थता । अत एव 'मृषस्तितिक्षायाम्' (सू. 3055) इति तितिक्षायामेव कित्त्वप्रतिषेधादतिति-

क्षायां क्त्वान्न गुणः। अत्र सूत्रे चकाराद्वर्तमानार्थता । 'क्तस्य च वर्तमाने' (सू. 625) इति षष्ठी।

किरातार्जुनीये—X. 5.

अवचयपरिभोगवन्ति हिंस्रैः
सहचरितान्यमृगाणि काननानि।
अभिदधुरभितो मुनिं वधूभ्य-
स्समुदितसाध्वसविक्लवं च चेतः ॥ 2729 ॥

सहचरितास्सह चरन्तः। कर्तरि क्तः।

**३०९०। नपुंसके भावे क्तः। (३. ३. ११४)**

क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्। जल्पितम्। शयितम्। हसितम्। 'न लोक' (सू. 627) इति षष्ठीप्रतिषेधात्तृतीया। 'नपुंसके भाव उपसंख्यानं' इति षष्ठी तु शेषत्वविवक्षायाम्।

नैषधे—I. 48.

उरोभुवा कुम्भयुगेन जृम्भितं
नवोपहारेण वयःकृतेन किम्।
त्रपासरिद्दुर्गमपि प्रतीर्य सा
नलस्य तन्वी हृदयं विवेश यत् ॥ 2730 ॥

कुम्भयुगेन। कर्तरि तृतीया। जृम्भितं जृम्भणम्। भावे क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 1890. अनूरुसारथेः सूर्यस्य **गतम्**। शेषत्वविवक्षायां षष्ठी। गम्लृ गतौ। भावे क्तः। जनैरीक्षितम् कर्तरि तृतीया। भावे क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 613. **पराक्रान्तं** पराक्रमः। भावे क्तः।

अस्मिन्नेव ग्रन्थे श्लो० 821. **आशित** इत्याङ्पूर्वादश्नातेरविवक्षिते कर्मणि कर्तरि क्तः। **उत्क्रुष्टं** किलकिलायितम्। **वल्गितं** धावनम्। **शयितं स्थितञ्च**। सर्वत्र भावे निष्ठा। कपीनामिति शेषत्वविवक्षायां षष्ठी।

अस्मिन्नेव ग्रन्थे श्लो० 528. जल्पितम् । हसितम् । भावे क्तः । रामस्येति पूर्ववत् षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 2494. मन्दगतो मन्दगमनः । भावे क्तः ।

३०९१ । सुयजोर्ङ्वनिप् । (३. २. १०३)

सुनोतेर्यजेश्च ङ्वनिप्स्याद्भूते । सुत्वा सुत्वानौ । यज्वा यज्वानौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2684. यज्वभिर्विधिवदिष्टवद्भिः । सुत्वभिः सोमं सुतवद्भिः । भूते ङ्वनिप् ।

अस्मिन्नेव ग्रन्थे श्लो० 860. सुत्वनः सुतवतः । ङ्वनिप् ।

अस्मिन्नेव ग्रन्थे श्लो० 630. यज्वभिर्विधिवदिष्टवद्भिः । 'यज्वा तु विधिनेष्टवान्' II. vii. 8. इत्यमरः । ङ्वनिप् ।

३०९२ । जीर्यतेरतृन् । (३. २. १०४)

भूत इत्येव । जरन् जरन्तौ जरन्तः । वासरूपन्यायेन निष्ठापि । जीर्णः जीर्णवान् । शतृ, जीर्यन् ।

अस्मिन्नेव ग्रन्थे श्लो० 2684. जरद्भिर्वृद्धैः । अतृन्प्रत्ययः ।

३०९३ । छन्दसि लिट् । (३. २. १०५)

३०९४ । लिटः कानज्वा । (३. २. १०६)

३०९५ । क्वसुश्च । (३. २. १०७)

इह भूतसामान्ये छन्दसि लिट् । तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम् । कवयस्तु 'तं तस्थिवांसंनगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि बहुलं प्रयुञ्जते ।

रघुवंशे—XI. 19.

बाणभिन्नहृदया निपेतुषी
सा स्वकाननभुवं न केवलाम् ।

विष्टपत्रयपराजयस्थिरां
रावणश्रियमपि व्यकम्पयत् ॥ 2731 ॥

निपेतुषी निपतिता । अनेन क्वसुप्रत्ययः । 'उगितश्च' (सू. 455) इति ङीप् ।

३०९६ । वस्वेकाजाद्धसाम् । (७. २. ६७)

इट् । एकाच्, आरिवान् । आत्, ददिवान् । जक्षिवान् ।

३०९७ । भाषायां सदवसश्रुवः । (३. २. १०८)

सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्, तस्य च नित्यं क्वसुः । 'निषेदुषीमासनबन्धधीरः' । 'अध्यूषुषस्तामभवज्जनस्य' । शुश्रुवान् ।

भट्टिकाव्ये—VI. 138.

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम् ।
ऊषुषां परदारैश्च सार्धं निधनमैषिषुः ॥ 2732 ॥

उपसेदुषामुपसन्नानाम् । ऊषुषाम् । उभयत्रापि क्वसुः ।

अस्मिन्नेव ग्रन्थे श्लो० 533. अहं शुश्रुवानश्रौषम् । क्वसुः ।

अस्मिन्नेव ग्रन्थे श्लो० 10. निषेदुषीम् । क्वसुः । 'उगितश्च' (सू. 455) इति ङीप् । 'सदिरप्रतेः' (सू. 2271) इति सस्य षः ।

अस्मिन्नेव ग्रन्थे श्लो० 2304. उपसेदुषः उपसन्नान् । सदेर्लिटः क्वसुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1041. आसेदुषः प्राप्तान् । क्वसुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2496. प्रोषिवान् प्रोषितः । क्वसुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1708. निषेदिवान् उपविष्टः । क्वसुः । षत्वम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 534. स शुश्रुवान् श्रुतवान् । लिटः क्वसुः ।

भट्टिकाव्ये—XIV. 22.

रावणश्शुश्रुवाञ्छत्रून् राक्षसानभ्युपेयुषः ।
स्वयं युयुत्सयाञ्चक्रे प्राकाराग्रे निषेदिवान् ॥ 2733 ॥

रावणः शुश्रुवान्प्राकाराग्रे निषेदिवान् निषण्णः । क्वसुः ।

रघुवंशे—XIV. 46.

स शुश्रुवान्मातरि भार्गवेण
पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं त-
दाज्ञा गुरूणां ह्यविचारणीया ॥ 2734 ॥

शुश्रुवान् श्रुतवान् ।

३०९८ । उपेयिवाननाश्वाननूचानश्च । (३. २. १०९)

एते निपात्यन्ते । उपपूर्वादिणो भाषायामपि भूतमात्रे लिङ् । तस्य नित्यं क्वसुः । उपेयिवान् । 'उपेयुषः स्वामपि मूर्तिमग्र्याम्' । उपेयुषी । उपेत्यविवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । 'धृतजयधृतेरनाशुषः' इति अनुपूर्वाद्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः ।

अस्मिन्नेव ग्रन्थे श्लो० 397. मातामहावासमुपेयिवांसम् उपगतम् । क्वस्वन्तो निपातः ।

भट्टिकाव्ये—IV. 1.

निवृत्ते भरते धीमानत्रे रामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥ 2735 ॥

ईयिवान् प्राप्तः । उपेयिवानिति क्वस्वन्तनिपातने उपोपसर्गाभ्यासस्यातन्त्रत्वात् अन्योपसृष्टोऽनुपसृष्टो वा साधुरेव ।

अस्मिन्नेव ग्रन्थे श्लो० 2733. अभ्युपेयुषः अभिमुखमुपगतवतः । क्वसुः ।

किरातार्जुनीये—IV. 32.

जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठं तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसा-
वुपैति मन्त्रैरिव संहिताहुतिः ॥ 2736 ॥

तनयैर्वत्सैरुपेयुषी सङ्गता । क्वसुः । 'उगितश्च' (सू. 455) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 71. उपेयुषी मिलिता । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1722. [1]प्रेयुषी प्रेता मृता । क्वसन्तनिपातने ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 662. विकासमुपेयुषी उपगते विलोचने । क्वसुः ।

भट्टिकाव्ये—III. 19.

प्रतीयुषा पूर्वहशो जनेन द्यौर्भानुशीतांशुविनाकृतेव ।
राजन्यनक्षत्रसमन्वितापि शोकान्धकारक्षतसर्वचेष्टा ॥ 2737 ॥

प्रतीयुषा । क्वसुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1701. अनाशुषः । नञ्पूर्वादश्नातेः क्वसन्तनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 533. अत्रा भुक्तां श्रियमुपेयिवान् सङ्गमिवान् । अनूचानैः वेदविद्भिः । इण्वची क्वसुकानजन्तौ निपातितौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1672. अनूचानाः साङ्गवेदप्रवक्तारः । अनुपूर्वाद्वचेः कानजन्तो निपातः ।

## ३०९९ । विभाषा गमहनविदविशाम् । (७. २. ६८)

एभ्यो वसोरिड्वा । जग्मिवान् जगन्वान् । जघ्निवान् जघन्वान् । विविदिवान् विविद्वान् । विविशिवान् विविश्वान् । विशिना साहचर्याद्विन्दतेर्ग्रहणम् । वेत्तेस्तु विविद्वान् ।

---

1. इदं 'प्रेयुषी च निशाचरी' इति पाठाभिप्रायेण ।

वा० । दृशेश्च । ( 4452. )

ददृशिवान् ददृश्वान् ।

३१०० । लटः शतृशानचावप्रथमासमानाधिकरणे । ( ३. २. १२४)

शबादि । पचन्तं चैत्रं पश्य ।

३१०१ । आने मुक् । ( ७. २. ८२ )

मुमागमः स्यादाने परे । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहण-मधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् ब्राह्मणः ।

वा० । माङ्याक्रोश इति वाच्यम् । ( 2109. )

'मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति' । 'माङि लुङ्' (सू. 2216) इति प्राप्ते एतद्वचनसामर्थ्याल्लट् ।

३१०२ सम्बोधने च । ( ३. २. १२५ )

हे पचन् । हे पचमान ।

अस्मिन्नेव ग्रन्थे श्लो० 3. वृषं पुरुषमात्मार्थमिच्छतीति वृषस्यन्ती कामुकी । 'वृषस्यन्ती तु कामुकी' II. vi. 9. इत्यमरः । 'सुप आत्मनः क्यच्' (सू. 2657) इति क्यच् । 'अश्वक्षीर' (सू. 2662) इत्यसुगागमः । लटः शतृ । 'उगितश्च' (सू. 455) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 531. बहुशैवलक्ष्मतां दधतः । परस्मैपदात् शतृ । 'न लोक' (सू. 627) इति निषेधात्कर्मणि द्वितीया ।

माघे—I. 5.

दधानमम्भोरुहकेसरद्युती-
जटाश्शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव ॥ 2738 ॥

जटाः । द्वितीया । दधानं दधतम् । आत्मनेपदाल्लटश्शानच् ।

माघे—IV. 6.

छायां निजस्त्रीचटुलालसानां
मदेन किञ्चिच्चटुलालसानाम् ।
कुर्वाणमुत्पिञ्जलजातपत्रै-
र्विहङ्गमानां जलजातपत्रैः ॥ 2739 ॥

छायां कुर्वाणम् । छायामिति द्वितीया । कुर्वाणमित्यात्मनेपदाल्लटश्शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 452. कुळस्य कुरसुतसदसः । अत्र शेषे षष्ठी । अनुकुर्वन् । परस्मैपदाल्लटः शतृ ।

माघे—II. 45.

माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ 2740 ॥

माजीवन् गर्हितजीवी । 'माङ्याक्रोशे' (पा. 2109. सू. 3101.) इति लटः शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. हे द्विषन् ।

३१०३ । लक्षणहेत्वोः क्रियायाः । (३. २. १२६)

शतृशानचौ । शयाना भुञ्जते यवनाः । अर्जयन्वसति ।

अस्मिन्नेव ग्रन्थे श्लो० 1733. वानरेन्द्रः सुग्रीवः समन्तात्कपिभिः नामग्राहं स्तूयमानः । स्तौतेः कर्मणि लटः लक्षणे शानच् । विराजन् दीप्यमानः । लक्षणे शतृ । किष्किन्धाद्रिं न्यविशत ।

माघे—VII. 26.

असकलकलिकाकुलीकृतालि-
स्खलनविकीर्णविकासिकेसराणाम् ।
मरुदवनिरुहां रजो वधूभ्य-
स्समुपहरन्विचकार कोरकाणि ॥ 2741 ॥

मरुत् वनानिलः अवनिरुहां रजो वधूभ्यस्समुपहरन् प्रयच्छन् । धनमर्जयन् वसतीतिवत् हेत्वर्थे शतृप्रत्ययः । कोरकाणि विचकार । विकासयामासेत्यर्थः ।

माघे—XIV. 28.

उन्नमन् सपदि धूम्रयन्दिशः
सान्द्रतां दधदधःकृताम्बुदः ।
द्यामियाय दहनस्य केतनः
कीर्तयन्निव दिवौकसां प्रियम् ॥ 2742 ॥

उन्नमन् दिशो धूम्रयन् दहनस्य केतनः धूमो दिवौकसां प्रियं कीर्तयन् कथयन्निव कीर्तनहेतोरिव । कीर्तनार्थमिवेत्यर्थः । कीर्तयन्निति हेत्वर्थे शतृ । द्यामियाय प्राप ।

## ३१०४ । ईदासः । (७. २. ८३)

आसः परस्यानस्य ईत् स्यात् । आसीनः ।

अस्मिन्नेव ग्रन्थे श्लो० 17. तटभुवि आसीना उपविष्टा । आसेः कर्तरि शानच् । ईकारः ।

## ३१०५ । विदेः शतुर्वसुः । (७. १. ३६)

वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन् विद्वान् । स्त्रियां, विदन्ती विदुषी ।

अस्मिन्नेव ग्रन्थे श्लो० 13. वेत्तीति विदुषी विशेषज्ञा । शतुर्वसुः । 'उगितश्च' (सू. 455) इति ङीप् ।

## ३१०६ । तौ सत् । (३. २. १२७)

तौ शतृशानचौ सत्संज्ञौ स्तः ।

## ३१०७ । लटः सद्वा । (३. ३. १४)

करिष्यन्तं करिष्यमाणं पश्य । हे करिष्यन् । अर्जयिष्यन्वसति । करिष्यतीति करिष्यन् ।

अस्मिन्नेव ग्रन्थे श्लो० 399. पुण्यवनाय प्रयास्यतः तपोवनं गमिष्यतः । लटः शतृ । 'गत्यर्थकर्मणि' (सू. 585) इत्यादिना कर्मणि चतुर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 2304. प्रस्थास्यमानौ प्रवास्यन्तौ । 'समव' (सू. 2689) इत्यात्मनेपदम् । लटः शानच् ।

अस्मिन्नेव ग्रन्थे श्लो० 532. यातुधानान् घातयिष्यन् । हन्तेर्ण्यन्तात् लटः शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 1538. वर्त्स्यन्तौ वर्धिष्यमाणौ । लटः शतृ । 'वृद्भ्यः स्यसनोः' (सू. 2347) इति विभाषा परस्मैपदम् । 'न वृद्भ्यः' (सू. 2348) इतीडभावः ।

३१०८ । पूङ्यजोः शानन् । (३. २. १२८)

वर्तमाने । पवमानः । यजमानः ।

अस्मिन्नेव ग्रन्थे श्लो० 853. पवत इति पवमानो वायुः । शानन् ।

अस्मिन्नेव ग्रन्थे श्लो० 26. यजमानो यष्टा । यजेः शानन्प्रत्ययः ।

३१०९ । ताच्छील्यवयोवचनशक्तिषु चानश् । (३. २. १२९)

एषु द्योत्येषु कर्तरि चानश् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रुं निघ्नानः ।

माघे—VI. 75.

स्तनयोस्समयेन याङ्गनाना-
मभिनद्धारसमा न सा रसेन ।
परिरम्भरुचिं ततिर्जलाना-
मभिनद्धा रसमानसारसेन ॥ 2743 ॥

रसमानाः कूजनशीलाः । ताच्छील्ये चानश् । रसतेः परस्मैपदित्वान्न शानच् ।

माघे — X. 59.

आमृशद्भिरभितो वलिवीची-
लोलमानमवलम्बितहस्तैः ।
सुभ्रुवामनुभवात्प्रतिपेदे
मुष्टिमेयमिति मध्यमभीष्टैः ॥ 2744 ॥

लोलमानान्दोलनशीलाः । ताच्छील्ये चानश्, न तु शानच् । लोलेः परस्मैपदित्वात् । अत एव 'लोलमानादयश्चानशि' (काव्यालं० सू V. ii. 8) इति वामनः ।

अस्मिन्नेव ग्रन्थे श्लो० 1802. लोलमानं लुठमानम् । लोलतेरनात्मनेपदित्वात्ताच्छील्ये चानश् ।

अस्मिन्नेव ग्रन्थे श्लो० 688. लेलिहाना: पुनः पुनर्लेहनशीलाः सर्पाः । लिहेर्यङ्लुगन्तात्ताच्छील्ये चानश् । 'गुणो यङ्लुकोः' (सू. 2630) इत्यभ्यासस्य गुणः । लिहेर्लिटः कानजिति वल्लभः । तदानीमभ्यासगुणानुपपत्तिः भूतार्थासङ्गतिश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 1197. अनुसरमाणैरनुसरणशीलैः । ताच्छील्ये चानश् ।

अस्मिन्नेव ग्रन्थे श्लो० 397. सोढुमशक्नुवाना । 'शकधृष' (सू. 3177) इत्यादिना तुमुन् । शक्नोतेः परस्मैपदित्वान्न शानच् । ताच्छील्ये चानश् ।

अस्मिन्नेव ग्रन्थे श्लो० 316. शितान् बाणान् । दीव्यमानं देवनशीलम् । महागदा अस्यमानं क्षेपमाणम् । तद्योग्यवयस्कमित्यर्थः । शालवान् निघ्नानं निहननशक्तम् । क्रमात् त्रिषु ताच्छील्यादिषु चानश् ।

## २११० । इङ्धार्योः शत्रकृच्छ्रिणि । (३. २. १३०)

आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि । अधीयन् । धारयन् । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते धारयति ।

अस्मिन्नेव ग्रन्थे श्लो० 1252. आत्मरतां विद्यामुपनिषदमधीयन् अकृच्छ्रेणाधीयानः । मस्करिव्रतं धारयन् अकृच्छ्रेण दधानः । उभयत्र शतृप्रत्ययः ।

३१११ । द्विषोऽमित्रे । (३. २. १३१)

शतृ । 'द्विषः शतुर्वा' (वा. 1522. सू. 627.) इति द्वितीयाषष्ठ्यौ ।

अस्मिन्नेव ग्रन्थे श्लो० 562 मुरं द्विषन् मुरारिः । अनेन शतृप्रत्यये 'न लोक' (सू. 627) इत्यत्र द्विषः शतुर्वा इति वचनाद्वैकल्पिकः षष्ठीप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. हे द्विषन् अमित्र । शतृप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 224. द्विषन् । शतृ ।

३११३ । अर्हः प्रशंसायाम् । (३. २. १३३)

अर्हन् ।

अस्मिन्नेव ग्रन्थे श्लो० 313. अर्हतः पूज्यस्य प्रशस्तस्य । शतृ ।

३११४ । आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । (३. २. १३४)

'भ्राजभास' (सू. 3157) इति क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्याः ।

३११५ । तृन् । (३. २. १३५)

कर्ता कटम् । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधात् द्वितीया । तृचि तु कृद्योगे कर्मणि षष्ठी स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 542. वनाकम्पं कर्ता तत्साधुकारी । तृन्प्रत्ययः । वनाकम्पमिति द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 543. श्रियं अत्यन्तीनत्वं नेता प्रापणशीलः । ताच्छील्ये तृन् । षष्ठीप्रतिषेधः । नयतिर्द्विकर्मकः ।

अस्मिन्नेव ग्रन्थे श्लो० 530. यश उपादाता साधु सम्पादयिता । साधुकारिणि तृन् । षष्ठीप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 544. पितॄन् तर्पयिता । तृन् । द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 558. कमलान्याप्याययितारं साधु वर्धयन्तम् । 'न य' (सू. 3132) इति यकारान्ताद्युच्प्रतिषेधे साधुकारिणि तृन् । द्वितीया ।

किरातार्जुनीये—XII. 33.

बदरीतपोवननिवासनिरतमवगात मान्यथा ।
धातुरुदयनिधने जगतां नरमंशमादिपुरुषस्य गां गतम् ॥ 2745 ॥

जगतामुदयनिधने सृष्टिसंहारौ । द्वितीया । धातुः कर्तुः । तृन् ।

अस्मिन्नेव ग्रन्थे श्लो० 2532. विपद्दाम् । टाबन्तात् द्वितीया । प्रतिकर्तारः । तृन् । विपदां विपत्तीनां प्रतिकर्तारः । तृच् । षष्ठी ।

**३११६ । अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । (३. २. १३६)**

अलङ्करिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1595. **रोचिष्णवः** साधु दीप्यमानाः । **प्रजनिष्णूनां** साधु प्रादुर्भवताम् । साधुकारिणीष्णुच् ।

भट्टिकाव्ये—VII. 3.

**निराकरिष्णवो** भानुं दिवं **वर्तिष्णवो**ऽभितः ।
**अलङ्करिष्णव**द्भान्तस्तटित्वन्त**श्चरिष्णवः** ॥ 2746 ॥

भानुं **निराकरिष्णवो** निराकरणशीलाः । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद् द्वितीया । दिवमभितो **वर्तिष्णवः** वर्तनस्वभावाः । **अलङ्करिष्णवः** अलङ्करणशीला इव **चरिष्णवो** गमनशीलाः । इष्णुच् ।

भट्टिकाव्ये —VII. 4.

तान्विलोक्यासहिष्णुस्सन् विललापोन्मदिष्णुवत् ।
वसन्माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत् ॥ 2747 ॥

**असहिष्णुरसहनशीलः** । **उन्मदिष्णुः** उन्मदनशीलः तद्वत् । इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 2137. द्विषतां वीर्यं निराकरिष्णुः निराकरणशीलः । ताच्छील्ये इष्णुच् 'न लोक' (सू. 627) इति निषेधाद् द्वितीया । 'द्वितीया' (सू. 686) इति योगविभागात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 534. सुतविप्रयोगमसहिष्णुः असहनशीलः ।

अस्मिन्नेव ग्रन्थे श्लो० 399. रोचिष्णु रोचनशीलम् । ताच्छील्ये इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 286. निराकरिष्णू प्रतिपक्षनिराकरणशीलौ । वर्धिष्णू वर्धनशीलौ । वर्तिष्णू वर्तनशीलौ । उत्पतिष्णू उत्पतनशीलौ । सहिष्णू सहनशीलौ । सर्वत्र ताच्छील्ये इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 616. भुवनान्तरेषु सञ्चरिष्णुः सञ्चरणशीलः । ताच्छील्ये इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 2027. अप्रसहिष्णु अप्रसहनशीलम् । प्रसहनमभिभव इति वृत्तिकारः । ताच्छील्ये इष्णुच् ।

माघे—V. 20.

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा
वंशध्वजैर्जलदसंहतिरुल्लिखन्त्यः ।
भूभर्तुरायतनिरन्तरसन्निविष्टाः
पादा इवाभिबभुरावलयो रथानाम् ॥ 2748 ॥

रोचिष्णवो रोचनशीलाः । ताच्छील्ये इष्णुच् ।

माघे—VIII. 46.

पर्यच्छे सरसि हृतेंऽशुके पयोभि-
र्लोलाक्षे सुरतगुरावपत्रपिष्णोः ।
सुश्रोण्या दलवसनेन वीचिहस्त-
न्यस्तेन द्रुतमकृताब्जिनी सखित्वम् ॥ 2749 ॥

अपत्रपिष्णोः लज्जाशीलायाः । ताच्छील्ये इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 839. उन्मदिष्णवः अत्यन्तमदशीलाः । ताच्छील्ये इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 226. वर्धिष्णुः वर्धनशीलः । ताच्छील्ये इष्णुच् ।

नैषधे—VI. 75.

हुताशकीनाशजलेशदूती-
निराकरिष्णोः कृतकाकुयाच्ञाः ।
भैम्या वचोभिस्स्व निजां तदाशां
न्यवर्तयद् दूरमपि प्रयाताम् ॥ 2750 ॥

निराकरिष्णोः । इष्णुच्

३११८ । भुवश्च । (३. २. १३८)

छन्दसीत्येव । भविष्णुः । कथं तर्हि 'जगत्प्रभोरप्रभविष्णु वैष्णवं' इति । निरङ्कुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2027. अप्रभविष्णु । अप्रसहिष्णु इति पाठान्तरम् ।

अनर्घराघवे—III. 15.

ग—भगवन् यदन्यत् किञ्चिदभिदधाति तत्र प्रभविष्णुर्भवान् ॥ 2751 ॥

प्रभविष्णुः प्रभावशीलः ।

नैषधे—III. 126.

कामः कौसुमचापदुर्जयममुं जेतुं नृपं त्वां धनु-
र्वल्लीमव्रणवंशजामधिगुणामासाद्य माद्यत्यसौ ।
ग्रीवालंकृतिपट्टसूत्रलतया पृष्ठे कियल्लम्बया
भ्राजिष्णुं कचरेखयेव निवसत्सिन्दूरसौन्दर्यया ॥ 2752 ॥

भ्राजिष्णुं ताच्छील्येन भ्राजमानाम् । भुवश्चेति चकारादिष्णुच् ।

रघुवंशे—XVI. 69.

ततो नृपेणानुगताः स्त्रियस्ता
भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः
प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ 2753 ॥

भ्राजिष्णुना । पूर्ववत् ।

३११९ । ग्लाजिस्थश्च क्स्नुः । (३. २. १३९)

छन्दसीति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । भूष्णुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2747. जिष्णुर्जयशीलोऽपि । ग्लास्नुः ग्लसनशीलः । अनेन ताच्छील्ये क्स्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 43. स्थास्नुः स्थिरा । क्स्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1274. स्थास्नुं स्थितिशीलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1880. नरकस्य जिष्णवः । शेषे षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 640. स्थास्नुतां स्थायित्वम् । क्स्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 510. भूष्णुः भविता भवनशीलः । 'भूष्णुर्भविष्णुर्भविता' III. i. 29 इत्यमरः । चकाराद्भवतेः क्स्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2535. स्थास्नूनि स्थिराणि । क्स्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 134. सुन्दरी दमयन्ती ऊरुयुगेन रम्भां तरुं परं जिष्णुः किमु । किं तु रम्भां तरुणीमपि जिष्णुरेव । क्स्नुः । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद्द्वितीया ।

अनर्घराघवे—V. 5.

ऐक्ष्वाकेण पुरापि कौशिकमखादारभ्य लङ्केश्वरो
धत्ते शाश्वतिकं विरोधमधुना त्वेते हता बान्धवाः ।

उत्साहप्रभुमन्त्रशक्तिभिरलंभूष्णुच्छलज्ञो बली
दृप्तश्शूर्पणखानिकारमपरं दृष्ट्वा कथं मृष्यते ॥ 2754 ॥

अलंभूष्णुरतिसमर्थः । चकारात् क्स्नुः ।

३१२०। त्रसिगृधिधृषिक्षिपेः क्नुः । (३. २. १४०)

त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2595. त्रस्नु चकितं त्रसनशीलम् । ताच्छील्ये क्नुः ।

भट्टिकाव्ये—V. 31.

संपत्य तत्सखीडेऽसौ तं वृत्तान्तमशिश्रवत् ।
त्रस्नुनाथ श्रुतार्थेन तेनागादि दशाननः ॥ 2755 ॥

त्रस्नुना । पूर्ववत् ।

रघुवंशे—XIV. 47.

अथानुकूलश्रवणप्रतीता-
मत्रस्नुभिर्युक्तधुरं तुरङ्गैः ।
रथं सुमन्त्रप्रतिपन्नरश्मि-
मारोप्य वैदेहसुतां प्रतस्थे ॥ 2756 ॥

अत्रस्नुभिः । पूर्ववत् ।

रघुवंशे—I. 21.

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तस्सुखमन्वभूत् ॥ 2757 ॥

अगृध्नुरगर्धनशीलः । ताच्छील्ये क्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 399. धृष्णुः धृतिशीलः । क्नुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2747. अधृष्णुवदधीरवत् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 532. रक्षोगणं क्षिप्नुम् । क्नुः । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद्द्वितीया ।

अनर्घराघवे—VI. 20.

मा भैष्टं कमठेन्द्रपन्नगपती कश्चिन्न वैशेषिको
भूमेरद्य भरः पतिः पलभुजामाज्ञापयत्येष वाम् ।
दोश्शैलौ हरता पृथक्पृथगयो मूर्धानमुत्क्षिप्नुना
रामेणापि लघूकृतं पतति यत्तत्कौम्भकर्णं वपुः ॥ 2758 ॥

मूर्धानमुत्क्षिप्नुना । पूर्ववत् क्नुः । द्वितीया ।

३१२१ । शमित्यष्टाभ्यो घिनुण् । (३. २. १४१)

उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरा इत्यत्र 'उगितश्च' (सू. 987) इति ह्रस्वविकल्पः । शमी तमी दमी श्रमी भ्रमी क्षमी क्लमी प्रमादी । उत्पूर्वान्मदेः अलंकृञादिसूत्रेणेष्णुजुक्तः । वासरूप-विधिना घिनुणपि । उन्मादी । ताच्छीलिकेषु वासरूपविधिर्नास्तीति तु प्रायिकम् ।

भट्टिकाव्ये—VII. 5.

भ्रमी कदम्बसम्भिन्नः पवनः शमिनामपि ।
क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ 2759 ॥

**भ्रमी** भ्रमणशीलः । **शमिनां** शान्तिशीलानाम् **क्लमित्वं** क्लमशीलत्वम् । भ्रमि-शमिक्लमिभ्यः ताच्छील्ये घिनुण् ।

माघे—II. 43.

मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ 2760 ॥

**क्षमी** सहनशीलः । घिनुण् ।

माघे—XVI. 54.

परिपाति न केवलं शिशूनिति तन्नामनि मा स्म विश्वसीः ।
तरुणानपि रक्षति **क्षमी** स शरण्यः शरणागतान् द्विषः ॥ 2761 ॥

**क्षमी** । पूर्ववत् ।

३१२२। सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिप-परिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यज-रजभजातिचरापचरामुषाभ्याहनश्च। (३. २. १४२)

घिनुण् स्यात्। सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती।

भट्टिकाव्ये—VII. 6.

संज्वारिणेव मनसा ध्वान्तमायासिना मया।
द्रोहि खद्योतसम्पर्कि नयनामोषि दुस्सहम्॥ 2762॥

संज्वारिणेव संज्वरशीलेनेव। आयासिना आयासशीलेन। द्रोहि द्रोहशीलम्। खद्योतसम्पर्कि ज्योतिरिङ्गणसम्पर्कशीलम्। नयनयोः। कृद्योगे कर्मणि षष्ठी। आमोषि मोषणशीलं नयनामोषि। सर्वे घिनुणन्ताः।

भट्टिकाव्ये—VII. 7.

कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम्।
अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः॥ 2763॥

परिदेविनं परिदेवनशीलम्। परिसारिण्यः परिसरणशीलाः। परिराटिभिः परिरटनशीलैः। अभ्याघातिभिः अभिहननशीलैः। पूर्ववत् घिनुण्।

भट्टिकाव्ये—VII. 8.

संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः।
सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः॥ 2764॥

संसर्गी संसर्जनशीलः। परिदाहीव परिदहनशील इव। आक्रीडिनो नर्तनशीलाः। परिवादिनः परिवदनशीला इव। पूर्ववत् घिनुण्।

भट्टिकाव्ये—VII. 9.

एता दैवानुरोधिन्यो द्वेषिण्य इव रागिणम् ।
पीडयन्ति जनं धाराः पतन्त्योऽनपचारिणम् ॥ 2765 ॥

द्वेषिण्य इव द्वेषणशीला इव । रागिणं रागशीलम् । घिनुणि च 'रञ्जेः' (वा. 4067. सू. 2605.) इत्यनुनासिकलोपः । अत्र सूत्रे रजेति निपातनाद्वा । अनपचारिणमनपराधशीलम् । दैवस्यानुरोधिन्यः अनुवर्तनशीलाः दैवानुरोधिन्यः । पूर्ववद्घिनुण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1046. अम्भसाम् । कृद्योगे कर्मणि षष्ठी । परिक्षेपी परित्यजनशीलः । योगिनमपि योगशीलमपि । सुखदुःखस्य । पूर्ववत् षष्ठी । त्यागिनं त्यागशीलम् । परिमोहिणं परिमोहनशीलम् । पूर्ववत् घिनुण् ।

अस्मिन्नेव ग्रन्थे श्लो० 681. परिदेविनी परिदेवनशीला । घिनुण् ।

रघुवंशे—XVII. 7.

तयोर्दिवस्पतेरासीदेकः सिंहासनार्धभाक् ।
द्वितीयापि सखी शच्याः पारिजातांशभागिनी ॥ 2766 ॥

पारिजातांशभागिनी पारिजातांशस्य ग्राहिणी । भजेर्घिनुण् ।

कुमारसंभवे—VI. 77.

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥ 2767 ॥

योगिनः । घिनुण् ।

३१२३ । वौ कषलसकत्थस्रम्भः । (३. २. १४३)

विकाषी । विलासी । विकत्थी । विस्रम्भी ।

भट्टिकाव्ये—VII. 11.

विकत्थी याचते प्रत्तमविस्रम्भी मुहुर्जलम् ।
पर्जन्यं चातकः पर्णे निकृन्तन्निव मानसम् ॥ 2768 ॥

विकत्थी विकत्थनशीलः । पर्जन्यादन्यं न याचे इत्यात्मश्लाघाशील इत्यर्थः । अविस्रम्भी अविश्वासशीलः । उभयत्रापि घिनुण् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1425. विलासी विलसनशीलः । घिनुण् ।

माघे—VI. 23.

दलितकोमलपाटलकुड्मले
निजवधूश्वसितानुविधायिनि ।
मरुति वाति विलासिभिरुन्मद-
भ्रमदलौ मदलौल्यमुपाददे ॥ 2769 ॥

विलासिभिर्विलसनशीलैः । घिनुण् ।

रघुवंशे—VI. 14.

विस्रस्तमंसादपरो विलासी
रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्रः ॥ 2770 ॥

विलासी विलसनशीलः । घिनुण् ।

३१२४ । अपे च लषः । (३. २. १४४)

चाद्वौ । अपलाषी । विलाषी ।

भट्टिकाव्ये—VII. 12.

प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलाषिणः ।
प्रमाथिनो वियुक्तानां हिंसकाः पापदर्दुराः ॥ 2771 ॥

अपलाषिणोऽपलषणशीलाः । घिनुण् ।

३१२५ । प्रे लपसृद्रुमथवदवसः । (३. २. १४५)

प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ।

अस्मिन्नेव ग्रन्थे श्लो० 2771. प्रलापिनः प्रलपनशीलाः । अनर्थाशंविण इत्यर्थः । प्रमाथिनः प्रमथनशीलाः । उभयत्र घिनुण् ।

किरातार्जुनीये—XVII. 34.

अस्त्रैस्समानामतिरेकिणीं वा
पश्यन्निषूणामपि तस्य शक्तिम् ।
विषादवक्तव्यबलः प्रमाथी
स्वमाललम्बे बलमिन्दुमौलिः ॥ 2772 ॥

प्रमाथी शत्रुमर्दनः । घिनुण् ।

३१२६ । निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् । (३. २. १४६)

पञ्चम्यर्थे प्रथमा । एभ्यो वुञ् स्यात् । निन्दकः हिंसक इत्यादि । ण्वुला सिद्धे वुञ्वचनं ज्ञापकं तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति ।

अस्मिन्नेव ग्रन्थे श्लो० 2771. वियुक्तानां हिंसका हिंसनशीलाः । ताच्छील्ये वुञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2596. निन्दकः निन्दनशीलः । क्लेशकः क्लेशनशीलः ।

अस्मिन्नेव ग्रन्थे श्लो० 566. प्राणिनामहिंसकः अहिंसनशीलः । ताच्छील्ये वुञ् ।

३१२७ । देविक्रुशोश्चोपसर्गे । (३. २. १४७)

आदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता क्रोष्टा ।

अस्मिन्नेव ग्रन्थे श्लो० 2596. परिदेवकः परिदेवनशीलः । वुञ् ।

३१२८ । चलनशब्दार्थादकर्मकाद्युच् । (३. २. १४८)

चलनार्थाच्छब्दार्थाच युच् स्यात् । चलनः । कम्पनः । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्याम् ।

अस्मिन्नेव ग्रन्थे श्लो० 649. चेष्टनैश्चलनैः । रवणैश्शब्दनैः । क्रमाद्युच् ।

माघे—XII. 9.

उत्थातुमिच्छन्विधृतः पुरोबला-
न्निधीयमाने भरभाजि यन्त्रके ।
अर्धोज्झितोद्गारविजर्झरस्वरः
स्वनाम निन्ये रवणः स्फुटार्थताम् ॥ 2773 ॥

रौतीति रवण उष्ट्रः । 'रु शब्दे' इति धातोस्ताच्छील्ये युच् ।

## ३१२९ । अनुदात्तेतश्च हलादेः । ( ३. २. १४९ )

अकर्मकाद्युच् स्यात् । वर्तनः वर्धनः । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 649. उत्कण्ठाया औत्सुक्यस्य वर्धनैः । ताच्छील्ये कर्तरि युच् ।

अस्मिन्नेव ग्रन्थे श्लो० 609. द्योतनं साधु द्योतमानम् । युच् ।

## ३१३० । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । ( ३. २. १५० )

जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः ।

अस्मिन्नेव ग्रन्थे श्लो० 609. शोचनः शोकशीलः । दन्द्रम्यन्त इति दन्द्रमणान् कुटिलगमनशीलान् । 'द्रमु पादविक्षेपे' इत्यस्मात् 'नित्यं कौटिल्ये गतौ' ( सू. 2634 ) इति यङि युच् ।

भट्टिकाव्ये—VII. 16.

कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्धनः ।
कुर्वन्ति क्रोधनं तारा मण्डना गगनस्य माम् ॥ 2774 ॥

गर्धनो विषयगृध्नुः । चङ्क्रमणः शनैर्गमनशीलः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 694. जवना वेगवतीः । युच् ।

माघे—XV. 70.

विशिखान्तराण्यतिपपात सपदि जवनैस्स वाजिभिः ।
द्रष्टुमलघु रभसापतिता वनिताश्चकार न सकामचेतसः ॥ 2775 ॥

जवनैर्जवनशीलैः । युच् ।

रघुवंशे—IX. 56.

तत्प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ 2776 ॥

जवनो जवनशीलः । युच् ।

३१३१ । क्रुधमण्डार्थेभ्यश्च । (३. २. १५१)

क्रोधनः । रोषणः । मण्डनः । भूषणः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2774. गगनस्य मण्डयन्तीति मण्डना भूषणाः । क्रुध्यतीति क्रोधनम् । उभयत्र ताच्छील्ये कर्तरि युच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1502. दिङ्मण्डलीमकुटस्य मण्डनः । युच् ।

३१३२ । न यः । (३. २. १५२)

यकारान्ताद्युच् न स्यात् । क्नूयी, क्नूयिता । क्ष्मायी, क्ष्मायिता ।

अस्मिन्नेव ग्रन्थे श्लो॰ 558. कमलानि । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद् द्वितीया । आप्यायितारं साध्वाप्यायन्तम् । 'ओ प्यायी वृद्धौ' इत्यस्मात् अनेन यकारान्ताद्युच्प्रतिषेधे साधुकारिणि तृन् ।

३१३३ । सूददीपदीक्षश्च । (३. २. १५३)

युज्न स्यात्। सूदिता। दीपिता। दीक्षिता। यदि सूदेर्युज् न, कथं मधुसूदनः। नन्द्यादिः।

अस्मिन्नेव ग्रन्थे श्लो० 558. दीपितारं दीप्रम्। युच्प्रतिषेधात्तृन्।

३१३४। लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्। (३. २. १५४)

लाषुकः पातुक इत्यादि।

अस्मिन्नेव ग्रन्थे श्लो० 615. पातुका। उकञ्।

अस्मिन्नेव ग्रन्थे श्लो० 548. प्रकृतिं प्रतिपादुकैः। उकञ्। 'न लोक' (सू. 627) इति निषेधात् द्वितीया।

भट्टिकाव्ये—II. 22.

आयोधने स्थायुकमस्त्रजात-
ममोघमभ्यर्णमहाहवाय।
ददौ वधाय क्षणदाचराणां
तस्मै मुनिः श्रेयसि जागरूकः॥ 2777॥

आयोधने स्थायुकं स्थितिकरणशीलम्। उकञ्। आतो युक्।

नैषधे—VI. 63.

दलोदरे काञ्चनकेतकस्य क्षणान्मषीभावुकवर्णरेखम्।
तस्यैव यत्र स्वमनङ्गलेखं लिलेख भैमी नखलेखिनीभिः॥ 2778॥

मषीभावुकाः श्यामीभवन्त्यः। मषीशब्दात् च्विप्रत्ययान्ताद्भवतेः अनेन उकञ्।

अस्मिन्नेव ग्रन्थे श्लो० 549. सवितुर्मरीचीः। 'न लोक' (सू. 627) इति निषेधाद् द्वितीया। परिभावुकैः तिरस्कारकैः। उकञ्।

अस्मिन्नेव ग्रन्थे श्लो० 539. द्यौः पुष्पचयम्। द्वितीया। वर्षुका वर्षणशीला। उकञ्।

अस्मिन्नेव ग्रन्थे श्लो० 547. अपो जलानि वर्षुकस्य वर्षणशीलस्य। पूर्ववत् ।

चम्पूभारते—II. 50.

एवं को वापराध्नोत्यमुमविगणयन्बाहुमन्त्रेति घुष्यन्
व्यक्तोरोरक्तरेखाकृतविरुदजगद्घातुकत्वप्रशस्तिः ।
क्रोशन्मर्त्याङ्गखादत्वरणपरिचलत्सृक्कलग्नास्थिदण्ड-
स्थूले दंष्ट्रे दधानः पवनभुवमभि प्राद्रवद्यातुधानः ॥ 2779 ॥

जगत् । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद् द्वितीया । घातुकः हननशीलः । उकञ् । जगद्घातुकः । 'द्वितीया श्रित' (सू. 686) इत्यत्र द्वितीयेति योगविभागात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 561. अभ्रमुकामुकः । अभ्रम्वाः 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधेऽपि 'कमेरनिषेधः' (वा. 1519. सू. 627) इति वचनात् षष्ठ्येव । कामुकः उकञ् । 'कृद्योगा च' (वा. 1317. सू. 703) इति षष्ठीसमासः ।

नैषधे—V. 137.

इत्याकर्ण्य क्षितीशस्त्रिदशपरिषदस्ता गिरश्चाटुगर्भा
वैदर्भीकामुकोऽपि प्रसभविनिहितं दूत्यभारं बभार ।
अङ्गीकारं गतेऽस्मिन्नमरपरिबृढस्सम्भृतानन्दमूचे
भूयादन्तर्धिसिद्धेरनुविहितभवच्चित्तता यत्र तत्र ॥ 2780 ॥

वैदर्भीकामुकः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 104. कामुकः । उकञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 34. कन्यकात्वेऽपि मयि विषये एषा कामुकी कामशीला । अनेन ताच्छील्ये उकञ् । 'जानपद' (सू. 500) इत्यादिना मैथुनेच्छार्थे ङीष् । 'इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी' II. vi. 9. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 559. वर्षुके वर्षणशीले । गृह एव स्थायुकः स्थितिशील: । अध्वानं द्वितीया । गामुको गमनशील: । उकञ् ।

अनर्घराघवे—VII. 119.

देवस्याम्बुजसम्भवस्य भवनादम्भोधिनागामुका
सेयं मौलिविभूषणं भगवतो भर्गस्य भागीरथी ।
उद्घातानपहाय विग्रहमिह स्रोतःप्रतीपानपि
स्रोतस्तीव्रतरस्वरा गमयति द्राग् ब्रह्मलोकं जनान् ॥ 2781 ॥

आगामुका आगमनशीला । उकञ् ।

भट्टिकाव्ये—XXII. 15.

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम् ।
सुग्रीवं चार्जितं मित्रं सर्वांश्चागामुकान्द्रुतम् ॥ 2782 ॥

द्रुतमागामुकानागमनशीलान् । उकञ् ।

## ३१३५ । जल्पभिक्षकुट्टलुण्टवृङः षाकन् । ( ३. २. १५५ )

जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी । षित्वात् ङीष् । जल्पाकी ।

अस्मिन्नेव ग्रन्थे श्लो० 120. जल्पाकीभिर्जल्पनशीलाभिः । षाकन् । षित्वान्ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 2031. कुट्टाकभावकुतुकम् । कुट्टाकः पाणिकुट्टन-शील: । षाकन् ।

अस्मिन्नेव ग्रन्थे श्लो० 121. त्रिभुवनतमोलुण्टाकीनां त्रिभुवनतमसां लुण्टनकर्त्रीणाम् । लुटि स्तेये । षाकन् । ङीष् ।

## ३१३६ । प्रजोरिनिः । ( ३. २. १५६ )

प्रजवी प्रजविनौ प्रजविनः ।

अस्मिन्नेव ग्रन्थे श्लो० 121. प्रजविना प्रकृष्टगमनशीलेन । इनिः ।

**३१३७ । जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । ( ३. २. १५७ )**

जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ।

किरातार्जुनीये—XVI. 64.

वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकाङ्क्ष **जयिनीं** भुजवीर्यलक्ष्मीम् ।
अस्त्रेषु भूतपतिनापहृतेषु जिष्णु-
र्वर्षिष्यता दिनकृतेव जलेषु लोकः ॥ 2783 ॥

**जयिनीं** जयशीलाम् । इनिः । 'ऋन्नेभ्यः' (सू. 306) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो° 1541. **अनादरिणम**नादरशीलम् । आङ्पूर्वो दृङ् । **अव्यथिनं** निर्भयशीलम् । नञ्पूर्वो व्यथिः । शैले **विश्रयिणं** तत्र स्थितिशीलम् । विपूर्वः श्रयतिः । **अभ्यमी** अभिमुखगमनशीलः । अभिपूर्वोऽमिः । **परिभवी** साधु परिभवं जनयन् । अभिपूर्वो भवतिः ।

रघुवंशे—XVII. 71.

प्रवृद्धौ हीयते चन्द्रस्समुद्रोऽपि तथाविधः ।
स तु तत्समवृद्धिश्च न चाभूत्ताविव **क्षयी** ॥ 2784 ॥

**क्षयी** क्षयशीलः । इनिः ।

रघुवंशे—XVI. 41.

सा **मन्दुरासंश्रयिभि**स्तुरङ्गै-
श्शालाविधिस्तम्भगतैश्च नागैः ।
पूराबभासे विपणिस्थपण्या
सर्वाङ्गनद्धाभरणेव नारी ॥ 2785 ॥

**मन्दुरासंश्रयिभिः** मन्दुरायां स्थितिशीलैः । इनिः ।

माघे—XV. 12.

प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी
भाविकलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥ 2786 ॥

न व्यथते न बिभेति अव्यथी निर्भीकः । इनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1779. परिभवि साधु परिभवं जनयत् । इनिः ।

मेघसंदेशे—I. 62.

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ 2787 ॥

हेमाम्भोजानाम् । कृद्योगे कर्मणि षष्ठी । प्रसूत इति प्रसवि । इनिः । 'कृद्योगा च' (वा. 1317. सू. 703.) इति समासः ।

३१३८ । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । (३. २. १५८)

स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तन्द्रालुः । श्रद्धालुः ।

वा० । शीङो वाच्यः । (2140.)

शयालुः ।

अस्मिन्नेव ग्रन्थे श्लो० 352. स्त्रीभ्यः स्पृहयालुं स्त्रीकामुकम् । 'स्पृहेरीप्सितः' (सू. 574.) इति सम्प्रदानत्वम् । अदयालुवत् अदयनशील इव । निद्रालुं निद्राशीलम् । श्रद्धालुं साध्वभिलषन्तम् । सर्वत्रालुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 555. सरोरुहां श्रियः । 'न लोक' (सू. 672) इत्यादिना षष्ठीप्रतिषेधाद्द्वितीया । करलीलया गृहयालुः ग्रहीता । ग्रह् ग्रहणे । आलुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 637. रूपथं गृहयालोः । पूर्ववत् ।

चम्पूभारते—II. 80.

वीरेण तेन विशिखेन विलूनमूलं
चक्रभ्रमेण पतयालु तदा शरव्यम् ।
अस्मिन् समाजवलयेत्ययमेव दोष्मा-
नित्याहिताभिनयलीलमिवाबभासे ॥ 2788 ॥

पतयालु । आलुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 56. दयालुः । आलुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 901. दृष्टिनिमेषेण विषये तन्द्रालुः प्रमादशीलः ।

अस्मिन्नेव ग्रन्थे श्लो० 2378. तन्द्रालवो निद्रालसाः ।

अस्मिन्नेव ग्रन्थे श्लो० 355. एकस्मै स्पृहयालूनाम् । आलुच् । सम्प्रदानत्वम् ।

अनर्घराघवे—VII. 143.

वत्स लक्ष्मण सोत्कण्ठं चिरात्परिरभस्व माम् ।
श्रद्धालुर्भ्रातुरङ्गानि चन्दनेष्वप्यरोचकी ॥ 2789 ॥

श्रद्धालुः । आलुच् ।

माघे—II. 80.

उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥ 2790 ॥

शयालुर्निद्रालुः । शीङो वाच्य इत्यालुच् ।

माघे—XII. 63.

प्रासादशोभातिशयालुभिः पथि
प्रभोर्निवासाः पटवेश्मभिर्बभुः ।
नूनं सहानेन वियोगविक्लबा
पुरः पुरश्रीरपि निर्ययौ तदा ॥ 2791 ॥

प्रासादशोभया अतिशयालुभिः अतिशायकैः । शीङो वाच्य इत्यालुच् ।

चम्पूभारते—VI. 57.

ग—इत्याश्वासितवतः पत्युरनुमत्या पुनरागत्य नैपथ्यभवनमधिशयालोस्तस्याश्चेतसः पलायमानस्य भयभरस्य सापि विभावरी सहचरी बभूव ॥ 2792 ॥

नैपथ्यभवनमधिशयालोः। शीङ् स्वप्ने। अकर्मकः। भवने शेते। 'अधिशीङ्स्थासां कर्म' (सू. 542.) इत्यधिकरणस्य कर्मत्वम्। भवनमधिशेते। 'कर्तृकर्मणोः कृति' (सू. 628) इति कृद्योगे कर्मणि षष्ठ्यां भवनस्याधिशयिता। वरस्योद्वर्तितवत्। तृच्। आलुच उकारान्तत्वात् 'न लोक' (सू. 627) इति षष्ठीप्रतिषेधात् नैपथ्यभवनमिति द्वितीया। अधिपूर्वाच्छीङः शीङो वाच्य इत्यालुच्।

## ३१३९। दाधेट्सिशदसदो रुः। (३. २. १५९)

दारुः। धारुः। सेरुः। शद्रुः। सद्रुः।

अस्मिन्नेव ग्रन्थे श्लो० 352. भ्रामरं क्षौद्रम्। 'न लोक' (सू. 627) इति षष्ठीप्रतिषेधाद् द्वितीया। धयतीति धारुं साधु पिबन्तम्। सद्रुं साधु सीदन्तम्। षद्लृ गतौ। रुप्रत्ययः।

अस्मिन्नेव ग्रन्थे श्लो० 1795. फलिनानम्ररोचिष्णुद्रुमेषु सद्रवः सदनशीलाः। रुः।

## ३१४०। सृघस्यदः क्मरच्। (३. २. १६०)

सृमरः। घस्मरः। अद्मरः।

भट्टिकाव्ये—VII. 22.

सृमरोऽभङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः।
विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान्कपीन् ॥ 2793 ॥

सृमरः साधु गन्ता। क्मरच्।

भट्टिकाव्ये—II. 38.

महीयमाना भवतातिमात्रं
सुराध्वरे घस्मरजित्वरेण।

दिवोऽपि वज्रायुधभूषणाया
ह्रिणीयते वीरवती न भूमिः ॥ 2794 ॥

घसरा अदनशीलाः । क्मरच् ।

३१४१ । भञ्जभासमिदो घुरच् । (३. २. ६१)

भङ्गुरः । भासुरः । मेदुरः ।

अस्मिन्नेव ग्रन्थे श्लो॰. 2793. अभङ्गुरप्रज्ञः स्थिरधीः । घुरच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1839. अतिभारेण भङ्गुरां स्वयं भज्यमानाम् । घुरच् । 'भिदुरादयः कर्मकर्तरि कर्तरि च' (काव्यालं. सू. V. ii. 38) इति वामनः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 51. भासुरं भासनशीलम् । घुरच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1360. गिरा मेदुरः मुखरः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1605. सूर्यः प्रमोदेन परिमेदुरः पूर्णः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1731. केरलीचिकुरभङ्गिभङ्गुरं स्वतः कुटिलम् । घुरच् ।

३१४२ । विदिभिदिच्छिदेः कुरच् । (३. २. ६२)

विदुरः । भिदुरम् । छिदुरम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2793. विदुरो ज्ञाता । कुरच् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 129. नीलाश्मद्युतिभिदुराम्भसः । कुरच् ।

माघे—XIX. 58.

अयशोभिदुरालोके कोपधामरणाहते ।
अयशोभिदुरा लोके कोपधा मरणाहते ॥ 2795 ॥

अयशोभिदुरा अपकीर्तिनिवर्तिका । कुरच् ।

नैषधे—III. 113.

भवद्वियोगाभिदुरार्तिधारा-
यमस्वसुर्मज्जति निश्शरण्यः ।
मूर्छामयद्वीपमहान्ध्यपङ्के
हा हा महीभृद्भटकुञ्जरोऽयम् ॥ 2796 ॥

अभिदुरा । कुरच् ।

माघे—VI. 8.

प्रियसखीसदृशं प्रतिबोधिताः
किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सर-
च्छिदुरयादुरयाचितमङ्गनाः ॥ 2797 ॥

गुरुमत्सरस्य छिदुरया भेत्र्या । कुरच् ।

रघुवंशे—XVI. 62.

आसां जलास्फालनतत्पराणां
मुक्ताफलस्पर्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्यमाणः
संलक्ष्यते नु छिदुरोऽपि हारः ॥ 2798 ॥

छिदुरः स्वयं छिन्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 2593. उद्भिदुरम् । कुरच् । 'भिदुरादयः कर्मकर्तरि च' (काव्यालं. सू. V. ii. 38) इति वामनः ।

३१४३ । इण्णशिजिसर्तिभ्यः करप् । (३. २. १६३)

इत्वरः । नश्वरः । जित्वरः । सृत्वरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1325. उदेतीत्युदित्वरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2793. जित्वरो जयशीलः ।

भट्टिकाव्ये—I. 16.

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि
शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्नवृत्तीन्यपि मानसानि
समं जनानां गुणिनोऽध्यवात्सुः ॥ 2799 ॥

जित्वराणि जयशीलानि । करप् ।

अस्मिन्नेव ग्रन्थे श्लो० 510. जित्वरैः ।

अस्मिन्नेव ग्रन्थे श्लो० 1163. विसृत्वरैः । करप् ।

अस्मिन्नेव ग्रन्थे श्लो० 83. विसृत्वरीम् । करप् । ‘ टिड्ढाणञ् ’ (सू. 470) इत्यादिना ङीप् ।

अनर्घराघवे—III. 8.

हस्ते करिष्यति जगत्त्रयजित्वरोऽपि
कस्तादृशो दुहितरं जनकेश्वरस्य ।
प्राणाधिकं विपुलबाहुभृतामपीदं
त्रैयम्बकं किमपि कार्मुकमन्तरायः ॥ 2800 ॥

जित्वरः । करप् ।

अस्मिन्नेव ग्रन्थे श्लो० 84. अभिसृत्वरीणामभिसरणशीलानाम् । करप् । ङीप् ।

### ३१४४ । गत्वरश्च । ( ३. २. १६४ )

गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरः गत्वरी ।

अस्मिन्नेव ग्रन्थे श्लो० 2793. गत्वरान्गमनशीलान् । करप् । निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1134. गत्वरताम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 85. गत्वर्यः । करबन्तो निपातः । ङीप् ।

### ३१४५ । जागुरूकः । ( ३. २. १६५ )

जागर्तेरूकः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 235. कार्येषु जागरूकः अप्रमत्तः । ऊकप्रत्ययः ।
• अस्मिन्नेव ग्रन्थे श्लो० 723. अपररात्रे जागरूकः प्रबुद्धः ।

### ३१४६ । यजजपदशां यङः । ( ३. २. १६६ )

एभ्यो यङन्तेभ्य ऊकः स्यात् । दशामिति भाविना नलोपेन निर्देशः । यायजूकः । 'जपजभदहदश' ( सू. 2638 ) इति अभ्यासस्य नुक् । जञ्जपूकः । दन्दशूकः । 'इज्याशीलो यायजूकः' II. vi. 8. इति, 'दन्दशूको बिलेशयः' I. vii. 8. इति चामरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1036. यायजूका इज्याशीलाः । यजेर्यङन्तादूकप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 971. जञ्जपूकः मायावित्वाद्गर्हितजापी । 'लुपसदचर' ( सू. 2635 ) इत्यादिना यङ् । 'जपजभ' ( सू. 2638 ) इत्यादिनाभ्यासस्य नुक् । अनेन ऊकः ।

अस्मिन्नेव ग्रन्थे श्लो० 77. दन्दशूकान् हिंस्रान् । पूर्ववत् यङ् । नुक् । तदन्तादूकः ।

अस्मिन्नेव ग्रन्थे श्लो० 235. दन्दशूकाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1888. दन्दशूकानां हिंस्राणाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2227. भावगर्हितं दशन्ति भृशमिति दन्दशूकैः । पूर्ववत् यङ् । नुक् । ऊकः ।

### ३१४७ । नमिकम्पिस्म्यजसकमहिंसदीपो रः । ( ३. २. १६७ )

नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रम् । सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 235. अकम्प्रमकम्पनशीलम् । दीप्रं साधु दीप्यमानम् । नम्रः साधु प्रह्वीभूतः । सर्वत्र रः ।

अस्मिन्नेव ग्रन्थे श्लो० 538. कम्राभिः कमनशीलाभिः ।

अस्मिन्नेव ग्रन्थे श्लो० 952. नम्रः । हिंस्राः हिंसनशीलाः । दीप्रम् । रः ।

अस्मिन्नेव ग्रन्थे श्लो० 50. कम्रां कामयित्रीम् । रः ।

अस्मिन्नेव ग्रन्थे श्लो० 1795. नम्राः । रः ।

नैषधे—I. 142.

सुताः कमाहूय चिराय चुङ्कृतै-
विधाय कम्राणि मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य सः
सुतस्य सेकात् बुबुधे नृपाश्रुणः ॥ 2801 ॥

कम्राणि । रः ।

अनर्घराघवे—I. 32.

त्रासोत्कम्पत्रिदशपरिषन्मौलिमाणिक्यमाला-
बालादित्यप्रकरकिरणस्मेरपादारविन्दे ।
प्राचीमेतां भुवनरचनामन्यथा निर्मिमाणे
कार्पण्योक्तीस्त्वयि रचितवानन्तरायं महेन्द्रः ॥ 2802 ॥

स्मेरम् । रः ।

३१४८ । सनाशंसभिक्ष उः । (३. २. १६८)

चिकीर्षुः । आशंसुः । भिक्षुः ।

अस्मिन्नेव ग्रन्थे श्लो० 646. रन्तुमिच्छुः रिरंसुः । रमेस्सन्नन्तादुप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1212. हरिणम् । 'न लोक' (सू. 627) इति षष्ठीप्रतिषेधाद्द्वितीया । जिघांसुः हन्तुमिच्छुः । हन्तेस्सन्नन्तादुप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1052. सोमरसं पिपासुः पातुमिच्छुः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 77. दन्दशूकान् जिघांसौ हन्तुमिच्छौ। पूर्ववत्।

अस्मिन्नेव ग्रन्थे श्लो॰ 538. आत्मनः क्षेममाशंसुरिच्छुः। आङ्पूर्वाच्छंसेरुप्रत्ययः। द्वितीया।

अस्मिन्नेव ग्रन्थे श्लो॰ 2010. शत्रोर्लवमुच्छेदमाशंसवः। पूर्ववत्।

भट्टिकाव्ये—XII. 72.

मांसं हतानामिव राक्षसाना-
माशंसवः क्रूरगिरो रुवन्तः।
क्रव्याशिनो दीप्तकृशानुवक्त्रा
भ्राम्यन्त्यभीताः परितः पुरं नः॥ 2803॥

मांसमाशंसवः आशंसनशीलाः। उः। द्वितीया।

अस्मिन्नेव ग्रन्थे श्लो॰ 1036. भिक्षवः भिक्षणशीलाः। उः।

३१४९। विन्दुरिच्छुः। (३. २. १६९)

वेत्तेर्नुम् इषेश्छत्वं च निपात्यते। वेत्ति तच्छीलो विन्दुः। इच्छति इच्छुः।

अस्मिन्नेव ग्रन्थे श्लो॰ 50. मामिच्छुः अभिलाषुकः। उप्रत्ययः। द्वितीया।

अस्मिन्नेव ग्रन्थे श्लो॰ 2478. मां कामयितुं कलत्रीकर्तुमिच्छुरभिलाषुकः। समानकर्तृकेषु तुमुन्। उप्रत्ययान्तो निपातः। द्वितीया।

माघे—VI. 40.

अरमयन्भवनादचिरद्युतेः
किल भयादपयातुमनिच्छवः।
यदुनरेन्द्रगणं तरुणीगणा-
स्तमथ मन्मथमन्थरभाषिणः॥ 2804॥

अपयातुमनिच्छवः।

अस्मिन्नेव ग्रन्थे श्लो॰ 17. सरस्यवतरितुमनिच्छुः।

अस्मिन्नेव ग्रन्थे श्लो० 212. विजयमिच्छुभिरभिलाषुकैः । उप्रत्ययान्तो निपातः । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद्द्वितीया ।

३१५० । क्याच्छन्दसि । (३. २. १७०)

३१५१ । आदृगमहनजनः किकिनौ लिट् च । (३. २. १७१)

वा० । भाषायां धाञ्कृसृगमिजनिनमिभ्यः । (2144.)

दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः ।

वा० । सासहिवावहिचाचलिपापतीनामुपसंख्यानम् । (2144.)

यङन्तेभ्यस्सहत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते ।

अस्मिन्नेव ग्रन्थे ग० 2648. अटवीपर्यटनखेदसम्पदाम् । कृद्योगे कर्मणि षष्ठी । असासहिं भृशमसहनशीलम् । किप्रत्ययः ।

चम्पूभारते—IX. 12.

बलारिसूनुं वसुदेवसूनुर्वचोभिराश्वास्य चिरेण तैस्तैः ।
असासहिं पावकजाठराग्नेराह्वयत्तत्र पुनश्शरासम् ॥ 2805 ॥

पावकजाठराग्नेरसासहिम् । पूर्ववत् ।

३१५२ । स्वपितृषोर्नजिङ् । (३. २. १७२)

स्वप्नक् । तृष्णक् तृष्णजौ तृष्णजः । 'धृषेश्चेति वाच्य' मिति काशिकादौ । धृष्णक् ।

भट्टिकाव्ये—VII. 25.

अहं स्वप्नक् प्रभावेन तव वन्दारुभिस्सह ।
अभीरुरवसं स्त्रीभिर्भास्वराभिरिहेश्वर ॥ 2806 ॥

स्त्रीभिस्सह स्वप्नक् । ञि ष्वप् शये । नजिङ् ।

३१५३ । शृवन्द्योरारुः । (३. २. १७३)

शरारुः । वन्दारुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2806. वन्दारुभिस्सह वन्दनशीलाभिस्सह । आरुप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 647. वन्दारुभिः ।

३१५४ । भियः क्रुक्लुकनौ । (३. २. १७४)

भीरुः । भीलुकः ।

वा० । क्रुकन्नपि वाच्यः । (2145.)

भीरुकः ।

अस्मिन्नेव ग्रन्थे श्लो० 2806. अभीरुर्निर्भीकः । क्रुप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 206. भयशीला भीरुः । क्रुप्रत्ययः । **अभीरुः** शूर्पणखा । अमनुष्यत्वात् 'ऊङुतः' (सू. 521) इत्यूङ् न ।

अस्मिन्नेव ग्रन्थे श्लो० 205. हे भीरु भयशीले सीते । 'ऊङुतः' (सू. 521) इत्यूङ् ।

३१५५ । स्थेशभासपिसकसो वरच् । (३. २. १७५)

स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।

कुमारसंभवे—I. 23.

प्रसन्नदिक्पांसुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां **स्थावर**जङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥ 2807 ॥

**स्थावराः** वृक्षादयः । वरच् ।

अस्मिन्नेव ग्रन्थे श्लो० 2806. **भास्वरा**भिर्भासनशीलाभिः । **ईश्वरः** ईशनशीलः ।

अस्मिन्नेव ग्रन्थे श्लो० 576. मायानामीश्वराः प्रभवः ।

किरातार्जुनीये—V. 33.

अस्मिन्नगृह्यत पिनाकभृता सलील-
मावद्धवेपथुरधीरविलोचनायाः ।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः ॥ 2808 ॥

ईश्वरायाः गौर्याः । वरच् । पुंयोगविवक्षाभावान्न ङीष् ।

अनर्घराघवे—II. 12.

विकसितसङ्कुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्ष्याः ।
कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः ॥ 2809 ॥

विकस्वराणि विकासशीलानि । वरच् ।

३१५६ । यश्च यङः । ( ३. २. १७६ )

यातेर्यङन्ताद्वरच् स्यात् । यायावरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1036. यायावराः ।

३१५७ । भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् । ( ३. २. १७७ )

विभ्राट् । भाः भासौ । धूः धुरौ । विद्युत् । ऊर्क् । पूः पुरौ । जूः जुवौ जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2110. विद्युताम् द्योतनशीलानाम् । रवेर्भासः प्रकाशान् । विभ्राजं साधु दीप्यमानम् । सर्वत्र क्विप् ।

भट्टिकाव्ये—XII. 10.

प्रीत्यापि दत्ते क्षणसन्निपातं
भयं भुजङ्गाधिपवद्दधानम् ।
तमस्समूहाकृतिमप्यशेषा-
नूर्जा जयन्तं प्रथितप्रकाशान् ॥ 2810 ॥

ऊर्जा बलेन । क्विप् । ' भ्राजभास ' ( सू. 2565 ) इति ह्रस्वविधायकम् ।

३१५८ । अन्येभ्योऽपि दृश्यते । (३. २. १७८)

क्विप् । छित् । भित् । दृशिग्रहणं विध्यन्तरोपसङ्ग्रहार्थम् । कचिद्दीर्घः । क्वचिदसम्प्रसारणम् । क्वचिद् द्वे । कचिद्ध्रस्वः । तथा च वार्तिकम् :—

वा० । क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च । (2147. 48.)

वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जुरुक्तः । श्रयति हरिं श्रीः ।

वा० । द्युतिगमिजुहोतीनां द्वे च । (2149.)

दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् ।

वा० । जुहोतेर्दीर्घश्च । (2149.)

जुहूः ।

वा० । ध्यायतेस्सम्प्रसारणञ्च । (2151.)

धीः ।

अस्मिन्नेव ग्रन्थे श्लो० 1023. शोकस्य छिदः शोकापनोदनशीलान् । भ्राजादिसूत्रादनुपपदे क्विप्यनुवृत्ते अनेन ताच्छील्ये क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 204. वाक् । क्विब्वचीति क्विप् ।

माघे—I. 1.

श्रियःपतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमंबरा-
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ 2811 ॥

श्रीः । क्विब्वचीति क्विप् । जगत् । द्युतिगमीति क्विप् ।

अस्मिन्नेव ग्रन्थे श्लो० 355. शोभना धीर्येषां ते सुधियः । ध्यायतेस्सम्प्रसारणं चेति क्विप् । सम्प्रसारणम् ।

३१५९ । भुवः संज्ञान्तरयोः । (३. २. १७९)

मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ।

कुमारसंभवे—VIII. 52.

निर्मितेषु पितृषु स्वयम्भुवा
　या तनुस्सुतनु पूर्वमुज्झिता ।
सेयमस्तमुदयं च सेव्यते
　तेन मानिनि ममात्र गौरवम् ॥ 2812 ॥

स्वयं भवतीति स्वयम्भूः चतुराननः । क्विप् ।

३१६० । विप्रसम्भ्यो ड्वसंज्ञायाम् । (३. २. १८०)

एभ्यो भुवो डुः स्यात् । न तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता ।

वा० । मितद्र्वादिभ्य उपसंख्यानम् । (2152.)

मितं द्रवतीति मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ।

माघे—I. 3.

चयस्त्विषामित्यवधारितं पुरा
　ततश्शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति
　क्रमादमुं नारद इत्यबोधि सः ॥ 2813 ॥

विभुः तत्त्वावधारणसमर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 390. भुवनत्रयस्य प्रभुः स्वामी ।

३१६१ । धः कर्मणि ष्ट्रन् । (३. २. १८१)

धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । 'धात्री जनन्यामलकी वसुमत्युपमातृषु' ।

३१६२ । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । (३. २. १८२)

दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् । नेत्रम् ।

३१६३ । तितुत्रतथसिसुसरकसेषु च । (७. २. ९)

एषां दशानां कृत्प्रत्ययानामिण्न स्यात् ।

वा० । तितुत्रेष्वग्रहादीनामिति वाच्यम् । (4393.)

शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । नद्ध्री ।

अस्मिन्नेव ग्रन्थे श्लो० 576. शस्त्रहस्ताः शस्त्रपाणयः । शस्त्रम् । शसेः ष्ट्रन् । अनेन इट्प्रतिषेधः । 'हसिमृ' (उ. सू. 366) इत्यादिना हसेरौणादिके तन्प्रत्यये हस्तः । अनेन इट्प्रतिषेधः । 'हनिकुषि' (उ. सू. 159) इति क्थन् । रथः । अनेन इट्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 396. सुमन्त्रनेत्रेण रथेन । नेत्रो नेता सारथिः । नयतेः बाहुलकात्कर्तर्यर्थे ष्ट्रन् । अनेन इट्प्रतिषेधः । 'नेत्रो नेतरि भेदवत्' इति विश्वः । रथः । पूर्ववत् । 'हनिकुषि' (उ. सू. 159) इति क्थन् । अनेन इट्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे ग० 867. अवरोधवधूजनानुरोधगुणदात्रे गणरात्रे । दात्रम् । इट्प्रतिषेधः ।

चम्पूरामायणे—I. 16.

प्रह्लादस्य व्यसनमभितं दैत्यवर्गस्य दम्भं
स्तम्भं वक्षस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धे पुरुषवपुषा मिश्रिते विश्वदृष्टे
दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ 2814 ॥

दंष्ट्रा ।

रघुवंशे—VI. 7.

नेत्रव्रजाः पौरजनस्य तस्मिन्
विहाय सर्वान् नृपतीन्निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा
गन्धद्विपे वन्य इव द्विरेफाः ॥ 2815 ॥

**नेत्रव्रजाः** । 'नेत्रं मथि गुणे वस्त्रे तरुमूले विलोचने' इति विश्वः । 'पदिप्रथिभ्यां नित्' (उ. सू. 622) प्रथितिः । 'तितुत्रेष्वग्रहादीनाम्' इतीट् ।

**३१६४ । हलसूकरयोः पुवः । (३. २. १८३)**

पुङ्पूञोः करणे ष्ट्रन् स्यात् । तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रम् । मुखमित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 536. वनपोत्रवताम् ।

किरातार्जुनीये—XII. 53.

स तमाससाद घननीलमभिमुखमुपस्थितं मुनेः ।
पोत्रनिकषणविभिन्नभुवं दनुजं दधानमथ सौकरं वपुः ॥ 2816 ॥

**पोत्रस्य** मुखाग्रस्य । 'मुखाग्रे क्रोडहलयोः पोत्रम्' III. iii. 180. इत्यमरः । ष्ट्रन्प्रत्ययः ।

**३१६५ । अर्तिलूधूसूखनसहचर इत्रः । (३. २. १८४)**

**अरित्रम्** । **लवित्रम्** । **धवित्रम्** । **सवित्रम्** । **खनित्रम्** । **सहित्रम्** । **चरित्रम्** ।

चम्पूरामायणे—II. 36.

ग—अथ दशरथेन रामस्सपरिच्छद एव गच्छेति निर्दिष्टः केवलं खनित्रपिटकौ वल्कलयुगलञ्च प्रार्थयत ॥ 2817 ॥

**खनित्रम्** ।

भट्टिकाव्ये—VII. 89.

शङ्का धवित्रवचनं प्रत्यूचुर्वानराः खगम् ।
वयं शत्रुलवित्रेषोद्धृता रामस्य भूपतेः ॥ 2818 ॥

धूयतेऽनेनेति धवित्रम् । करणे धुनातेरित्रः । लूयन्ते एभिरिति लवित्राः । पूर्ववदित्रः ।

चम्पूभारते—I. 13.

चित्रं चरित्रं जगतीतलेऽस्य
न श्लाघयामास नरेषु को वा ।
स यत्स्वयं पाण्डुरपि स्वकेन
गुणेन रक्तानकरोत्समस्तान् ॥ 2819 ॥

चरित्रम् । इत्रप्रत्ययः ।

३१६६ । पुवस्संज्ञायाम् । ( ३. २. १८५ )

पवित्रम् । येनाज्यमुत्पूयते यच्चानामिकावेष्टनम् ।

॥ इति पूर्वकृदन्तप्रकरणम् ॥

—:o:—

॥ श्रीरस्तु ॥

# ॥ अथोणादिप्रकरणम् ॥

## ॥ प्रथमः पादः ॥

— :o: —

### १ । कृवापाजिमिस्वदिसाध्यशूभ्य उण् ।

करोतीति कारुः शिल्पी कारकश्च । वातीति वायुः । 'आतो युक्' (सू. 2761) इति युक्। पायुर्गुदम् । जयत्यभिभवति रोगान् जायुः औषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । विलम्बाभावपरऽवे क्लीबम् । तद्विशिष्टद्रव्यपरत्वे पुंलिङ्गः । 'आशुर्व्रीहिः पाटलः स्यात्' ।

अस्मिन्नेव ग्रन्थे श्लो० 745. राघवस्य कार्यम् । 'न लोक' (सू. 627) इति षष्ठीप्रतिषेधाद् द्वितीया । करोतीति कारुः कर्ता । सर्ववानरसैन्यानां आशु आगमनमादिशत् । कारुवदाशुशब्दः ।

अस्मिन्नेव ग्रन्थे श्लो० 752. आशु ।

अस्मिन्नेव ग्रन्थे श्लो० 2185. वायुः ।

अस्मिन्नेव ग्रन्थे श्लो० 850. स्वादुंकारं स्वादुंकृत्वा । स्वादुशब्दः उण्प्रत्ययान्तः ।

### ३ । दॄसनिजनिचरिचटिभ्यो ञुण् ।

दीर्यत इति दारु । 'स्नुः प्रस्थस्सानुरस्त्रियाम्' II. iii. 4. इत्यमरः । जानु जानुनी । इह 'जनिवध्योश्च' (सू. 2512) इति उपधावृद्धिनिषेधो न अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि ।

चम्पूभारते—I. 73.

चाटुप्रयोगे चतुरस्स पाण्डुः
प्रसूनतल्पे प्रतिवेशितायाः ।

क्षौमं बिभेद स्मरराजधानी-
क्षौमं कराम्भोजदलेन तस्याः ॥ 2820 ॥

४ । किञ्जरयोः श्रीणः ।

किं शृणातीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुर्गर्भाशयः । 'गर्भाशयो जरायुः स्यात्' II. vii. 38. इत्यमरः ।

५ । त्रो रश्च लः ।

तरन्त्यनेन वर्णा इति तालु ।

६ । कृके वचः कश्च ।

कृकेन गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ।

माघे—XI. 9.

अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयान्धा किल स्त्री
मुकुलितनयनैव श्लिष्यति प्राणनाथम् ॥ 2821 ॥

कृकवाकोः कुक्कुटस्य ।

७ । भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः ।

भरति बिभर्ति वा भरुः स्वामी हरश्च । म्रियन्तेऽस्मिन्भूतानि मरुर्निर्जलदेशः । शेते शयुः अजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् , तन्यते कर्मपाशोऽनयेति तनुः शरीरञ्च । 'स्त्रियां मूर्तिस्तनुस्तनूः' II. vi. 71. इत्यमरः । धनुः शस्त्रविशेषः । 'धनुना च धनुर्विदुः' इति विश्वप्रकाशः । 'धनुरिवाजनि वक्रः' इति श्रीहर्षः । मयुः किन्नरः । 'मद्गुः पानीयकाकिका' इति रभसः । न्यङ्क्वादित्वात्कुत्वम् ।

किरातार्जुनीये—XVII. 58.

शिवप्रणुन्नेन शिलीमुखेन
त्सरुप्रदेशादपवर्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणे-
र्घनस्य वप्रादिव वैद्युतोऽग्निः ॥ 2822 ॥

त्सरुप्रदेशात् ।

अस्मिन्नेव ग्रन्थे श्लो० 560. धनुर्वक्रोऽजनि ।

चम्पूरामायणे—II. 56.

ग.—पुरा खलु सरयूरोधसि विविधतरुनिवहपिहितदिवस्पतौ मृगयास्पृहया कमपि समयमगमम् ॥ 2823 ॥

तरुः । उः ।

अस्मिन्नेव ग्रन्थे श्लो० 67. अतनुतापकृतं महासन्तापकारिणीम् ।

अस्मिन्नेव ग्रन्थे श्लो० 761. क्षितिवाससस्तनुम् ।

९ । अणश्च ।

'लवलेशकणाणवः' III. i. 61. इत्यमरः । चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटति वदतीति वटुः ।

अस्मिन्नेव ग्रन्थे श्लो० 564. अणुमात्रम् ।

१० । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ।

शृणातीति शरुः । 'शरुरायुधकोपयोः' । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । 'पुंसि भूम्न्यसवः प्राणाः' II. viii. 121. इत्यमरः । 'वसुर्हदेऽग्नौ योक्त्रेंऽशौ वसुतोये घने मणौ' । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चाद् विदि अवयवे बिन्दुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2326. असुभिस्समः असुसमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1594. वसूनि धनानि । उः ।

अस्मिन्नेव ग्रन्थे श्लो० 837. बन्धव एव बान्धवाः । प्रज्ञादित्वात्स्वार्थेऽण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1160. उदकबिन्दुः ।

अस्मिन्नेव ग्रन्थे श्लो० 724. वसुः ।

११ । स्यन्देः सम्प्रसारणं धश्च ।

'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' III. iii. 101. इत्यमरः ।

चम्पूभारते—V. 75.

दिशि दिशि मृगयार्थे तेषु यातेषु जातु
स्वयमुटजमवाप्तस्सोमकेन्द्रात्मजायाः ।
तपनशशिमहिम्ना लङ्घयामास वेलां
तरलितमकराङ्कलक्ष्मणं सिन्धुराजः ॥ 2824 ॥

सिन्धूनां देशविशेषाणां राजा सिन्धुराजः ।

चम्पूभारते—II. 7.

सिन्धुजातकलशीभुवोस्तयोः
स्निग्धभावमवलोक्य तादृशम् ।
तत्र पौरनिकरस्समाचर-
च्चित्रपूर्जठरे निमज्जनम् ॥ 2825 ॥

सिन्धुजातो गङ्गापुत्रः । सिन्धुजातः समुद्रनिवहः ।

१२ । उन्देरिच्चादेः ।

उनत्ति इन्दुः ।

अस्मिन्नेव ग्रन्थे श्लो० 2070. इन्दोः स्यन्दिष्यते वह्निः ।

१३ । ईषेः किच्च ।

ईषेरुः स्यात् स च कित् आदेरिकारादेशश्च । ईषते हिनस्तीति इषुः शरः । 'इषुर्द्वयोः' ।

अस्मिन्नेव ग्रन्थे श्लो० 77. इषुमति रघुसिंहे ।

माघे—XX. 21.

ध्वनतो नितरां रयेण गुर्व्य-
स्तडिदाकारचलद्गुणादसंख्याः ।
इषवो धनुषस्सशब्दमाशु
न्यपतन्नम्बुधरादिवाम्बुधाराः ॥ 2826 ॥

१४ । स्कन्देः सलोपश्च ।

कन्दुः ।

१७ । नावञ्चेः ।

न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः ।

चम्पूरामायणे—III. 24.

विपिनमथ जगाहे राक्षसानां करोटी-
रसकृदसकृदाविर्भावमालोक्य शोचन् ।
कृतरुचिरिव वर्त्मन्यङ्कुशानां कुशानां
पथिकचरणलाविन्यङ्कुरे न्यङ्कुरेषः ॥ 2827 ॥

न्यङ्कुः ।

१८ । फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ।

फलेर्गुक् । फल्गुः । पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुः वल्मीकम् । मन्यत इति मधु । जायत इति जतु ।

अस्मिन्नेव ग्रन्थे श्लो० 1392. अफल्गु सारवत् ।

अस्मिन्नेव ग्रन्थे श्लो० 903. पटुतरटङ्कृतिकम्पिताटवीकः ।

अस्मिन्नेव ग्रन्थे श्लो० 309. जतुगृहैस्सुहितेन ।

चम्पूभारते— III. 33.

> कुरुकेलिवनेषु पाण्डवानुजेषु भ्रमरावलिर्बभौ ।
> ऋतुना मधुगन्धगुप्तये जतुनाभे निहितेव मुद्रिका ॥ 2828 ॥

जतु ।

१९ । वलेर्गुक् च ।

वल संवरणे वल्गुः ।

२० । शः कित्सन्वच्च ।

श्यतेरुः स्यात् स च कित्सन्वच्च । शिशुर्बालः ।

२१ । यो द्वे च ।

ययुरश्वोऽश्वमेधीयः ।

२२ । कुर्भ्रश्च ।

'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ' । चादन्यतोऽपि । चक्रुः कर्ता जघ्नुर्हन्ता । पपुः पालकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1360. बभ्रुकैश्यं बिभ्राणः ।

२३ । पॄभिदिव्यधिगृधिधृषिभ्यः ।

कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । विरहिणं विध्यति विधुः । 'विधु शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' । गृधुः कामः । धृषुर्दक्षः ।

नैषधे— IV. 20.

> विधुरमानि तथा यदि भानुमान्
> कथमहो स तु तद्द्वयं तथा ।
> अपि वियोगभरास्फुटनस्फुटी-
> कृतदृषत्त्वमजिज्वलदंशुभिः ॥ 2829 ॥

विधुश्चन्द्रः । कुः ।

२४ । कुग्रोरुच्च ।

करोतीति कुरुः । गृणातीति गुरुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1271. गुरुः ।

२५ । अपदुःसुषु स्थः ।

'सुषामादिषु च' (सू. 1012) इति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु ।

अस्मिन्नेव ग्रन्थे श्लो० 2559. धर्मराज इति नाम कथमपष्ठु पठ्यते असत्यमेव पठ्यते ।

२६ । रपेरिच्चोपधायाः ।

अनिष्टं रपतीति रिपुः ।

अस्मिन्नेव ग्रन्थे ग० 2217 रिपुभर्त्सन ।

२७ । अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकारश्च ।

अर्जयति गुणानृजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः कन्दर्पः । अन्धुः कूपः । 'पांसुर्ना न द्वयो रजः' । 'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः' । बाधत इति बाहुः ।

अस्मिन्नेव ग्रन्थे श्लो० 13. पशुनापि ।

अस्मिन्नेव ग्रन्थे श्लो० 1410. बाहुः ।

२८ । प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ।

प्रथयाणां कुः । सम्प्रसारणं भ्रस्जेः, सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वा-त्कुत्वम् । भृज्जति तपसा भृगुः ।

अस्मिन्नेव ग्रन्थे श्लो० 546. प्रथितपृथुपयोधरां प्रशस्तपीवरकुचाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2687. मृदुतया मार्दवेन ।

## २९ । लङ्घिबंह्योर्नलोपश्च ।

लघुः ।

वा० । बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते । ( 4798. )

रघुः नृपभेदः । बहुः ।

माघे—VII. 5.

अतिशयपरिणाहवान्वितेने
बहुतरमर्पितरत्नकिङ्किणीकः ।
अलघुनि जघनस्थले परस्याः
ध्वनिमधिकं कलमेखलाकलापः ॥ 2830 ॥

लघु । बहु ।

अस्मिन्नेव ग्रन्थे श्लो० 2482. धातोर्लंघिघातोर्गमनार्थमवेक्ष्य आत्मसम्भवं नाम्ना रघुं चकार । अनेन उमत्यये 'बालमूल' इति वैकल्पिको रेफादेशः ।

## ३० । ऊर्णोतेर्नुलोपश्च ।

ऊरु सक्थि ।

अस्मिन्नेव ग्रन्थे श्लो० 1667. अलघुपीवरौ ऊरू यस्य तत् अलघुपीवरोरु ।

## ३१ । महति ह्रस्वश्च ।

उरु महत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1667. उरु निबरीसम् ।

## ३२ । आङ्परयोः खनिशॄभ्यां डिच्च ।

आ खनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ।

अस्मिन्नेव ग्रन्थे श्लो० 2578. परशुः । कुः । तत्पर्याय एवाव्युत्पन्नः परश्वथशब्दः । स प्रहरणं यस्य [1]पारश्वथिकः ।

---

1 पारश्वधिक इति मुद्रितकोशपाठः ।

### ३४ । हरिमितयोर्द्रुवः ।

द्रु गतौ । अस्माद्धरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुः वृक्षः । मितं द्रवति मितद्रुः समुद्रः ।

### ३५ । शते च ।

शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान् द्रुमः । 'द्युद्रुभ्यां मः' (सू. 1915) इति मत्वर्थीयमप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 580. पार्श्वद्रुमाः ।

चम्पूभारते---II. 1.

रहसि नलिनतल्पे रत्नपर्यङ्ककल्पे
 दिनविरतिसमीरैस्सेव्यमानस्स भीमः ।
तटभुवि कुसुमानां तादृशैर्गन्धपूरै-
 रधिकमलसताया हानिदद्रौ निदद्रौ ॥ 2831 ॥

हानिदाः द्रवः वृक्षा यस्यां तस्यां तटभुवि ।

### ३६ । खरुशङ्कुपीयुनीलंगुलिगु ।

पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खोऽश्वश्च । 'शङ्कुर्ना कीलशरयोः' । पिबतेरीत्वं युगागमश्च । पीयुर्वायसः कालः सुवर्णश्च । निपूर्वाल्लगि गतावित्यस्मात्कुर्नेर्दीर्घश्च । नीलङ्गुः कृमिविशेषः सृगालश्च । नीलाङ्गुरिति पाठान्तरम् । वल धातोरपि दीर्घः । लग सङ्गे । अस्य अत इत्वञ्च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः ।

### ३७ । मृगय्वादयश्च ।

एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 480. मृगयुः ।

३८। मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्।

मन्दुरा वाजिशाला। वाशुरा रात्रिः। मथुरा। चतुरः। चङ्कुरो रथः। अङ्कुरः। खर्जूरादित्वादङ्कूरोऽपि।

चम्पूभारते—VI. 16.

करीं करे स बिभ्राणं शशाङ्ककुलभूषणम्।
मन्दुरापतिमातेने तं दुरापपराक्रमम् ॥ 2832 ॥

मन्दुरा। उरच्।

अस्मिन्नेव ग्रन्थे श्लो० 2820. चाटुप्रयोगे चतुरः।

कुमारसंभवे—III. 32.

चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं
-तदेव जातं वचनं स्मरस्य ॥ 2833 ॥

अङ्कुराः। मधुरम्। 'फलिपाटि' (उ. सू. 18) मधु। 'ऊष' (सू. 1914) इति मत्वर्थीयरप्रत्ययः।

अस्मिन्नेव ग्रन्थे श्लो० 1446. वाताङ्कूरः मन्दमारुतः।

४०। मुकुरदर्दुरौ।

मुकुरो दर्पणः। बाहुलकान्मकुरोऽपि। दृ विदारणे। धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च। 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः'। 'दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरम्' इति विश्वः।

अस्मिन्नेव ग्रन्थे श्लो० 689. मुकुरः दर्पणम्।

अस्मिन्नेव ग्रन्थे श्लो० 2367. महाश्वाः दर्दुराणां वाद्यविशेषाणां पुटान् मुखानि वादयन्त इव।

४१ । मद्गुरादयश्च ।

उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । कबृ वर्णे । रुगागमः । 'कर्बुरं श्वेतरक्षसोः' । बध्नातेः खर्जूरादित्वादूरोऽपि । 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः । कोकतेर्वा कुक् । कुक्कुरः कुकुरः ।

माघे—V. 68.

> उन्नम्रताम्रपटमण्डपमण्डितं त-
> दानीलनागकुलसंकुलमाबभासे ।
> सन्ध्यांशुभिन्नघनकर्बुरितान्तरिक्ष-
> लक्ष्मीविडम्बि शिबिरं शिवकीर्तनस्य ॥ 2834 ॥

कर्बुरितं चित्रीकृतम् ।

४२ । असेरुरन् ।

असुरः । प्रज्ञाद्यण् । आसुरः ।

अस्मिन्नेव ग्रन्थे श्लो० 2385. असुरः ।

४३ । मसेश्च ।

मसुरा । 'मसेरूरन्' (उ. सू. 681) इति ऊरनि तु मसूरा । 'मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति' ।

४४ । शावशेरासौ ।

शु इत्याश्चर्ये । श्वशुरः । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' II. vii. 31. इत्यमरः ।

स्नुषाविजये—51.

> श्वश्रूजनः काङ्क्षति दुष्टचित्तो
> गर्भं स्नुषायास्सुरतं विनैव ।
> आहारसम्पत्तिमहो विनैव
> शरीरपुष्टिं गृहकृत्ययोग्याम् ॥ 2835 ॥

## ४५ । अविमह्योष्टिषच् ।

अविषः । महिषः ।

भट्टिकाव्ये—III. 22.

विद्युत्क्षुर्भूमिपतेर्महिष्यः
केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां
पेतुर्बभञ्जुर्वलयानि चैव ॥ 2836 ॥

महिष्यः पत्न्य । टिषच् । टित्त्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1245. महिषौघे ।

## ४६ । अमेर्दीर्घश्च ।

'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' ।

चम्पूरामायणे—V. 17.

मल्लीं चूतवनादिव स्नुहिवने म्लेच्छेन संस्थापितां
मालां देवकुलादिवामिषधिया क्षिप्तां श्मशाने शुना ।
देवीमाश्रमतस्तथा स्वभवने नक्तञ्चरेण छला-
दानीतामपनीतवेषरचनामालोकयन्मारुतिः ॥ 2837 ॥

आमिषम् ।

## ४७ । रुहेर्वृद्धिश्च ।

'रङ्कुशम्बररौहिषाः' । 'रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतम्' इति संसारावर्तः ।

## ४९ । नञि व्यथेः ।

## ५० । किलेर्बुक् च ।

किल्बिषम् ।

५१। इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधि-
बन्धिशुषिभ्यः किरच्।

इषिरोऽग्निः। मदिरा सुरा। 'मुदिरः कामुकाभ्रयोः' इति विश्वमेदिन्यौ। खिदिरश्चन्द्रः। 'छिदिरोऽसिकुठारयोः'। भिदिरं वज्रम्। मन्दिरं गृहम्। स्त्रियामपि। 'मन्दिरं मन्दिरापि स्यात्' इति विश्वः। चन्दिरौ चन्द्रहस्तिनौ। तिमिरं तमोऽक्षिरोगश्च। मिहिरः सूर्यः। 'मुहिरः काम्यसभ्ययोः'। मुचिरो दाता। रुचिरम्। रुधिरम्। बधिरः। शुष शोषणे। शुषिरं छिद्रम्। शुष्कमित्यन्ये।

माघे—II. 16.

घूर्णयन्मदिरास्वादमदपाटलितद्युती।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ॥ 2838॥

मदिरास्वादेन मद्यपानेन।

रघुवंशे—VIII. 68.

मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे।
अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम्॥ 2839॥

माद्यत्यनयेति मदिरा लोकप्रसिद्धा। तथापि 'नार्यो मदिरलोचना' इत्यादिप्रयोगदर्शनात् माद्यत्याभ्यामिति मदिरे अक्षिणी यस्यास्तत्सम्बुद्धिः हे मदिराक्षि।

चम्पूरामायणे—I. 21.

ग—तेन पुलस्त्यनन्दनेन सङ्क्रन्दननन्दनात् स्वमन्दिरोद्यानमानीतस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य बन्दीकृतसुरसुन्दरीनयनेन्दीवरद्वन्द्वाच्च करारविन्दकलितकनककलशाच्च मन्दोष्णं स्यन्दमानैरम्बुभिर्जम्बालितालवालस्य पचेलिमानामपि कुसुमानां पतनभयमाशङ्कमानाः पवमानाः परिस्पन्दितुमपि प्रभवो न भवन्ति॥ 2840॥

मन्दिरम्।

अस्मिन्नेव ग्रन्थे श्लो॰ 115. तिमिरम्।

अस्मिन्नेव ग्रन्थे श्लो॰ 1256. रुधिरम्।

किरातार्जुनीये—XVII. 49.

संरम्भवेगोज्झितवेदनेषु
मर्मेषु शश्वद्विशिखागमेषु ।
मुनेर्बभूवागणितेषुराशे-
र्लौहित्यस्कार इवात्ममन्युः ॥ 2841 ॥

बाधिर्यं स्तैमित्यम् ।

५३ । अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ।

अजिरमङ्गणम् । शशेरुपधाया इत्वम् । 'शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' । श्रथ मोचने । उपधाया इत्वं, रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वञ्च । स्थविरः । खदिरः । बाहुलकाच्छीङो बुक् ह्रस्वत्वं च । शिबिरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 974. समराजिरं रणाङ्गणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2565. शिशिरकालं शिशिरर्तुम् ।

चम्पूभारते—I. 3.

यस्यामुदग्रनृपमन्दिरचन्द्रशाला-
वातायने गतिवशाद्वपुषि प्रसक्ताम् ।
दीपाग्रधूममषिकां शिशिरांशुबिम्बे
मोहात्कुरङ्ग इति मुग्धजना वदन्ति ॥ 2842 ॥

शिशिरांशुः हिमांशुः शीतांशुर्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 2834. शिबिरं कटकम् ।

५४ । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ।

सलति गच्छति निम्नमिति सलिलम् । कलिलः । अनिलः । महिला । पृषोदरादित्वान्महेलापि । शण्डिलो मुनिः । बाहुलकात्कुटिलः ।

अस्मिन्नेव ग्रन्थे श्लो० 2586. सलिलम् ।

चम्पूभारते—II. 49.

कङ्कालोच्चयकल्पितान्तकचमूशाटीकुटीविभ्रमे
तत्र क्रुद्धतदौपवाह्यमहिषश्वासोग्रचक्रानिले ।
गृध्रध्वाङ्क्षसृगालघोषविकसद्रक्षोपदानस्तवे
भुञ्जानश्शकटस्थ एव स तदा चक्रे महत्क्ष्वेलितम् ॥ 2843 ॥

चम्पूभारते—I. 10.

चित्रं दिदर्शयिषुणा जनितस्य यस्यां
मध्यं विनैव विधिना महिलाजनस्य ।
अङ्गं नितम्बजघनादि यतो यतोऽध-
स्तुङ्गं कुचावुपरि याति ततोऽनुकूलम् ॥ 2844 ॥

चम्पूरामायणे—II. 9.

यामेवाहुर्निशिचरकुलोन्मूलने मूलहेतुं
यस्याश्चित्तं प्रकृतिकुटिलं गात्रमित्रं बभूव ।
अम्भोजिन्याश्शिशिरसरसं कासरीवाच्छमम्भः
कैकेय्यास्सा हृदयमदयं मन्थरा निर्ममन्थ ॥ 2845 ॥

**कुटिलम्** । इलच् ।

**५५ । कमेः पश्च ।**

कपिलः ।

**५७ । मिथिलादयश्च ।**

मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः पथिकः ।

चम्पूरामायणे—I. 53.

ग—अथ **मिथिलां** प्रति प्रस्थितः कौशिकः काकुत्स्थमित्थमकथयत् ॥2846॥

**५८ । कुम्बेर्नलोपश्च ।**

कुबेरः ।

### ६२ । कब्रेरोतः पश्च ।

कपोतः पक्षी ।

चम्पूरामायणे— II. 17.

> किं नागतस्ते श्रवसोस्सकाश-
> मरिन्दमस्सत्यगिरां पुरोगः ।
> श्येनामिषीभूतकपोतपोत-
> जीवातवे शस्त्रनिकृत्तगात्रः ॥ 2847 ॥

### ६३ । भातेर्डवतुः ।

भातीति भवान् ।

अस्मिन्नेव ग्रन्थे श्लो० 288. भवान् रावणं हनिष्यति अवधीत् । 'अभिज्ञावचने' ( सू. 2773 ) इति भूते लट् । 'शेषे प्रथमः' ( सू. 2165 ) इति प्रथमपुरुषः ।

### ६४ । कठिचकिभ्यामोरन् ।

कठोरः । चकोरः ।

चम्पूरामायणे—III. 41.

> इत्थं विलप्य दयितां विपिने विचिन्वन्
> रामो न तत्र धृतिमान्न च लक्ष्मणोऽपि ।
> तादृग्विधामपि कथां कथयन्स्ववाचा
> वल्मीकजन्ममुनिरेव कठोरचेताः ॥ 2848 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1153. चकोरः ।

### ६५ । किशोरादयश्च ।

किंपूर्वस्य शृणोतेष्टिलोपः । किमोऽन्त्यलोपः । किशोरोऽश्वशावः । सहोरस्साधुः ।

### ६६ । कपिगडिगण्डिकटिपटिभ्य ओलच् ।

कपीति निर्देशान्नलोपः । कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः ।

अस्मिन्नेव ग्रन्थे श्लो० 567. कपोलः ।

६७ । मीनातेरूरन् ।

मयूरः ।

चम्पूरामायणे — IV. 27.

महासमरसूचकः प्रतिदिशं मनोजन्मनो
मयूरगलकाहलीकलकलस्समुज्जृम्भते ।
पयोदमलिने दिने परुषविप्रयोगव्यथां
नरेषु वनितासु वा दधति हन्त के का इति ॥ 2849 ॥

६८ । स्यन्देः सम्प्रसारणञ्च ।

सिन्दूरम् ।

६९ । सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ।

सिनोतीति सेतुः । 'तितुत्र' (सू. 3163) इति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । बाहुलकात् । ओतुर्बिडालः । धातुः । क्रोष्टा ।

चम्पूरामायणे—V. 2.

कृत्वा मारुतिलङ्घनोत्थितरयात्तत्रानुयात्रां ततः
पर्यायात्पतिता महेन्द्रगहनक्षोणीरुहाणां ततिः ।
मध्येवारिनिधि प्रकाशितशिखासेतोः कृते भाविनः
सूत्रन्यासनिखातशङ्कुनिवहभ्रान्तिं पयोधौ दधौ ॥ 2850 ॥

अस्मिन्नेव ग्रन्थे श्लो० 645. सक्तु ।

अस्मिन्नेव ग्रन्थे श्लो० 1625. ओतोः ।

## ७१ । अर्तेश्च तुः ।

अर्तेस्तुः स्यात्स च कित् । 'ऋतुः स्त्रीपुष्पकालयोः' ।

रघुवंशे—IV. 17.

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ 2851 ॥

## ७२ । कमिमनिजनिगाभायाहिभ्यश्च ।

एभ्यस्तुः स्यात् । 'कन्तुः कन्दर्पचित्तयोः' । मन्तुरपराधः । जन्तुः प्राणी । 'गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च' । भातुरादित्यः । यातुरध्वगकालयोः । रक्षसि क्लीबम् । हेतुः कारणम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2269. यक्षेन्द्रो धनदो दाशरथिमापन्नं श्रुत्वा मन्तूयिष्यति दुर्मना भविष्यति । मन्तुशब्दात्कण्ड्वादियगन्तात् लट् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2008. मन्तूयति पूर्ववत् ।

चम्पूरामायणे—III. 4.

या तु नः पदवी सैषा यातुनश्चास्य लक्ष्मण ।
यातुकामं तयैवेदं यातु कामं न हन्यताम् ॥ 2852 ॥

## ७३ । चायः कि ।

'केतुर्ग्रहपताकयोः' ।

चम्पूभारते—X. 20.

तस्याथ द्वेषिसेनाजलधिकबलनात्कुम्भयोनित्वकीर्तिं
स्पष्टीकर्तुं स्वकीयामिव कुतुकवतः पार्श्वमभ्येत्य वेगात् ।
भीमो रथ्यानमश्नाद्दुपद्रुतनुभवस्सूदयामास सूतं
कोदण्डं केतुदण्डं द्वयमपि शकलीचक्रतुर्दस्रपुत्रौ ॥ 2853 ॥

## ७५ । वसेस्तुन् ।

वस्तु ।

७६ । अगारे णिच्च ।

'वेश्मभूर्वास्तुरस्त्रियाम्' ।

७७ । कृञः क्रतुः ।

क्रतुर्यज्ञः ।

चम्पूरामायणे— I. 33.

ग.—राजन्! भवतस्तनयेन विनयाभिरामेण रामेण शरासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ॥2854॥

७९ । जीवेरातुः ।

'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' ।

चम्पूरामायणे—I. 27.

न्यग्रोधपल्लसमतां क्रमशः प्रयाता-
मङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां
गर्भच्छलेन वसता प्रथमेन पुंसा ॥ 2855 ॥

८० । आतृकन्वृद्धिश्च ।

जीवेरित्येव । 'जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले' ।

८१ । कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ।

'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' । चमूः । तनूः । धनूः शस्त्रम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा ।

अस्मिन्नेव ग्रन्थे श्लो० 2843. अन्तकचमूः ।

माघे—VII. 12.

द्रुतपदमिति मा वयस्य यासी-
र्ननु सुतनूं परिपालयानुयान्तीम् ।

न हि न विदितखेदमेतदीय-
स्तनजघनोद्वहने तवापि चेतः ॥ 2856 ॥

शोभना तनूर्यस्याः सुतनूः ।

अस्मिन्नेव ग्रन्थे श्लो० 2086. चमूः ।

## ८३ । वहो धश्च ।

' वधूर्जायास्नुषास्त्रीषु ' ।

अस्मिन्नेव ग्रन्थे श्लो० 2741. वधूभ्यस्तमुपहरन् ।

## ८४ । कषेश्छश्च ।

कच्छूः पामा ।

## ८५ । णित्कसिपद्यर्तेः ।

कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ।

## ८७ । नञि लम्बेर्नलोपश्च ।

' तुम्ब्यलाबूरुभे समे ' II. iv. 156. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 971. मृदलाबुनः अलाब्वाः विकारः फलमलाबु । औरञ् । फले लुक् । नपुंसकह्रस्वत्वम् । मृत् द्वारकामृत्तिका । सा चालाबु च मृदलाबु । ' जातिरप्राणिनाम् ' ( सू. 910 ) इति द्वन्द्वैकवद्भावः । तस्य ।

## ८८ । के श्र एरङ् चास्य ।

कशब्द उपपदे शृणातेरूः स्यादेरङादेशश्च । ' कशेरूस्तृणकन्दे स्त्री ' । बाहुलकादुप्रत्यये कशेरुः । क्लीबे पुंसि च ।

## ९३ । अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ।

एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । 'दृभी ग्रन्थे' निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः । जनेर्वुक् । जम्बूः । 'जमु अदने' इत्यस्येत्येके । बाहुलकाद्ध्रस्वोऽपि । जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । निपातनादेत्वम् । कर्कं दधाति कर्कन्धूः बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः ।

अस्मिन्नेव ग्रन्थे श्लो० 2277. जम्बूर्नीलफलो वृक्षविशेषः ।

## ९४ । मृग्रोरुतिः ।

मरुत् । गरुत् पक्षः ।

अस्मिन्नेव ग्रन्थे श्लो० 1030. मरुत्सुतः ।

अस्मिन्नेव ग्रन्थे श्लो० 1720. गरुत्मान् ।

नैषधे—II. 4.

स गरुद्धनदुर्गदुर्ग्रहान् कटु कीटान् दशतस्ततः क्वचित् ।
नुनुदे तनुकण्डु पण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ 2857 ॥

गरुतः पक्षाः ।

## ९६ । हृषेरुलच् ।

'हर्षुलो मृगकामिनोः' । बाहुलकाच्चटतेः । चटुलं शोभनम् ।

## ९७ । हसृरुहियुषिभ्य इतिः ।

'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' । सरिन्नदी । रोहित् मृगविशेषस्य स्त्री । युष इति सौत्रो धातुः । 'ऋश्यस्य रोहित्, पुरुषस्य योषित्' इति भाष्यम् । 'हंसस्य योषिद्वरटा' II. v. 26. इत्यमरः ।

चम्पूरामायणे—IV. 38.

ककुभि कुलिशपाणेर्मैथिलीं तां विचेतुं
विनतमथ दिशायां मारुतिं प्रेतभर्तुः ।

वरुणदिशि सुषेणं यक्षराजाङ्कितायां
हरिति शतबलिं च प्राहिणोद्वानरेन्द्रः ॥ 2858 ॥

हरिति दिशि ।

अस्मिन्नेव ग्रन्थे श्लो० 2685. सरितः ।

अस्मिन्नेव ग्रन्थे श्लो० 2016. योषितः ।

९८ । ताडेर्णिलुक् च ।

ताडयतीति तडित् ।

चम्पूरामायणे—IV. 33.

तापोपशान्तिनटनात्कृतलोकहर्षा
वर्षानटी गगनरङ्गतलात्प्रयाता ।
अम्भोदवाद्यमचिरेण शशाम सर्वं
निर्वापिताश्च सहसैव तडित्प्रदीपाः ॥ 2859 ॥

१०० । कमेरठः ।

कमठः । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी । बाहुलकाज्जरठः ।

अस्मिन्नेव ग्रन्थे श्लो० 94. जरठाः ।

१०१ । रमेर्वृद्धिश्च ।

रामठं हिङ्गु ।

१०२ । शमेः खः ।

चम्पूरामायणे—I. 78.

अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ।
शशाङ्कशङ्खसम्भिन्नतारा मौक्तिकदन्तुरा ॥ 2860 ॥

१०३ । कपोष्ठः ।

कण्ठः ।

अस्मिन्नेव ग्रन्थे श्लो०. 887. कण्ठच्छाया ।

चम्पूभारते—V. 58.

तदद्य नः कण्ठभुवि स्नुषाणां
तवैव पादं शरणं गतानाम् ।
वास्तव्यतां मङ्गलसूत्रिकायाः
प्रसीद दातुं प्रथमानकीर्ते ॥ 2861 ॥

१०४ । कलस्तृपश्च ।

तृपतेः कलप्रत्ययः स्यात् । चात्तृफतेः । तृपला लता '[1]तृफला तु फलत्रिके' II. 10. 111. इत्यमरः ।

१०५ । शपेर्वश्च ।

शबलः ।

माघे—VI. 27.

अनुययौ विविधोपलकुण्डल-
द्युतिवितानकसंवलितांशुकम् ।
धृतधनुर्वलयस्य पयोमुच-
श्शबलिमा बलिमानमुषो वपुः ॥ 2862 ॥

शबलभावः शबलिमा ।

१०६ । वृषादिभ्यश्चित् ।

वृषलः । पललम् । बाहुलकाद्गुणः । सरलः । तरलः ।

---

1. 'त्रिफला तु फलत्रिकम्' इत्येव मुद्रितकोशे दृश्यते ।

(ग. सू.)। कमेर्बुक्। 196.

कम्बलः। मुस खण्डने मुसलम्।

(ग. सू.)। लङ्गेर्वृद्धिश्च। 197.

लाङ्गलम्।

(ग. सू.)। कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्। 198.

कुट्मलः। कुडेरपि कुड्मलः। कश्मलम्। बाहुलकाद्गुणः। कोमलम्।

भट्टिकाव्ये—XIV. 11.

गजानां प्रददुश्शारीन् कम्बलान्परितस्तरुः।
तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियुरुच्छिखान्॥ 2863॥

कम्बलान्।

अस्मिन्नेव ग्रन्थे श्लो० 2064. मुसले।

अस्मिन्नेव ग्रन्थे श्लो० 2769. कोमलपाटलकुड्मले।

१०७। मृजेष्टिलोपश्च।

मलम्।

अस्मिन्नेव ग्रन्थे श्लो० 1095. मलम्।

१०८। चुपेरच्चोपधायाः।

चपलम्।

१०९। शकिशम्योर्नित्।

शकलम्। शमलम्।

१११। अमन्ताड्डः।

दण्डः । रण्डा । खण्डः । मण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सत्वाभावः । षण्डः सङ्घातः । तालव्यादिरित्यपरे । शण्डः । गण्डः । चण्डः । पण्डः क्लीबः । पण्डा बुद्धिः ।

नैषधे—II. 32.

कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रममातनोति यत् ॥ 2864 ॥

दण्डः ।

अस्मिन्नेव ग्रन्थे श्लो० 1885. अण्डः ।

११२ । क्वादिभ्यः कित् ।

कवर्गादिभ्यो डः कित्स्यात् । कुण्डम् । काण्डम् । गुड् गुडः । घुण भ्रमणे, घुण्डो भ्रमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1203. कुण्डम् । 'जानपद' (सू. 500) इत्यादिना अमत्रार्थे कुण्डीति ङीष् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 468. इक्षुकाण्डम् ।

११३ । स्थाचतिमृजेरालज्वालजालीयचः ।

तिष्ठतेरालच् । स्थालं, स्थाली । चतेर्वालच् । चात्वालः । मृजेरालीयच् । मार्जालीयो बिडालः ।

११४ । पतिचण्डिभ्यामालञ् ।

पातालम् । चण्डालः । प्रज्ञादित्वादणि चाण्डालोऽपीत्येके ।

अस्मिन्नेव ग्रन्थे श्लो० 272. पातालम् ।

चम्पूरामायणे—I. 95.

ग.—अथ सावित्रः क्षत्रियस्त्रिशङ्कुस्सशरीरस्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितैर्दत्तचण्डालभावस्तमेनं शरणमभजत ॥2865॥

चण्डालः ।

११५ । तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ।

तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालः ।

माघे—III. 8.

उभौ यदि व्योम्नि पृथक् प्रवाहा-
वाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥ 2866 ॥

तमालः ।

चम्पूरामायणे—I. 89.

अलम्बुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ।
विशालेति स्वनाम्नात्र विशालां विदधे पुरीम् ॥ 2867 ॥

विशालो राजा । विशाला पुरी । विशेः कालन् । विशालां विपुलाम् । 'वेश्शालच्छङ्कटचौ' ( सू. 1829 ) इति शालच् । एतयोर्भेदश्चिन्त्यः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 618. बिडालः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 615. मृणालम् ।

चम्पूभारते—II. 69.

कुमारिकाया द्रुपदस्य भूपतेः
कुचोपमाद्रव्यमिवाभिवीक्षितुम् ।
कुरूद्वहास्तत्र पुरे कुतूहला-
त्कुलालगेहं प्रथमं समाविशन् ॥ 2868 ॥

कुलालः ।

नैषधे—IV. 7.

तरुणतातरणिद्युतिनिर्मितद्रढिम तत्कुचकुम्भयुगं तथा ।
अनलसङ्गतितापमुपैतु नो कुसुमचापकुलालविलासजम् ॥ 2869 ॥

कुलालः ।

अस्मिन्नेव ग्रन्थे श्लो० 1781. चलत्कपालकुण्डला ।

चम्पूभारते—II. 82.

पाञ्चालपुत्रीप्रहिताः कटाक्षाः
पाण्डोस्तनूजं परितो ववल्गुः ।
माङ्गल्यमालावतरेदिहेति
माध्वीलिहः पूर्वमिवोपयाताः ॥ 2870 ॥

पाञ्चालानां राजा पाञ्चालः ।

चम्पूरामायणे—V. 47.

ग.—अयमहमहर्पतिकुलतिलकस्य सत्यसन्धस्य पितृनियोगसमुपगतवनवासनिरतस्य शूर्पकारातिबाधितशूर्पणखाप्राप्तवैरूप्यकुप्यत्खरप्रमुखनिशिचरबलपलालजालकरपान्तानल-करपशिलीमुखस्य कपटहरिणहननसमयपरिमुषितदारान्वेषणसञ्जातसुग्रीवसख्यस्य समुत्खातवालिकण्टकस्य दुर्वृत्तक्षत्रवंशवनपवनसारथेस्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशरथेर्दूतः सीतामार्गमार्गणाय दिशि दिशि तपनतनयप्रेषितानां वानराणामेकतमः समुद्रलङ्घनजङ्घालः तव नगरप्रमदवनसीमनि रघुवरधर्मदारान्प्रणम्य प्रतिष्ठासुर्मदीयमागमनं प्रकाशयितुं प्रमथिताशोकवनिकानोकहनिवहस्त्वद्दर्शनकुतूहलेन केवलमनुभूतनैर्ऋतलतातन्तुसंनहनस्तव परिसरमुपासरम् ॥ 2871 ॥

पलालजालम् ।

## ११६ । पतेरङ्गच् पक्षिणि ।

पतङ्गः ।

अस्मिन्नेव ग्रन्थे श्लो० 2089. पतत्पतङ्गः ।

52

## ११७ । तरत्यादिभ्यश्च ।

तरङ्गः । लवङ्गम् ।

माघे—VIII. 22.

> आनाभेस्सरसि नतभ्रुवावगाढे
> चापल्यादथ पयसस्तरङ्गहस्तैः ।
> उच्छ्रायि स्तनयुगमध्यरोहि लब्ध-
> स्पर्शानां भवति कुतोऽथवा व्यवस्था ॥ 2872 ॥

तरङ्गैरेव हस्तैः ।

अस्मिन्नेव ग्रन्थे श्लो० 1075. लवङ्गमाला ।

## ११८ । विडादिभ्यः कित् ।

विडङ्गः । मृदङ्गः । कुरङ्गः ।

माघे—III. 55.

> रतान्तरे यत्र गृहान्तरेषु वितर्दिनिर्यूह[1]विडङ्गनीडः ।
> रुतानि शृण्वन्वयसां गणोऽन्तेवासित्वमाप स्फुटमङ्गनानाम् ॥ 2873 ॥

विडङ्गः ।

अस्मिन्नेव ग्रन्थे श्लो० 2083. मृदङ्गाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1180. कुरङ्गयूनाम् ।

## ११९ । सृवृञोर्वृद्धिश्च ।

सारङ्गः । वारङ्गः खङ्गादिमुष्टिः ।

## १२० । गन्गम्यद्योः ।

गङ्गा । अङ्गः पुरोडाशः ।

---

1. मु. पु. विटङ्क इत्येव दृश्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 1821. गङ्गा ।

भट्टिकाव्ये—III. 39.

सम्प्राप्य तीरं तमसापगाया
गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं
ययुर्निरुद्धश्रमवृत्तयस्ते ॥ 2874 ॥

गच्छतीति गङ्गा । गमेर्गन् ।

## १२१ । छापूखडिभ्यः कित् ।

छागः । पूगः । खङ्गः । बाहुलकात् 'षिड अनादरे' इत्यस्मात् गन्, सत्वाभावश्च । षिङ्गस्तरलः । 'षिङ्गैरगद्यत ससम्भ्रममेव काचित्' इति माघः ।

माघे—III. 38.

वणिक्पथे पूगकृतानि यत्र
भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन्
रत्नानि रत्नाकरतामवाप ॥ 2875 ॥

अपूगाः पूगाः सम्पद्यमानानि कृतानि पूगकृतानि पुञ्जीकृतानि । 'श्रेण्यादयः कृतादिभिः' (सू. 738) इति समासः । श्रेण्यादिषु च्व्यर्थवचनमिति च्व्यर्थता च ।

अस्मिन्नेव ग्रन्थे श्लो० 262. खङ्गम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2569. षिङ्गैर्विटैः ।

## १२२ । भृञः किन्नुट् च ।

भृञो गन् कित्स्यात्तस्य नुट् च । 'भृङ्गाः षिङ्गालिधूम्याटाः' ।

भट्टिकाव्ये—XI. 36.

अक्ष्णोः पतन्नीलसरोजलोभा-
द्भृङ्गः करेणाल्पधिया निरस्तः ।

ददर्श ताम्राम्बुरुहाभिसन्धि-
स्तृष्णातुरः पाणितलेऽपि भृङ्गः ॥ 2876 ॥

भृङ्गः ।

१२३ । भृणातेर्ह्रस्वश्च ।

भृङ्गम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1095. भृङ्गैर्विषाणैः ।

१२४ । गण्शकुनौ ।

नुट् चेत्यनुवर्तते । शार्ङ्गः ।

१२५ । मुदिग्रोर्गग्गौ ।

मुद्गः । गर्गः ।

१२६ । अण्डन्कृसृभृवृञः ।

करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ।

१२७ । शृदृभसोऽदिः ।

शरत् । दरद्धृदयकूलयोः । भसज्जघनम् ।

माघे—VI. 42.

सविकचोत्पलचक्षुषमैक्षत
क्षितिभृतोऽङ्कगतां दयितामिव ।
शरदमच्छगलद्वसनोपमा-
क्षमघनामघनाशनकीर्तनः ॥ 2877 ॥

शरदमैक्षत ।

१२८ । दृणातेः पुग्घ्रस्वश्च ।

दृषत् ।

१२९ । त्यजितनियजिभ्यो डित् ।

त्यत् । तद् । यद् । सर्वादयः ।

चम्पूरामायणे—I. 20.

यद्बाहुराहुरसनायितशस्त्रधारा
दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
यद्वैरिणां रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ 2878 ॥

१३० । एतेस्तुट् च ।

एतद् ।

अस्मिन्नेव ग्रन्थे श्लो० 2430. एतदाकर्ण्य ।

१३४ । प्रथः कित्सम्प्रसारणञ्च ।

पृथक् ।

अस्मिन्नेव ग्रन्थे श्लो० 437. पृथङ्नभस्वतश्चण्डात् । 'पृथग्विना' (सू. 603) इत्यादिना विकल्पात्पञ्चमी । स्वरादिपाठादव्ययत्वम् ।

१३५ । भियः षुक् ह्रस्वश्च ।

भिषक् ।

भट्टिकाव्ये—XII. 82.

उवाच चैनं क्षणदाचरेन्द्रं
सुखं महाराज विना मयास्स्व ।
मूर्खातुरः पथ्यकटून्यनश्नन्
यस्सामयोऽसौ भिषजां न दोषः ॥ 2879 ॥

भिषजां वैद्यानाम् ।

१३६ । युष्यसिभ्यां मदिक् ।

युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वं अहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1946. त्वं पुनीहि मे ।

१३७ । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।

एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमस्सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । प्रज्ञाघणि क्षौमञ्च । भाम आदित्यः । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः ।

चम्पूरामायणे—IV. 6.

> तपनपवनयोर्यः प्राप्तवान्पुत्रभावं
> शतमखकृतपालिर्विद्यया जन्मना च ।
> स तु दशमुखकीर्तिस्तोमसोमस्य पक्ष-
> श्चरम इव तनूमान्प्राप रामं हनूमान् ॥ 2880 ॥

कीर्तिस्तोमसोमस्य ।

अस्मिन्नेव ग्रन्थे श्लो० 233. मुनिर्होमधेनोः ।

अस्मिन्नेव ग्रन्थे श्लो० 2757. भेजे धर्ममनातुरः ।

चम्पूरामायणे—I. 33.

> एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः ।
> लोकानन्दमुकुन्दस्य चत्वार इव बाहवः ॥ 2881 ॥

अस्मिन्नेव ग्रन्थे श्लो० 210. वामौ सुन्दरौ ऊरू यस्यास्सा वामोरूः ।

अस्मिन्नेव ग्रन्थे श्लो० 2064. वाममक्षि ।

चम्पूभारते—III. 92.

> मुरारिनारीमुखपद्मपङ्क्ति-
> र्जवेन योद्धुं जलदुर्गपद्मैः ।
> तीरेऽवतस्थे तिलकापदेशात्
> कृत्वा पुरः केटकमण्डलानि ॥ 2882 ॥

पद्म ।

१३८ । जहातेस्सन्वदालोपश्च ।

जिह्मः कुटिलमन्दयोः ।

अस्मिन्नेव ग्रन्थे श्लो० 985. अजिह्मगामिभिः ।

१३९ । अवतेष्टिलोपश्च ।

अवतीति ओम् । स्वरादिपाठादव्ययत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1315. ओमित्युक्तवतः तथास्त्वित्यङ्गीकृतवतः । 'ओं प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः ।

१४० । ग्रसेरा च ।

ग्रामः ।

अस्मिन्नेव ग्रन्थे श्लो० 1895. ग्रामेष्वात्मविसृष्टेषु ।

१४२ । इषियुधीन्धिदसिश्याधूसूभ्यो मक् ।

इष्मः कामवसन्तयोः । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मस्समित् । दस्मो यजमानः । श्यामः । धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः ।

चम्पूरामायणे—II. 77.

अथावासं शान्तेरकृतसुकृतानामसुलभं
नवाम्भोदश्यामं नलिननयनं वल्कलधरम् ।
जटाजूटापीडं भुजगपतिभोगोपमभुजं
ददर्श श्रीमन्तं विपिनभुवि सीतासहचरम् ॥ 2883 ॥

श्यामम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1227. धूमः ।

अस्मिन्नेव ग्रन्थे श्लो० 924. दक्षिणे ईर्मं व्रणोऽस्यास्तीति दक्षिणेर्मा । व्याधेन व्रणितदक्षिणाङ्ग इत्यर्थः । 'दक्षिणारुः लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः' II. x. 24. इति, 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' II. vi. 54. इति चामरः । 'दक्षिणेर्मा लुब्धयोगे' (सू. 865) इत्यनिच्प्रत्ययान्तो निपातः ।

## १४३ । युजिरुचितिजां कुश्च ।

युग्मम् । रुक्मम् । तिग्मम् ।

चम्पूभारते—I. 27.

तिग्मेन बाणेन जघान तस्मि-
न्युग्मे नराणामधिपः पुमांसम् ।
वातायुराकारमसौ महर्षे-
र्जातायुरन्तस्सहसा ललम्बे ॥ 2884 ॥

तिग्मेन तीक्ष्णेन । युग्मे मिथुने ।

अस्मिन्नेव ग्रन्थे ग० 1256. रुक्ममयकोशम् ।

## १४४ । हन्तेर्हि च ।

हिमम् ।

माघे—VI. 58.

भृशमदूयत याधरपल्लव-
क्षतिरनावरणा हिममारुतैः ।
दशनरश्मिपटेन च सीत्कृतै-
र्निवसितेव सितेन सुनिर्ववौ ॥ 2885 ॥

## १४५ । भियः षुग्वा ।

भीमः । भीष्मः । 'भीमादयोऽपादाने' (सू. 3173) इत्यपादानार्थता ।

अस्मिन्नेव ग्रन्थे श्लो० 2108. वायवोऽवासिषुर्भीमाः ।

अस्मिन्नेव ग्रन्थे श्लो० 626. बिभ्यत्यस्मादिति भीष्मः ।

## १४६ । घर्मः ।

घृधातोर्मग्गुणश्च निपात्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 1160. अघर्मा अनुष्णाः । घर्मोदकबिन्दवः स्वेदबिन्दवः ।

१४७ । ग्रीष्मः ।

ग्रसतेर्निपातोऽयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1440. ग्रीष्मेषु ।

१४८ । प्रथेः षिवन् संप्रसारणञ्च ।

पृथिवी । षवन्नित्येके । 'पृथवी पृथिवी पृथ्वी' इति शब्दार्णवः ।

अस्मिन्नेव ग्रन्थे श्लो० 119. पृथिवी भूः । षिवन् । 'षिद्गौरादिभ्यश्च' (सू. 498) इति ङीष् । पृथ्वी पृथुः । 'वोतो गुणवचनात्' (सू. 502) इति विकल्पान्ङीष् ।

१४९ । अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ।

अश्वः । 'प्रुष स्नेहनादौ' । प्रुष्वः स्यादृतुसूर्ययोः । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलञ्च । कण्वं पापम् । बाहुलकादित्त्वे किण्वमपि । खट्वा । विश्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2285. साश्वं रथम् ।

अस्मिन्नेव ग्रन्थे श्लो० 543. खट्वामारूढः खट्वारूढः परतल्पगतः । 'खट्वा क्षेपे' (सू. 688) इति क्षेपे क्तान्तेन द्वितीयासमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 822. विश्वं बिभर्तीति विश्वम्भरा भूमिः । संज्ञायां खच् ।

१५१ । सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे ।

अकर्तर्येते निपात्यन्ते । सरनमनेन विश्वमिति सर्वम् । निपूर्वाद् घृषेर्गुणाभावोऽपि । निघृष्यतेऽनेनेति निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन्सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पद्वो रथो भूलोकश्च । प्रहूयत इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेरालोपो वा । ईषेर्वन् । ईष्व आचार्यः । इष्व इत्यन्ये । बाहुलकाद् ग्रसतेः । ह्रस्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 1345. सर्वराजकः ।

अस्मिन्नेव ग्रन्थे श्लो० 2822. शिवमणुन्नेन ।

चम्पूरामायणे— I. 113.

तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ ।
अह्नभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः ॥ 2886 ॥

अह्नभावम् ह्रस्वभावम् ।

## १५२ । शेवयह्वजिह्वाग्रीवाप्वमीवाः ।

शेवः । यान्त्यनेन यह्वः । ह्रस्वो हुगागमः । लिहन्त्यनया जिह्वा । लकारस्य जः गुणाभावश्च । गिरन्त्यनया ग्रीवा । ईडागमश्च । आप्नोतीत्याप्वो वायुः । मीवा उदर-कृमिः । वायुरित्यन्ये ।

चम्पूरामायणे—IV. 13.

ग—तमेनमृश्यमूके मूकवत्तया निषण्णं विषण्णहृदयं दयालुरालोक्य त्रैलोक्यैक-धन्वी रामस्तद्भेदमवगन्तुकामः काम्यभिज्ञानमालां सुग्रीवग्रीवायां बाणनिवारणनिपुणां सिद्धौषधिमिव बध्वा भूयोऽपि वालिनमाहवायाह्वयेति तमादिदेश ॥ 2887 ॥

## १५३ । कृगॄशृदृभ्यो वः ।

कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ।

अस्मिन्नेव ग्रन्थे श्लो० 1761. गर्वम् ।

## १५४ । कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ।

यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन्निति प्रतिदिवा दिवसः ।

## १५५ । सप्यशूभ्यां तुट् च ।

सप्त । अष्ट ।

अस्मिन्नेव ग्रन्थे श्लो० 1350. यूनो भावो यौवनम् । युवन्शब्दा-द्भावार्थेऽण् ।

चम्पूरामायणे—III. 1.

ग.—कौ युवां युवानौ कुतस्त्यौ वामाचारवत् प्रतिभाति वामाचारः चीरं वपुषि जटाः शिरसि करे च चण्डकोदण्डः कायमाकल्पः क्वचन कल्पलताकल्पेयमनल्पाभरणा तरुणीति ॥ 2888 ॥

युवानौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1900. वृषा ।

भट्टिकाव्ये—XII. 37.

एकेन वाली निहतश्शरेण सुहृत्तमस्ते रचितश्च राजा ।
यदैव सुग्रीवकपिः परेण तदैव कार्यं भवतो विनष्टम् ॥ 2889 ॥

राजा ।

चम्पूरामायणे—I. 85.

गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि ।
तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥ 2890 ॥

सप्त आकृतिर्यस्यास्सा सप्ताकृतिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2426. अष्टौ घण्टा यस्यां सा अष्टघण्टा ।

## १५६ । नञि जहातेः ।

अहः ।

अस्मिन्नेव ग्रन्थे श्लो० 2074. अह्नि ।

## १५७ । श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ।

एते त्रयोदश कनिन्प्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा । पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहतीति प्लीहा कुक्षिव्याधिः । क्लिदू आर्द्रीभावे । क्लिद्यतीति क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा

अग्निसारः । अर्यपूर्वो माङ् अर्यमा । विश्वं प्साति विश्वप्सा अग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च । जनेरुपधालोपो मश्चान्तादेशः । मातर्यन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । मह पूजायाम् । हस्य घो वुगागमश्च । मघवा इन्द्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 2837. शुना ।

भट्टिकाव्ये—XII. 33.

शक्नोति यो न द्विषतो निहन्तुं
विहन्यते नाप्यबलैर्द्विषद्भिः ।
स श्वावराहं कलहं विदध्या-
दासीत दुर्गादि विवर्धयंश्च ॥ 2891 ॥

श्वावराहं । 'तस्येदम्' (सू. 1500) इत्यण् । कलहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1774. उक्ष्णा वृषभेण ।

अस्मिन्नेव ग्रन्थे श्लो० 1051. पूषाचन्द्रौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2060. मूर्धा ।

अस्मिन्नेव ग्रन्थे श्लो० 2715. मूर्ध्नि ।

माघे—IV. 23.

कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो
मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः ।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त-
स्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ 2892 ॥

मूर्ध्नि ।

चम्पूभारते—VI. 85.

संक्षोभे नगरस्य मत्स्यनृपतेर्योद्धुं स्वयं निर्गतान्
दृष्ट्वा तानवकीर्णिनो वितनुमो गच्छाधुना त्वं पुरः ।

इत्युक्त कुरुभूभुजा सदसि गा हर्तुं त्रिगर्तेश्वर-
स्तस्यैवाप पुरीं दिनावधिरिवार्यम्णः प्रतीचीं दिशम् ॥ 2893 ॥

अर्यम्णः सूर्यस्य ।

किरातार्जुनीये—XVI. 6.

अभ्यायतस्सन्ततधूमधूम्रं
व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं
तनोति न व्योमनि **मातरिश्वा** ॥ 2894 ॥

**मातरिश्वा** ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2558. मघवाज्ञया ।

॥ इत्युणादिषु प्रथमः पादः ॥

---

॥ अथ द्वितीयःपादः ॥

— :o: —

१५८ । कृहृभ्यामेणुः ।

करेणुः । हरेणुः गन्धद्रव्यम् ।

माघे—V. 7.

त्रस्तस्समस्तजनहासकरः करेणो-
स्तावत्खरः प्रखरमुल्लयाञ्चकार ।
यावच्चलासनविलोलनितम्बबिम्ब-
विस्रस्तवस्त्रमवरोधवधूः पपात ॥ 2895 ॥

करेणोः ।

माघे—V. 48.

स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सरसाग्रहस्तः ।
बद्धापराणि परितो निगलान्यलावी-
स्स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥ 2896 ॥

करेणुराजः ।

१५९ । हनिकुषिनीरमिकाशिभ्यः क्थन् ।

हथो विषण्णः । कुष्ठः । नीथो नेता । रथः काष्ठम् ।

अस्मिन्नेव ग्रन्थे श्लो० 576. रथैः । 'तितुत्र' (सू. 3163) इत्यादिना इट्प्रतिषेधः ।

१६० । अवे भृञः ।

अवभृथः ।

चम्पूरामायणे—I. 24.

अवभृथेऽवसिते सरयूतटा-
दथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः
पुरमगात्पुरुहूतपुरोपमाम् ॥ 2897 ॥

अवभृथे ।

## १६१ । उषिकुषिगर्तिभ्यस्थन् ।

ओष्ठः । कोष्ठम् । गाथा । अर्थः ।

माघे—IV. 38.

बिम्बोष्ठं बहुमनुते तुरङ्गवक्त्र-
श्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।
श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्री-
मुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥ 2898 ॥

बिम्बोष्ठम् ।

चम्पूरामायणे—I. 97.

ग.—अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखेभ्यस्तेभ्यो हविष्यन्दादिभ्यश्शापेन वसिष्ठपुत्रदशां दत्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्यामम्बरीषं शुनश्शेपं च परिपूर्णमनोरथौ कारयामास ॥ 2899 ॥

गाथा ।

अस्मिन्नेव ग्रन्थे श्लो० 911. त्वदर्थं साधयितुम् ।

## १६२ । सतेर्णित् ।

सार्थस्समूहः ।

नैषधे—II. 16.

स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥ 2900 ॥

अरिसार्थेषु शत्रुसङ्घेषु ।

१६३ । जॄवृञ्भ्यामूथन् ।

जरूथं मांसम् । वरूथो रथगुप्तौ ना ।

१६४ । पातृतुदिवचिरिचिसिचिभ्यस्थक् ।

पीथो रविः । घृतं पीथम् ।

"तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्भःस्त्रीरजस्सु च विश्रुतम् ॥"

इति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्रचेरपि । 'रिक्थमृक्थं धनं वसु' । सिक्थम् ।

अस्मिन्नेव ग्रन्थे श्लो० 7. अशेषतीर्थोपहृता अपः ।

अस्मिन्नेव ग्रन्थे श्लो० 1394. तीर्थे सत्पात्रे ।

'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि ।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि' ॥

इति हलायुधः ।

१६६ । निशीथगोपीथावगथाः ।

निशीथोऽर्धरात्रो रात्रिमात्रञ्च । गोपीथं तीर्थम् । अवगथः प्रातःस्नातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1400. निशीथे ।

१६८ । समीणः ।

समिथो वह्निः सङ्ग्रामश्च ।

१६९ । तिथपृष्ठगूथयूथप्रोथाः ।

तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । 'प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते' ।

चम्पूभारते—III. 47.

गोपृष्ठलग्नं कुलशैलकन्या-
सहायमन्तस्सततं दधानः ।
आश्चर्यमैक्षिष्ट तमेव देवं
गोकर्णवासं कुरुराजसूनुः ॥ 2901 ॥

चम्पूभारते—I. 16.

भूभुजोऽस्य सविधे विचरन्त्यो-
र्भोजमद्रसुतयोर्दृशि शोभाम् ।
जेतुकाममिव सर्वसमष्ट्या
प्रादुरास पुरतो मृगयूथम् ॥ 2902 ॥

नैषधे—I. 60.

चलाचलप्रोथतया महीभृते
स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं
स्वयं हयस्येव च मौनमास्थितम् ॥ 2903 ॥

चलाचलप्रोथतया स्वभावतः स्फुरमाणघोणतया । 'घोणा तु प्रोथमस्त्रियाम्' II. viii. 50. इत्यमरः ।

१७० । स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-
वृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसि-
दम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ।

द्वात्रिंशद्भ्यो रक् स्यात् । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्दी, उन्द्रो जलचरः । श्वित्रं कुष्ठम् । 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च

दानवे'। अजेर्वी वीरः। नीरम्। पद्रो ग्रामः। मद्रो हर्षो देशभेदश्च। 'मुद्रा प्रत्ययकारिणी'। 'खिद्रो रोगो दरिद्रश्च'। छिद्रम्। भिद्रं वज्रम्। मन्द्रः। चन्द्रः। पचाद्यचि चन्दोऽपि। दह्रोऽग्निः। दस्रः स्वर्वैद्यः। 'दभ्रस्समुद्रः स्वल्पश्च' वसेस्सम्प्रसारणे।

**३१६८। न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्। (८. ३. ११०)**

इति रेफपरस्य सस्य मूर्धन्यो न स्यात्। उस्रो रश्मिः। उस्रा गौः। वास्रो दिवसः। वास्रं मन्दिरम्। शीरोऽजगरः। हस्रो मूर्खः। सिध्रस्साधुः। शुभ्रम्। बाहुलकात् मुसे रक्। मुस्रम् उदश्रु।

अस्मिन्नेव ग्रन्थे श्लो० 560. धनुर्वक्रोऽजनि।

अस्मिन्नेव ग्रन्थे श्लो० 883. शक्रम्।

अस्मिन्नेव ग्रन्थे श्लो० 1292. क्षिप्रम्।

अस्मिन्नेव ग्रन्थे श्लो० 2223. क्षुद्रान्।

अस्मिन्नेव ग्रन्थे श्लो० 2086. वृत्रः।

अस्मिन्नेव ग्रन्थे श्लो० 1206. वीरश्री।

चम्पूभारते—II. 5.

तेषां तदानीं धृतराष्ट्रजानां
तीरे च नीरे विविधप्रयोगाः।
मरुत्सुतं मारयितुं प्रवीरं
सारा गुणाः साधनतामवापुः ॥ 2904 ॥

प्रवीरम्। नीरम्।

चम्पूभारते—XI. 19.

अथ मद्रनायकनिबद्धसैन्धवं
रथमारुरोह रविभूः पराक्रमी।

प्रमदश्च कौरवचमूचरान्क्षणा-
दतिसाध्वसञ्च परयोधमण्डलम् ॥ 2905 ॥

मद्राणां नायको मद्रनायकः ।

अस्मिन्नेव ग्रन्थे श्लो० 2635. निद्रामुद्राम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2828. मुद्रिका । स्वार्थे कपि कात्पूर्वादित्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2218. चन्दयत्याह्लादयतीति चन्द्रः ।

१७१ । चकिरम्योरुच्चोपधायाः ।

चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ।

१७३ । अमितम्योर्दीर्घश्च ।

आम्रं ताम्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1242. आम्रवणम् ।

१७४ । निन्देर्नलोपश्च ।

निद्रा ।

अस्मिन्नेव ग्रन्थे श्लो० 2635. निद्रामुद्राम् ।

१७५ । अर्देर्दीर्घश्च ।

आर्द्रम् ।

रघुवंशे—II. 11.

धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकामविस्तारफलं हरिण्यः ॥ 2906 ॥

अस्मिन्नेव ग्रन्थे श्लो० 6. आर्द्रकेसर ।

१७६ । शुचेर्दश्च ।

शूद्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 5. शूद्रा तज्जातिरङ्गना । टाप् ।

१७७ । दुरीणो लोपश्च ।

दुःखेनेयते प्राप्यत इति दूरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 444. न दूरात् विन्ध्यपर्वतात् ।

१७८ । कृतेश्छः क्रू च ।

कृच्छ्रं क्रूरः ।

१७९ । रोदेर्णिलुक् च ।

रोदयतीति रुद्रः ।

माघे—IV. 7.

स्कन्धाधिरूढोज्ज्वलनीलकण्ठा-
नुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।
प्रणर्तितानेकलताभुजाग्रान्
रुद्राननेकानिव धारयन्तम् ॥ 2907 ॥

१८२ । सुसूधागृधिभ्यः क्रन् ।

सुरः । सूरः । धीरः । गृध्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 246. सुरः ।

अस्मिन्नेव ग्रन्थे श्लो० 974. धीरैः धृष्टैः प्राज्ञैः ।

अस्मिन्नेव ग्रन्थे श्लो० 2049. अधीरलोचनः अस्थिरदृष्टिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1459. धियं रातीति धीरो मनोहरः ।

अस्मिन्नेव ग्रन्थे श्लो० 2006. गृध्रः ।

१८३ । शुसिचिमीनां दीर्घश्च ।

शूरः । सीरम् । चीरम् । मीरः समुद्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 839. शूरमात्मानं मन्यत इति शूरमानी । 'आत्ममाने खश्च' (सू. 2993) इति चकारात् णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1057. सीरपाणिः ।

अस्मिन्नेव ग्रन्थे ग० 2888. चीरम् ।

१८४ । वृधिवपिभ्यां रन् ।

वर्ध्रं चर्म । वप्रः प्राकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 1362. वर्धन्त इति वर्ध्राणि । वर्ध्रं त्रपुवरत्रयोरिति विश्वः । रन्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 2074. वप्राः सानवः । वप्रोऽस्त्री सानुमानयोरिति कोशः ।

माघे—IV. 27.

इतस्ततोऽस्मिन्विलसन्ति मेरो-
स्समानवप्रे मणिसानुरागाः ।
स्त्रियश्च पत्यौ सुरसुन्दरीभि-
स्समा नवप्रेमणि सानुरागाः ॥ 2908 ॥

वप्रम् ।

१८५ । ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः ।

रन्नन्ता एकोनविंशतिः । निपातनाद्गुणाभावः । ऋज्रो नायकः । इदि इन्द्रः । अङ्गेर्नलोपः । अग्रम् । 'वज्रोऽस्त्री हीरके पवौ' । डुवप्, उपधाया इत्वम् । विप्रः । कुंबिचुम्ब्योर्नलोपः । कुब्रमरण्यम् । चुब्रं मुखम् । क्षुर विलेखने । रेफलोपः । न गुणः । क्षुरः । खुर छेदने । रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः । भद्रम् ।

उच समवाये । चस्य गः उग्रः । भिभी भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः । शुक्रः । पक्षे लः, शुक्लः । गुङ् । वृद्धिः । 'गौरोऽरुणे सिते पीते'। वन सम्भक्तौ । वत्रो विभागी । इणो गुणाभावः । इरा मद्ये च वारिणि । मा माने, माला ।

अस्मिन्नेव ग्रन्थे श्लो० 1723. इन्द्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 2842. दीपाग्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2020. वज्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1848. विप्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1688. खुराञ्चलैः ।

चम्पूभारते—VI. 22.

इदमेव हि सद्म भद्रभद्रं
यदिदानीं तव मार्दवज्ञमङ्घ्रेः ।
अयमप्यहमस्मि धन्यधन्यो
हरिणाक्षि त्वदपाङ्गगोचरो यः ॥ 2909 ॥

अस्मिन्नेव ग्रन्थे श्लो० 104. उग्रं पश्यन्तीत्युग्रम्पश्याः । निपातः ।

चम्पूभारते—II. 107.

शङ्खान्दध्मुस्ताडयन्ति स्म भेरी-
श्चक्रुः क्ष्वेलांश्चापनादान्विवव्रुः ।
सिद्धादीनां घोसदां लालनीये
युद्धारम्भे ते द्वयेऽपि प्रवीराः ॥ 2910 ॥

अस्मिन्नेव ग्रन्थे श्लो० 897. शुक्लैः ।

अस्मिन्नेव ग्रन्थे श्लो० 2837. मालाम् ।

१८७ । समि कस उकन् ।

कस गतौ । सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनोऽस्थिरश्च ।

## १८९ । भियः क्रुकन् ।

भीरुकः ।

## १९० । क्वुन्शिल्पिसंज्ञयोरपूर्वस्यापि ।

रजकः । इक्षुकुट्टकः । चष भक्षणे । चषकः । शुनकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1390. चषकम् ।

## १९५ । बहुलमन्यत्रापि ।

कुहकः । कृतकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 300. कृतकृतकरुषा ।

## १९७ । उदकश्च ।

## १९८ । वृश्चिकृषोः किकन् ।

वृश्चिकः । कृषिकः ।

## १९९ । प्राङि पणिकषः ।

प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ।

अस्मिन्नेव ग्रन्थे श्लो० 1593. प्रापणिकात् । प्रपणो व्यवहारः प्रयोजनमस्य प्रापणिको वणिक् । 'प्रयोजनम्' ( सू. 1772 ) इति ठक्प्रत्यय इकिति माधव्याख्यायाम् । 'पण्याजीवो ह्यापणिकः' II. ix. 78. इत्यमरः ।

## २०० । मुषेर्दीर्घश्च ।

मूषिकः आखुः ।

रामायणे अयोध्या—XXXIII. 19.

रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः ।
मूषिकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ 2911 ॥

२०२ । क्रिय इकन् ।

क्रयिकः क्रेता ।

अस्मिन्नेव ग्रन्थे श्लो० 1507. पर्यापतत्क्रयिकलोकं । ' वस्नक्रयविक्रयाट्ठन् ' सू. 1563) इति ठन् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ।

२०४ । श्यास्त्याहृञविभ्य इनच् ।

श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 1763. श्येनपक्षः ।

चम्पूरामायणे—III. 38.

यद्यस्ति कौतुकमपूर्वमृगे मृगाक्षि
चान्द्रं हरामि हरिणं मम सन्निधेहि ।
यावन्न मुञ्चसि मया हृतमेणमेनं
तावद्दधातु तव वक्त्रतुलां मृगाङ्कः ॥ 2912 ॥

२०५ । वृजेः किच्च ।

वृजिनम् ।

२०६ । अजेरज च ।

वीभावबाधनार्थम् । अजिनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 761. एणाजिनम् ।

२०७ । बहुलमन्यत्रापि ।

कठिनं नलिनम् । 'ज्योत्स्नातमिस्र' (सू. 1921) इत्यादिना मलिनमिति निपातः । कुण्डिनम् । द्यतेः, 'यत्परुषि दिनम्' । दिवसोऽपि दिनम् ।

माघे—VII. 19.

लघु ललितपदं तदंसपीठद्वयनिहितोभयपाणिपल्लवान्या ।
सकठिनकुचचूचुकप्रणोदं प्रियमबला सविलासमन्वियाय ॥ 2913 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1768. नलिनम् । मलिनम् ।

नैषधे—II. 64.

अथ भीमसुतावलोकनैस्सफलं कर्तुमहस्तदेव सः ।
क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययौ ॥ 2914 ॥

रघुवंशे—II. 25.

इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥ 2915 ॥

## २०८ । द्रुदक्षिभ्यामिनन् ।

द्रविणम् । दक्षिणः । दक्षिणा ।

## २०९ । अर्तेः किदिच्च ।

इरिणम् शून्यम् ।

## २१० । वेपितुह्योर्ह्रस्वश्च ।

विपिनम् तुहिनम् ।

चम्पूरामायणे—III. 1.

प्रविश्य विपिनं महत्तदनु मैथिलीवल्लभो
महाबलसमन्वितश्चलितनीलशैलच्छविः ।
निशाचरदवानलप्रशमनं विधातुं शरै-
श्चचार सशरासनः सुरपथे तटित्वानिव ॥ 2916 ॥

अस्मिन्नेव ग्रन्थे श्लो० 42. तुहिनकिरणवंशः ।

## २११ । तलिपुलिभ्यां च ।

'तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु' । पुलिनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1559. गोदावर्यां पुलिनविहृतिम् ।

२१२ । गर्भेरत उच्च ।

गौरादित्वन्ङीष् । गुर्विणी गर्भिणी ।

२१३ । रुहेश्च ।

रोहिणः ।

२१५ । क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च ।

वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति स्रूः यज्ञोपकरणम् । द्रूः हिरण्यम् । कटप्रूः कामरूपी कीटश्च । 'जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्' ।

अस्मिन्नेव ग्रन्थे श्लो० 204. वागर्थाविव ।

अस्मिन्नेव ग्रन्थे श्लो० 2811. श्रियः पतिः ।

२१६ । आप्नोतेर्ह्रस्वश्च ।

आपः । अपः । अद्भिः । अद्भ्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1073. तुन्दिलापया । 'ऋक्पूः' (सू. 940) इत्यादिना अः ।

२१७ । परौ व्रजेः षः पदान्ते ।

व्रजेः क्विब्दीर्घौ स्तः । पदान्ते तु षश्च । परिव्राट् । परिव्राजौ ।

२१८ । हुवः श्लुवच्च ।

जुहूः ।

२१९ । स्रुवः कः ।

स्रुवः ।

२२० । चिक् च ।

स्रुक् ।

## २२१ । तनोतेरनश्च वः ।

तनोतेः चिक्प्रत्ययः, अनो वशब्दादेशश्च । त्वक् ।

चम्पूरामायणे—II. 22.

वासस्त्वचां भवतु किञ्चन तारवीणां
छायाद्रुमाश्च भवनानि भवन्तु धन्याः ।
कैकेयि तस्य शयनानि कथं भवेयु-
स्त्वच्चेतसोऽपि कठिनानि शिलातलानि ॥ 2917 ॥

## २२२ । ग्लानुदिभ्यां डौः ।

ग्लौः । नौः ।

अस्मिन्नेव ग्रन्थे श्लो० 1532. नाव्याः नौभिस्तार्याः । 'नाव्यं त्रिलिङ्गं नौतार्ये' I. ix. 16. इत्यमरः । 'नौवयो' (सू. 1643) इति यत्प्रत्ययः ।

## २२४ । रातेर्डैः ।

राः रायौ रायः ।

## २२५ । गमेर्डोः ।

'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः ।
स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ।
नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' ॥

बाहुलकाद् द्युतेरपि डोः । 'द्यौः स्त्री स्वर्गान्तरिक्षयोः' इति कोशः ।

अस्मिन्नेव ग्रन्थे श्लो० 98. गाः कोटिशः स्पर्शयता घटोध्नीः ।

अस्मिन्नेव ग्रन्थे श्लो० 2351. द्याम् ।

## २२६ । भ्रमेश्च डूः ।

भ्रूः । चाद्द्रमेः । अग्रेगूः ।

अस्मिन्नेव ग्रन्थे श्लो० 2212. भ्रूः ।

२२७ । दमेर्डोसिः ।

दोः दोषौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2788. दोष्मान् ।

२२८ । पणेरिजादेश्च वः ।

वणिक् । स्वार्थेऽण् । 'नैगमो वणिजो वणिक्' ।

अस्मिन्नेव ग्रन्थे श्लो० 1718. वणिक् प्रग्राहवान् ।

२३२ । सुयुरुवृञो युच् ।

सवनश्चन्द्रमाः । यवनः । रवणः कोकिलः । वरणः ।

अस्मिन्नेव ग्रन्थे श्लो० 200. यवनानां स्त्रियो यवन्यः ।

२३३ । अशे रश च ।

अश्नातेर्युच् स्याद्रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् । रसना ।

अस्मिन्नेव ग्रन्थे श्लो० 853. रसनाग्रनर्तकी ।

२३४ । उन्देर्नलोपश्च ।

ओदनः ।

२३५ । गमेर्गश्च ।

गमेर्युच् स्याद्गश्चादेशः । गगनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2859. गगनम् ।

२४० । धृषेर्धिष् च संज्ञायाम् ।

धिषणो गुरुः । धिषणा धीः ।

चम्पूरामायणे—I. 17.

अपि कुशलममर्त्याः स्वागतं साम्प्रतं द-
श्शमितदनुजदम्भा किन्तु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गा-
स्त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ 2918 ॥

## २४१ । वर्तमाने पृषद्बृहन्महज्जगच्छतृवत् ।

अतिप्रत्ययान्ताः । पृषु सेचने । गुणाभावः । पृषन्ति । बृहत् । महान् । गमेर्जगादेशः । जगत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1663. बृहत्यस्तुला येषु तैः बृहत्तुलैः । बृहच्छब्दस्य गौरादित्वान्ङीष् । एवं महती ।

चम्पूभारते—II. 30.

अद्य ते सविधमापतेदसौ हृद्यमेतदुचितं वचः शृणु ।
मारणं रिपुषु तन्वतामुना मा रणं कुरु महान्बलेन सः ॥ 2919 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2811. जगत् ।

## २४२ । संश्चत्तृपद्वेहत् ।

एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेस्सुट् । इकारलोपः । संश्चत् कुहकः । तृपत् छत्रम् । विपूर्वाद्धन्तेष्टिलोपः । इत ए च । वेहद्गर्भोपघातिनी ।

## २५० । तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ।

शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः । तौ चानिटौ । शंस्ता स्तोता । शंस्तारौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । 'क्षत्ता स्यात्सारथौ द्वास्थे वेश्यायामपि शूद्रजे' ।

## २५१ । बहुलमन्यत्रापि ।

मन् मन्ता । हन् हन्ता इत्यादि ।

२५२ । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ।

न पतन्त्यनेन पितरो नरके इति नप्ता पौत्रो दौहित्रश्च । नयतेष्षुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः । भ्राता । पातेराकारस्येत्वं पिता । दुहेस्तृच् इट् गुणाभावश्च । दुहिता ।

माघे—III. 35.

त्वष्टुस्सदाभ्यासगृहीतशिल्प-
विज्ञानसम्पत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु
छायेव या स्वर्जलधेर्जलेषु ॥ 2920 ॥

रघुवंशे—I. 62.

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ 2921 ॥

अस्मिन्नेव ग्रन्थे श्लो० 974. भ्रातृमातुलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 220. भ्राता ।

भट्टिकाव्ये—VI. 11.

आः कष्टं बत ही चित्रं हुं मातर्दैवतानि धिक् ।
हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः ॥ 2922 ॥

मातः । पितः ।

अस्मिन्नेव ग्रन्थे श्लो० 204. माता च पिता च पितरौ । 'पिता मात्रा' (सू. 926) इत्येकशेषः ।

रघुवंशे—XI. 49.

प्राहिणोच्च महितं महाद्युतिः
कोसलाधिपतये पुरोधसम् ।

भृत्यभावि दुहितुः परिग्रहा-
द्दिश्यतां कुलमिदं निमेरिति ॥ 2923 ॥

## २५३ । सुञ्यसेर्ऋन् ।

स्वसा ।

चम्पूभारते—II. 41.

अयि किं ब्रवीमि परिपाकमंहसा-
मतिभीषणो बक इति क्षपाचरः ।
स्वसुरादरात्स्वयमिवागतो यमो
यमुनावनान्तमवलम्ब्य वर्तते ॥ 2924 ॥

## २५४ । यतेर्वृद्धिश्च ।

याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' II. vii. 30 इत्यमरः ।

नैषधे—VI. 83.

मन्दाकिनीनन्दनयोर्विहारे
देवे भवेद्देवरि माधवे च ।
श्रेयः श्रियां यातरि यच्च सत्यां
तच्चेतसा भाविनि भावय त्वम् ॥ 2925 ॥

श्रियां श्रीदेव्यां यतत इति यातरि देवृभार्यायां सत्याम् ।

## २५५ । नञि च नन्देः ।

न नन्दति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके । 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः ।

## २५६ । दिवेर्ऋः ।

देवा देवरः । स्वामिनो देवृदेवरौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2925. देवरि ।

२५७ । नयतेर्डिच्च ।

ना नरौ नरः ।

२५९ । अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ।

अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकाद्रजनिः ।

चम्पूभारते—V. 115.

तत्तादृशो भगवतो वचसा निकाम-
मासाद्य मोदभरमाश्रममागतानाम् ।
प्राप्तारणेर्द्विजवरस्य शुचैव साक-
मन्तं जगाम समयोऽपि महानमीषाम् ॥ 2926 ॥

अस्मिन्नेव ग्रन्थे ग० 2613. सरणिम् ।

अस्मिन्नेव ग्रन्थे ग० 958. धरण्याम् ।

चम्पूरामायणे—II. 26.

ग.—तत्क्षणमशनिहत इव पर्वतस्सर्वतः परीतदवदहन इव वनस्पतिर्दिवस्पति-पदभ्रंशविधुर इव नहुषः पपात निस्संज्ञः पंक्तिरथः ॥ 2927 ॥

नैषधे—I. 143.

इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयावनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥ 2928 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2869. तरणिः ।

अस्मिन्नेव ग्रन्थे श्लो० 165. रजनिचरमभागे ।

अस्मिन्नेव ग्रन्थे श्लो० 93. रजनीम् । 'कृदिकारादक्तिनः' (ग. सू. 50. सू. 503) इति ङीष् ।

२६० । आङि शुषेस्सनश्छन्दसि ।

आशुशुक्षणिरग्निर्वातश्च ।

चम्पूभारते—II. 21.

ग.—जातुचिदपत्यैस्सह पञ्चभिः भृत्यभावमिषादमीषामामिषफलेषु विषं निनीषन्त्या निषादयोषित इव तस्य पुरोचनस्य निद्रायामपि द्राविमाणं दातुकामेन तत्र सद्मनि क्षणदायामाशुशुक्षणिं क्षणान्निक्षिप्य जननीसोदरजननीचेतरसंवेशसुखमणिमञ्चायमानभुजशिखरसीमेन भीमेन तस्माद्गृहात् विदुरकिङ्करकृतलिङ्गया सुरङ्गया निर्जगमे ॥2929॥

## २६३ । वृतेश्च ।

वर्तनिः ।

चम्पूभारते—I. 19.

प्रजवं हयं गमयते ततस्ततः
पतिता नृपाय शल्लीशलाकिकाः ।
गहने वनेऽपि पिशुनत्वमाचरन्
ग्रहणे वराहकुलवर्तनी भुवाम् ॥ 2930 ॥

वराहकुलवर्तनी । 'कृदिकारादक्तिनः' (ग. सू. 50. सू. 503) इति ङीष् ।

## २६४ । क्षिपेः किच्च ।

क्षिपणिरायुधम् ।

## २६५ । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ।

अर्चिर्ज्वाला । इदन्तोऽप्ययम् । 'अग्नेर्भाजन्तेऽर्चयः' । शोचिर्दीप्तिः । हविस्सर्पिः । 'इस्मन्' (सू. 2985) इति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि ।

अस्मिन्नेव ग्रन्थे श्लो० 2921. हविः । इसुसन्तः । अर्चिः स्त्रियां च । छदिः स्त्रियामेवेति लिङ्गानुशासनप्रकरणे ।

## २६७ । द्युतेरिसिन्नादेश्च जः ।

ज्योतिः ।

## २७२ । जनेरुसिः ।

जनुर्जननम् ।

चम्पूरामायणे—VI. 17.

पौलस्त्यमग्रजनुषं परुषं वदन्तं
सन्त्यज्य बान्धवजनञ्च विभीषणोऽहम् ।
रामं विराममिह विद्विषतामवाप-
मापन्नदैन्यहरणं शरणं ममेति ॥ 2931 ॥

## २७३ । मनेर्धश्छन्दसि ।

मधुः ।

## २७४ । अर्तिपृवपियजितनिधनितपिभ्यो नित् ।

अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । धनुरस्त्रियाम् । 'धनुर्वंश-विशुद्धोऽपि निर्गुणः किं करिष्यति' । सान्तस्योदन्तस्य वा रूपम् । 'तपुः सूर्याग्निशत्रुषु' ।

अस्मिन्नेव ग्रन्थे ग० 756. महारुषा महाव्रणेन ।

अस्मिन्नेव ग्रन्थे श्लो० 2718. वपुषः ।

अस्मिन्नेव ग्रन्थे श्लो० 1926. धनुः ।

## २७५ । एतेर्णिच्च ।

आयुः । आयुषी ।

चम्पूभारते—I. 74.

आयुषस्सन्ततिं दीर्घामावहन्नपि पौरवः ।
आयुषस्सन्ततेरन्तमाजगाम रतेरिव ॥ 2932 ॥

## २७६ । चक्षेः शिच्च ।

चक्षुः ।

२७७ । मुहेः किच्च ।

मुहुरव्ययम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2326. मुहुरसुसमम् ।

२७९ । कृगृशृवृञ्चतिभ्यः ष्वरच् ।

कर्वरो व्याघ्ररक्षसोः । गर्वरोऽहङ्कारी । शर्वरी रात्रिः । षित्वान्ङीष् । वर्वरः प्राकृतो जनः । चत्वरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 36. शर्वरी ।

चम्पूरामायणे—V. 38.

रक्षस्सङ्घट्टचूर्णीकृतकनकमहाभित्तिचैत्योत्थधूल्या
नक्षत्राणामकाले सरणिमरुणयन्वीरलक्ष्म्या समेतः ।
रक्षश्शूराख्यशारान् क्षितितलफलके क्षेपणीयां हनूमा-
नक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ ॥ 2933 ॥

२८० । नौ सदेः ।

'निषद्वरस्तु जम्बालः' I. ix. 9. इत्यमरः । निषद्वरी रात्रिः ।

॥ इत्युणादिषु द्वितीयः पादः ॥

—:o:—

## ॥ अथ तृतीयः पादः ॥

---

२८१ । छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ।

एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यञ्जनम् । यमेर्दकारः । संयद्वरो नृपः । पदेस्सम्पद्वर इत्येके ।

अस्मिन्नेव ग्रन्थे श्लो० 1667. पीवरौ ।

२८२ । इण्सिञ्जिदीङुष्यविभ्यो नक् ।

'इनस्सूर्ये नृपे पत्यौ' । सिनः काणः । जिनः अर्हन् । दीनः । उष्णः । ऊनः ।

अस्मिन्नेव ग्रन्थे श्लो० 2915. दीनाः ।

अस्मिन्नेव ग्रन्थे श्लो० 427. कवोष्णमीषदुष्णम् । 'कवं चोष्णे' (सू. 1033) इति कवादेशः ।

अस्मिन्नेव ग्रन्थे श्लो०. 439. ऊनम् ।

२८३ । फेनमीनौ ।

एतौ निपात्येते । स्फायतेः फेनः । मीनः ।

अस्मिन्नेव ग्रन्थे श्लो० 2255. फेनायमानं फेनमुद्वमन्तम् । 'फेनाच्चेति वक्तव्यम्' (वा. 1764. सू. 2672) इति क्यष् ।

नैषधे—I. 105

करेण मीनं निजकेतनं दधद्-
द्रुमालवालाम्बुनिवेशशङ्कया ।

व्यतर्कि सर्वर्तुघने वने मधुं
समित्रमलानुसरन्निव स्मरः ॥ 2934 ॥

२८४ । कृषेर्वर्णे ।

कृष्णः ।

२८५ । बन्धेर्ब्रधिबुधी च ।

ब्रध्नः । बुध्नः ।

२८६ । धापृवस्यज्यतिभ्यो नः ।

'धाना भृष्टयवे स्त्रियः' । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्नः आदित्यः । बाहुलकाच्छृणोतेः । श्रोणः पङ्गुः ।

२८७ । लक्षेरट् च ।

लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके । 'लक्षणं लक्ष्मणं नाम्नि चिह्ने च' । लक्षणः । लक्ष्मणश्च रामभ्राता । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' ।

अस्मिन्नेव ग्रन्थे श्लो० 1745. लक्ष्मणानुगतकान्तवपुः ।

अस्मिन्नेव ग्रन्थे श्लो० 135. अरहितरामलक्ष्मणानाम् गिराम् । अवियुक्तरमणसारसयोषितः सरस्यः ।

२९० । कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ।

कर्णः । वर्णः । 'जर्णश्चन्द्रे च वृक्षे च' । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ।

रघुवंशे—IV. 13.

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण, सूक्ष्मकार्यार्थदर्शिना ॥ 2935 ॥

अस्मिन्नेव ग्रन्थे श्लो० 88. सेना ।

अस्मिन्नेव ग्रन्थे श्लो० 2160. पन्नं पतितं गच्छन्तीति पन्नगाः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् । 'सर्वत्र पन्नयोरुपसंख्यानम्' (वा. 2014. सू. 2965) इति डः ।

चम्पूभारते—II. 58.

भोक्तुमन्नमपि सूपसमग्रं दोग्धुमप्यभिनवप्रसवा गाः ।
लप्स्यते द्विजगणोऽपि च तस्माद्वत्सलाद्दुहितुरुत्सवकाले ॥ 2936 ॥

अस्मिन्नेव ग्रन्थे ग० 585. स्वप्नः ।

## २९२ । तृषिशुषिरसिभ्यः कित् ।

तृष्णा । शुष्णस्सूर्यो वह्निश्च । रस्नं द्रव्यम् ।

## २९४ रमेस्त च ।

रमयतीति रत्नम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2875. रत्नानि ।

## २९५ । रास्नासास्नास्थूणावीणाः ।

रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ।

अस्मिन्नेव ग्रन्थे श्लो० 1339. रोमन्थमन्थरचलद्गुरुसास्नम् ।

चम्पूभारते—V. 63.

वीणास्समस्ता विजयेन कृत्ता
गन्धर्वसैन्याद्गलिता निपेतुः ।
आयुष्मती केवलमालुलोके
हस्ताग्रवीणा दिवि नारदस्य ॥ 2937 ॥

## २९७ । कृत्यशूभ्यां क्स्नः ।

कृत्स्नम् । अक्ष्णमखण्डम् ।

## २९८ । तिजेर्दीर्घश्च ।

तीक्ष्णम् ।

चम्पूरामायणे—III. 5.

ग.—ततः तीक्ष्णतरप्रहरणगवाक्षितवक्षसा रक्षसा नपरित्यक्तेषु प्राणेषु पराक्रमाविषयपराक्रमायां प्राक्रमेतामेतौ तदङ्गगलितरुधिरधारासेकेन खननक्षमायां काननक्षमायां राक्षसशवोचितमवटमतिविशङ्कटमुत्पादयितुम् ॥ 2938 ॥

## २९९ । श्लिषेरच्चोपधायाः ।

श्लक्ष्णम् ।

## ३०० । यजिमनिशुन्धिदसिजनिभ्यो युच् ।

यज्युरध्वर्युः । मन्युर्दैन्ये क्रतौ क्रुधि । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युश्शरीरी ।

चम्पूभारते—III. 18.

दृष्ट्वा तं मधुरस्मितोऽथ विजयः कृत्वासनादुत्थितिं
नत्वांघ्रौ समवेक्ष्य भृत्यमिह मां ब्रजन् सहस्व क्षणम् ।
गावस्ते स्वयमाव्रजेयुरधुनेत्याश्वास्य दस्यून्पुरः
प्राविक्षन्मनसा ततस्तु नृपतेश्शस्त्राय गेहं स्वयम् ॥ 2939 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1990. बाहुप्रतिष्टम्भविवृद्धमन्युः ।

## ३०१ । भुजिमृङ्भ्यां युक्त्युकौ ।

भुज्युर्भाजनम् । मृत्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 68. मृत्युः ।

## ३०२ । सर्तेरयुः ।

सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ।

अस्मिन्नेव ग्रन्थे श्लो० 2897. सरयूतटात् ।

## ३०३ । पानीविषिभ्यः पः ।

पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलका-द्गुणाभावे नीपो वृक्षविशेषः । वेप्यः पानीयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 440. पापापनुत्यै ।

अस्मिन्नेव ग्रन्थे श्लो० 2176. पापमस्यास्तीति पापः । अर्शआदिभ्योऽच् ।

अस्मिन्नेव ग्रन्थे श्लो० 41. नवनीपवनावलिः ।

## ३०६ । सुशृभ्यां निच्च ।

चात्कित् । सूपः । बाहुलकाद्दत्वं शूर्पम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2936. भोक्तुमन्नमपि सूपसमग्रम् ।

## ३०७ । कुयुभ्यां च ।

कुवन्ति मण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः ।

अस्मिन्नेव ग्रन्थे श्लो० 192. कूपस्य तीरे ।

चम्पूभारते—IV. 11.

मेदस्विनं विपुलखाण्डवभक्षणेन
देहं निजं चलयितुं शिखिनोऽक्षमस्य ।
उद्भ्रम्य संज्वलितुमुत्तरवेदिकायां
आलम्बनाय किल यूपवरोऽन्तिकेऽभूत् ॥ 2940 ॥

## ३०८ । खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ।

सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । 'खष्पौ क्रोधबला-त्कारौ' । शीलतेर्ह्रस्वश्च । शिल्पं कौशलम् । 'शसु हिंसायां' निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । 'बाष्पो नेत्रजलोष्मणोः' । बाष्पश्च । रौते-र्दीर्घः । 'रूपं स्वभावे सौन्दर्ये' । पॄ । पर्पं गृहं बालतृणं पङ्गुपीठञ्च । 'तल प्रतिष्ठाकरणे । चुरादिणिचो लुक् । तल्पम् । 'तल्पं शय्याट्टदारेषु' III. iii. 131. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 2920. त्वष्टुस्सदाभ्यासगृहीतशिल्पविज्ञानसम्प-त्प्रसरस्य ।

अस्मिन्नेव ग्रन्थे श्लो० 733. बाष्पनिपातः ।

चम्पूरामायणे—III. 23.

ग—मारीचोऽप्याकर्णितरावणमतः प्रयत्नशतैरप्यनिवार्यमाणे तस्मिन् सुबाहुमेव बहुमन्यमानो गत्यन्तराभावात्तदभ्यर्थनामङ्गीकृत्य जातरूपमयमृगरूपं गृहीत्वा सीतां वञ्चयितुं पञ्चवटीमगाहत ॥ 2941 ॥

माघे—III. 39.

अम्भश्च्युतः कोमलरत्नराशी-
नपांनिधिः फेनपिनद्धभासः ।
यत्रातपे धातुमिवाधितल्पं
विस्तारयामास तरङ्गहस्तैः ॥ 2942 ॥

अधितल्पं अध्यट्टम् । विभक्त्यर्थेऽव्ययीभावः ।

## ३०९ । स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ।

स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा ।

## ३१२ । दाभाभ्यां नुः ।

दानुर्दाता । भानुः ।

माघे—IX. 12.

अविभाव्य तारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः ।
अवसन्नतापमतमिस्रमभादपदोषतेव विगुणस्य गुणः ॥ 2943 ॥

भट्टिकाव्ये—XVI. 16.

पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते ।
नभस्वान्भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥ 2944 ॥

--

## ३१४ । धेट इच्च ।

धयति तामिति धेनुः ।

अस्मिन्नेव ग्रन्थे श्लो० 98. अथैकधेनोः ।

## ३१५ । सुवः कित् ।

'सूनुः पुत्रेऽनुजे रवौ' ।

अस्मिन्नेव ग्रन्थे श्लो० 2023. वालिसूनुना ।

## ३१६ । जहातेर्द्वे ऽन्तलोपश्च ।

जह्नुः ।

चम्पूरामायणे—I. 87.

सैषा भागीरथी जह्नोस्सत्रक्षेत्रं समावृणोत् ।
तां स पीत्वा ततः शान्तो जह्नौ श्रोत्रेण वर्त्मना ॥ 2945 ॥

## ३१७ । स्थो णुः ।

'स्थाणुः कीले स्थिरे हरे' ।

## ३१८ । अजिवृरीरिभ्यो निच्च ।

अजेर्वी वेणुः । वर्णुर्नदद्देशभेदयोः । रेणुः । 'रेणुर्द्वयोः स्त्रियां धूलिः' II. iii. 100. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 62. वेणुना ।

## ३१९ । विषेः किच्च ।

विष्णुः ।

## ३२० । कृदाधारार्चिकलिभ्यः कः ।

कर्को धवलघोटकः । दाको दाता । धाकोऽनड्वान् आधारश्च । राका पौर्णमासी । अर्कः । 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि' ।

चम्पूरामायणे— II. 23.

एवं भर्त्रा भर्त्सिताप्यार्द्रचित्ता
मा भूदेषा मन्थराक्रान्तवृत्तिः ।
शङ्काचन्द्रे राजमानेऽप्यबाधं
वीरुच्छन्ना चन्द्रकान्तस्थलीव ॥ 2946 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2074. अर्कोपलोल्लसितवह्निभिः ।

## ३२१ । सृवृभूशुषिमुषिभ्यः कक् ।

सृक उत्पलवातयोः । वृकः श्वापदकाकयोः । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् ।

चम्पूरामायणे— II. 32.

प्रिये जनकनन्दिनि प्रकृतिपेशलामीदृशीं
कथं ग्लपयितुं सहे तव शिरीषमृद्वीं तनुम् ।
गृहीतहरिणीगणत्रिकविसारिनानासिरा-
क्षतक्षरितशोणितारुणवृकानने कानने ॥ 2947 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1819. शुष्कं नीरसम् । 'शुषः कः' (सू. 3030) इति निष्ठातकारस्य कः ।

## ३२२ । शुकवल्कोल्काः ।

शुभेरन्त्यलोपः । शुकः । वल्कम् । 'वल्कं वल्कलमस्त्रियाम्' II. iv. 14. इत्यमरः । उष दाहे । षस्य लः । उल्का ।

अस्मिन्नेव ग्रन्थे श्लो० 1492. शुकाङ्गनीलोपलनिर्मितानाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2064. उल्का ।

## ३२३ । इण्भीकापाशल्यतिमर्चिभ्यः कन् ।

'एके मुख्यान्यकेवलाः' । 'भेको मण्डूकमेषयोः' इति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः शरीरावयवश्च । मर्कः शरीरवायुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1112. एकः ।

चम्पूरामायणे—V. 34.

ग.—सा तु दीर्घं निश्वस्य निश्चित्य पुरा खलु चित्रकूटतटवने तरुणतरतरुरमणीयतया मन्दीभवन्नन्दनवैभवे रघुनन्दनेनोपधानीकृतांकाया मम पयोधरपरिसरे खरतरनखराग्रविरचितविदारणं धाराधरनामानं काकं रघुपतिर्व्यलोकयत् ॥ 2948 ॥

३२५ । नौ सदेर्डिच्च ।

'निष्कोऽस्त्री हेम्नि तत्फले' ।

३२८ । ह्रियो रश्च लो वा ।

'ह्रीका ह्लीका त्रपा मता' ।

३२९ । शकेरुनोन्तोन्त्युनयः ।

उन उन्त उन्ति उनि एते चत्वारः स्युः । शकुनः शकुन्तः शकुन्तिः शकुनिः ।

अस्मिन्नेव ग्रन्थे ग० 2613. शकुन्ताः ।

३३० । भुवो झिच् ।

भवन्तिर्वर्तमानकालः । बाहुलकादवेश्च । अवन्तिः । वदेर्वदन्तिः । 'किंवदन्ती जनश्रुतिः' I. v. 7. इत्यमरः ।

रघुवंशे—VI. 32.

अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ 2949 ॥

अस्मिन्नेव ग्रन्थे ग० 1278. किंवदन्ती । 'कृदिकारादक्तिनः' (ग. सू. 50.) सू. 503 ) इति ङीष् ।

३३२ । कॄवृदारिभ्य उनन् ।

'करुणो वृक्षभेदः स्यात्करुणा च कृपा मता' । वरुणः । दारुणम् ।

चम्पूभारते—V. 39.

वनं यियासोः कठिने सभान्ते
जटासु रोधो न बभूव यस्य ।
वने विजृम्भत्करुणे तु तस्य
जटासुरोऽधोऽजनि धर्मसूनोः ॥ 2950 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2451. वरुणस्य दिशा ।

अस्मिन्नेव ग्रन्थे श्लो० 1666. दारुणा ।

## ३३४ । तोरश्च लो वा ।

तरुणस्तलुनो युवा ।

अस्मिन्नेव ग्रन्थे श्लो० 2869. तरुणता ।

## ३३५ । क्षुधिपिशिमिथिभ्यः कित् ।

क्षुधुनो म्लेच्छजातिः । पिशुनः । मिथुनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1666. पिशुना ।

चम्पूरामायणे—I. 5.

ग—तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निस्ससार सरस्वती ॥ 2951 ॥

## ३३६ । फलेर्गुक् च ।

फल्गुनः पार्थः । प्रज्ञाद्यण् । फाल्गुनः ।

चम्पूभारते—V. 2.

नाकमेत्य धनुरङ्कितदोष्णा
नायको दिविषदामतिहृष्टः ।
नाम फाल्गुन इति ब्रुवता स्वं
नन्दनेन जगृहे पदयुग्मे ॥ 2952 ॥

३३७ । अशेर्लशश्च ।

लशुनम् ।

३३८ । अर्जेर्णिलुक् च ।

अर्जुनः ।

३३९ । तृणाख्यायां चित् ।

अर्जुनं तृणम् ।

३४० । अर्तेश्च ।

अरुणः ।

अस्मिन्नेव ग्रन्थे श्लो० 2451. नवकुङ्कुमारुणपयोधरया ।

३४१ । अजियमिशीङ्भ्यश्च ।

वयुनं देवमन्दिरम् । यमुना । शयुनोऽजगरः ।

अस्मिन्नेव ग्रन्थे श्लो० 2924. यमुना ।

३४२ । वृतॄवदिहनिकमिकषिभ्यस्सः ।

वर्सं । तर्सं । 'तर्सः प्लवसमुद्रयोः' । वत्सः । वत्सं वक्षः । हंसः । 'कंसोऽस्त्री पानभाजनम्' II. ix. 32. इत्यमरः । कक्षं अरण्यम् ।

३४३ । प्लुषेरच्चोपधायाः ।

प्लक्षः ।

३४४ । मनेर्दीर्घश्च ।

मांसम् ।

३४५ । अशेर्देवने ।

अक्षः ।

अस्मिन्नेव ग्रन्थे श्लो० 2933. अक्षक्रीडा ।

### ३४६ । स्नुव्रश्चिकृत्यृषिभ्यः कित् ।

स्नुषा । वृक्षः । कृत्समुदकम् । ऋक्षं नक्षत्रम् ।

अस्मिन्नेव ग्रन्थे ग० 2648. स्नुषावत्सलतया ।

चम्पूभारते—II. 34.

वृक्षेण वृक्षं गिरिणा गिरीन्द्रं
हस्तेन हस्तं वचसा वचश्च ।
परस्परेण प्रतिरुध्य घोरं
समीकमेतौ सममादधाते ॥ 2953 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1745. ऋक्षगणैः ।

### ३४७ । ऋषेर्जातौ ।

'ऋक्षोऽद्रिभेदे भल्लूके शोणके कृतवेधने । ऋक्षमुक्तं च नक्षत्रे' इति विश्वः ।

### ३५० । अशेस्सरः ।

अक्षरम् ।

चम्पूभारते—I. 37.

ग.—इत्यसङ्कोचं शोचतः पत्युरग्रभुवि समग्रमन्दाक्षरमणीयमन्दाक्षरमणियन्त्रितमिदं वचनं पृथापि कथयामास ॥ 2954 ॥

### ३५१ । वसेश्च ।

वत्सरः ।

### ३५२ । सपूर्वाच्चित् ।

संवत्सरः ।

### ३५३ । कृधूमदिभ्यः कित् ।

बाहुलकान्न षत्वम् । 'कृसरः स्यात्तिलौदनम्' । धूसरः । मत्सरः ।

अस्मिन्नेव ग्रन्थे श्लो० 536. मत्सरिणाम् ।

३५९ । वृतेर्वृद्धिश्च ।

वार्ताकुः । बाहुलकादुकारस्यात्वं वार्ताकम् ।

३६१ । सृयुवचिभ्योऽन्युजागूजक्नुचः ।

क्रमात्स्युः । ' सरण्युर्मेघवातयोः ' । यवागूः । ' वचक्नुर्विप्रवाग्मिनोः ' ।

३६२ । आनकः शीङ्भियः ।

शयानकोऽजगरः । भयानकः ।

चम्पूरामायणे—I. 33.

ग—अथ कदाचिदपरिमेयमायाभयानकयुद्धसमुद्धतदैत्यबलावस्कन्दकान्दिशीकवृन्दारकानीकपरिवार्यमाणरथः पङ्क्तिरथः तपश्चर्याजातानामाश्चर्याणामायतनं त्रिशङ्कुयाजिनं भगवन्तं पद्यप्रबन्धमिव दर्शितसर्गभेदं प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं बुधमिव सोमसुतं कुशिकसुतमद्राक्षीत् ॥ 2955 ॥

३६४ । उल्मुकदर्विहोमिनः ।

उष दाहे । षस्य लः मुकप्रत्ययश्च । उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः । दर्विः । जुहोतेर्मिनिः । होमी ।

चम्पूभारते—VI. 8.

दुर्वीरगर्वासहनोऽथ भीमो
दर्वीकरादर्शितसूदभावः ।
शोणाधरालोलुपसूतसूनोः
प्राणानिलान्पारयितुं किलासीत् ॥ 2956 ॥

३६५ । ह्रियः कुक् रश्च लो वा ।

ह्रीकुः । ह्लीकुः । लज्जावान् ।

३६६ । हसिमृग्रिण्वामिदमिल्लूपूर्विभ्यस्तन् ।

दशभ्यस्तन् स्यात् । 'तितुत्र' (सू. 3163) इति नेट् । हस्तः । मर्तः । गर्तः । एतः कर्बुरः । वातः । अन्तः । दन्तः । 'लोतः स्यादश्रुचिह्नयोः' । 'पोतो बालवहित्रयोः' । धूर्तः । बाहुलकात्तुसेर्दीर्घश्च । तूस्तं पापं धूलिर्जटा च ।

अस्मिन्नेव ग्रन्थे श्लो० 2953. हस्तेन हस्तम् ।

चम्पूभारते—II. 3.

सुप्तस्य तस्य तु सुयोधनभृत्यमुक्ता
वाताशनाश्च सकला वनदेवताश्च ।
आशीर्द्वयं वपुषि चायुषि च प्रतेनुः
पूर्वा न तत्र चरमैव पुपोष वीर्यम् ॥ 2957 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2884. वातायुः । अन्तः ।

अस्मिन्नेव ग्रन्थे ग० 1765. दन्तकुन्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 2847. कपोतपोतः ।

अस्मिन्नेव ग्रन्थे श्लो० 576. हस्तः ।

३६७ । नञ्याप इट् च ।

नापितः ।

३६८ । तनिमृङ्भ्यां किच्च ।

ततम् । मृतम् ।

३६९ । अञ्जिघृसिभ्यः क्तः ।

अक्तम् । घृतम् । सितम् ।

अस्मिन्नेव ग्रन्थे श्लो० 153. घृतम् ।

माघे—I. 25.

सितं सितिम्ना सुतरां मुनेर्वपु-
र्विसारिभिस्सौधमिवाथ लम्भयन् ।

द्विजावलिव्याजनिशाकरांशुभि-
श्शुचिस्मितां वाचमवोचदच्युतः ॥ 2958 ॥

### ३७० । दुतनिभ्यां दीर्घश्च ।

दूतः । तातः ।

चम्पूरामायणे—I. 105.

ग.—तत्र दशरथस्सीतापरिणयकृतनिश्चयजनकप्रहितदूताहूतः पुरोहिताभ्युपगमान्मिथिलामुपागमत् ॥ 2959 ॥

चम्पूरामायणे—V. 60.

हा तात हा जननि हा सुत हा सहाय
हा पौत्र हा प्रियसखि क नु हा हतोऽस्मि ।
इत्यादिपौरपरिदेवनभारवाग्भि-
रापूरि रावणपुरी शिखिना परीता ॥ 2960 ॥

### ३७१ । जेर्मुट् चोदात्तः ।

जीमूतः ।

अस्मिन्नेव ग्रन्थे श्लो० 1206. जीमूतनादायितम् ।

### ३७२ । लोष्टपलितौ ।

लुनातेः क्तः । तस्य सुट् । धातोर्गुणः । लोष्टम् । पलितम् ।

अस्मिन्नेव ग्रन्थे ग० 2247. पलितंभावुकाः ।

### ३७३ । हृश्याभ्यामितन् ।

हरितश्येतौ वर्णभेदौ ।

### ३७४ । रुहे रश्च लो वा ।

'रोहितो मृगमत्स्ययोः' । लोहितं रक्तम् ।

## ३७५ । पिशेः किच्च ।

पिशितं मांसम् ।

माघे—VI. 5.

स्फुटमिवोज्ज्वलकाञ्चनकान्तिभि-
र्युतमशोकमशोभत चम्पकैः ।
विरहिणां हृदयस्य भिदाभृतः
कपिशितं पिशितं मदनाग्निना ॥ 2961 ॥

## ३७८ । वृञ एण्यः ।

वरेण्यः ।

## ३८० । राजेरन्यः ।

राजन्यो वह्निः । 'राजश्वशुराद्यत्' (सू. 1153) इति यति निष्पन्नस्तु राजन्यशब्दः क्षत्रियजातिवाचकः ।

## ३८१ । शॄरम्योश्च ।

शरण्यम् । रमण्यम् ।

## ३८२ । अर्तेर्निच्च ।

अरण्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2406. अरण्ययाने ।

## ३८३ । पर्जन्यः ।

पृषु सेचने । षस्य जः 'पर्जन्यः शक्रमेघयोः' ।

## ३८४ । वदेरान्यः ।

'वदान्यस्त्यागिवाग्मिनोः' ।

चम्पूभारते—V. 93.

यद्गोष्ठीप्रतिहारभूतलशिला चिन्तामणिः कल्पका
यस्यारामभुवि द्रुमाश्च सुरभिस्सा होमधेनुः पुनः ।
तादृग्याचति चेदुपेत्य मघवा सम्पूर्य तत्कामनां
त्रैलोक्यस्य वदान्यसंसदुपरि स्यामेष मे निश्चयः ॥ 2962 ॥

३८५ । अमिनक्षियजिवधिपतिभ्योऽत्रन् ।

अमत्रं भाजनम् । नक्षत्रम् । यजत्रम् । वधत्रमायुधम् । पतत्रं तनूरुहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 802. अतीतनक्षत्रपथानि ।

अस्मिन्नेव ग्रन्थे श्लो० 751. पतत्रि ।

३८६ । गडेरादेश्च कः ।

कडत्रम् । डलयोरेकत्वस्मरणात्कलत्रम् ।

माघे—IV. 34.

आसादितस्य तमसा नियतेर्नियोगा-
दाकांक्षतः पुनरपक्रमणेन कालम् ।
पत्युस्त्विषामिह महौषधयः कलत्र-
स्थानं परैरनभिभूतममूर्वहन्ति ॥ 2963 ॥

३८७ । वृञश्चित् ।

वरत्रा चर्ममयी रज्जुः ।

३९० । भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् ।

दृशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । ‘ दर्शतस्सोमसूर्ययोः’ । यजतः ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 1119. पर्वतः नारदसखो मुनिः शैलश्च ।

३९१ । पृषिरञ्जिभ्यां कित् ।

पृषतो मृगो बिन्दुश्च । रजतम् ।

अस्मिन्नेव ग्रन्थे ग० 2395. रजतगिरिः ।

३९३ । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।

सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । वन्दीति पाठे कर्तरि कर्मणि वा प्रत्ययः । वन्दते वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च । जीवथः आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् । 'शमथस्तु शमश्शान्तिर्दान्तिस्तु दमथो दमः' III. ii. 3. इत्यमरः ।

चम्पूरामायणे—II. 71.

ग.—तत्र सामात्यः समुपेत्य पत्युश्चिताधिरोहणमभिलषन्तीं कौसल्यां भरतश्शपथशतैर्निवार्य वसिष्ठादिष्टेन पथा दशरथाय सदा यागशीलाय यायजूकाभिप्रेतं प्रेतकृत्यमकरोत् ॥ 2964 ॥

३९६ । उपसर्गे वसेः ।

आवसथो गृहम् । संवसथो ग्रामः ।

३९७ । अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ।

त्रयोदशभ्योऽसच् स्यात् । अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमन्त्यस्मिंश्चमसस्सोमपानपात्रम् । ताम्यत्यस्मिन्निति तमसोऽन्धकारः । नमसोऽनुकूलः । रभसो वेगहर्षयोः । लभसो धनं याचकश्च । नभते नभ्यति वा नभस आकाशः । तपसः पक्षी चन्द्रश्च । पतसः पक्षी । 'पनसः कण्टकिफलः' II. iv. 61. इत्यमरः । पणसः पण्यद्रव्यम् । महसं ज्ञानम् ।

माघे—VII. 7.

तव सपदि समीपमानये ता-
महमिति तस्य मयाग्रतोऽभ्यधायि ।
अतिरभसकृतालघुप्रतिज्ञा-
मनृतगिरं गुणगौरि मा कृथा माम् ॥ 2965 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2374. तमसा ।

अस्मिन्नेव ग्रन्थे श्लो० 2594. पनसः ।

३९८ । वेजस्तुट् च ।

बाहुलकादात्वाभावः । वेतसः ।

अस्मिन्नेव ग्रन्थे श्लो० 1312. वैतसीं वृत्तिं वेतससम्बन्धिनीं वृत्तिम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1378. वेतस्वतीभिरद्भिः । 'कुमुद' (सू. 1306) इति ड्मतुप् ।

३९९ । वहियुभ्यां णित् ।

वाहसोऽजगरः । यावसस्तृणसङ्घातः ।

४०० । वयश्च ।

वय गतौ । वायसः काकः ।

४०१ । दिवः कित् ।

दिवसं दिवसः ।

अस्मिन्नेव ग्रन्थे श्लो० 291. दिवसोऽनुमित्रम् ।

४०२ । कृशृशलिकलिगर्दिभ्योऽभच् ।

करभः । शरभः । शलभः । कलभः । गर्दभः ।

माघे—V. 3.

भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
संविव्युरम्बरविकासिचमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥ 2966 ॥

करभः उष्ट्रपोतः ।

चम्पूरामायणे—I. 38.

अस्मिन्पुरा पुरभिदः परमेश्वरस्य
फालान्तरालनयनज्वलने मनोभूः ।
सद्यः प्रपद्य शलभत्वमुमुञ्चदङ्गं
तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ 2967 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2728. कलभाः त्रिंशद्वर्षाः करिणः ।

भट्टिकाव्ये—XIV. 5.

हया जिहेषिरे हर्षाद्गम्भीरं जगर्जुर्गजाः ।
सन्त्रस्ताः करभा रेटुः चुकुवुः पत्तिपङ्क्तयः ॥ 2968 ॥

## ४०३ । ऋषिवृषिभ्यां कित् ।

ऋषभः । वृषभः ।

किरातार्जुनीये—XIV. 40.

महर्षभस्कन्धमनूनकन्धरं
बृहच्छिलावप्रघनेन वक्षसा ।
समुज्जिहीर्षुं जगतीं महाभरां
महावराहं महतोऽर्णवादिव ॥ 2969 ॥

भट्टिकाव्ये—XIV. 6.

तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम् ।
नार्यश्चुक्षुभिरे मम्लुर्मुमुहुः शुशुचुः पतीन् ॥ 2970 ॥

## ४०५ । रासिवल्लिभ्याञ्च ।

रासभः । वल्लभः ।

किरातार्जुनीये—XVI. 7.

भूरेणुना रासभधूसरेण तिरोहिते वर्त्मनि लोचनानाम् ।
नास्त्यत्र तेजस्विभिरुत्सुकानामह्नि प्रदोषस्सुरसुन्दरीणाम् ॥ 2971 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1305. कौसल्यायनिवल्लभाम् ।

## ४०६ । जॄविशिभ्यां झच् ।

जरन्तो महिषः । वेशन्तः पल्वलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 536. वेशन्तपङ्कविहृतेः ।

## ४०८ । तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ।

दशभ्यो झच् स्यात् । स च षित् । तरन्तस्समुद्रः । तरन्ती नौका । भवन्तः कालः । वहन्तो वायुः । वसन्त ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गण्डयन्तो जलदः । मण्डयन्तो भूषणम् । जयन्तः शक्रपुत्रः । नन्दयन्तो नन्दकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1603. वसन्तः ।

चम्पूभारते—V. 8.

पुनः पुनस्तत्र पुलोमपुत्र्याः
जयन्तशङ्कां दधतः स्वकान्त्या ।
नरस्य मौर्वीकिण एव दोष्णो-
र्नामग्रहेषु स्खलनं न्यरौत्सीत् ॥ 2972 ॥

## ४०९ । हन्तेर्मुट् हि च ।

हेमन्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 67. हेमन्ते भवो हैमनः । ‘सर्वत्र’ (सू. 1390) इति हेमन्तशब्दाच्छैषिकोऽण् ।

## ४११ । ऋच्छेररः ।

ऋच्छरा वेश्या । बाहुलकात् जर्जरझर्झरादयः ।

## ४१२ । अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ।

षड्भ्योऽरश्चित्स्यात् । अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः ।

चम्पूभारते—II. 43.

> तादृशः प्रलयकालकठोरो
> वासरस्स तु ममालयभूमेः ।
> द्वारि तिष्ठति बकात्परितुष्टा-
> त्पारितोषिकमिवाद्य जिघृक्षुः ॥ 2973 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2828. भ्रमरावलिः ।

माघे—IV. 43.

> सङ्कीर्णकीचकवनस्खलितैकवाल-
> विच्छेदकातरधियश्चलितुं चमर्यः ।
> अस्मिन्मृदुश्वसनगर्भतदीयरन्ध्र-
> निर्यत्स्वनश्रुतिसुखादिव नोत्सहन्ते ॥ 2974 ॥

चमर्यः चमरस्त्रियः ।

### ४१४ । अङ्गिमदिमन्दिभ्य आरन् ।

अङ्गारः । मदारो वराहः । मन्दारः पारिजातकः ।

अस्मिन्नेव ग्रन्थे ग० 2247. मदनहुतभुगङ्गारसदृश ।

अस्मिन्नेव ग्रन्थे श्लो० 277. मन्दारमाल्यम् ।

### ४१५ । गडेः कड च ।

कडारः ।

अस्मिन्नेव ग्रन्थे श्लो० 2966. करभकण्ठकडारम् ।

### ४१६ । शृङ्गारभृङ्गारौ ।

शृभृञ्भ्यामारन्नुम् गुग्घ्रस्वश्च । शृङ्गारो रसः । भृङ्गारः कनकालुका ।

अस्मिन्नेव ग्रन्थे ग० 2247. कमलभृङ्गार ।

## ४१७ । कञ्जिमृजिभ्यां चित् ।

कञ्जिः सौत्रः । कञ्जारो मयूरः । मार्जारः ।

## ४१८ । कमेः किदुच्चोपधायाः ।

चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः ।

अस्मिन्नेव ग्रन्थे श्लो० 1683. कुमारभृत्या बालचिकित्सा ।

## ४१९ । तुषारादयश्च ।

तुषारः । कासारः । सहार आम्रभेदः ।

माघे—VI. 60.

धृततुषारगणस्य नभस्वत-
 स्तरुलताङ्गलितर्जनविभ्रमाः ।
पृथुनिरन्तरमिष्टभुजान्तरं
 वनितया नितया न विषेहिरे ॥ 2975 ॥

चम्पूभारते—II. 24.

ग.—तावत्सोऽपि गन्धवहसूनुरन्धतमसबन्धुरं सक्थिजवसमुत्थितमरुदुत्पाटित-तरुविटपवसतिविघटनसमुद्भ्रान्तशकुन्तकुलनिबद्धनिध्वानमध्वानं विलङ्घ्य कस्यचित्कानन-कासारतीरतरोरधिपरिसरमेतानवतार्य तदीयपरिरक्षणविचक्षणः क्षणमऽवतस्थे ॥2976॥

## ४२० । दीङो नुट् च ।

दीनारः सुवर्णाभरणम् ।

## ४२१ । सर्तेरपः षुक् च ।

सर्षपः ।

## ४२३ । क्वणेस्संप्रसारणञ्च ।

कुणपम् ।

चम्पूभारते—II. 53.

तं विकृष्य पुरसीम्नि निशीथे
 तत्क्षणात्कुणपमर्शनदोषम् ।
मार्ष्टुकाम इव मारुतसूनु-
 र्मातुरङ्घ्रिमुपसेवितुमागात् ॥ 2977 ॥

## ४२५ । विटपपिष्टपविशिपोलपाः ।

चत्वारोऽमी कपन्प्रत्ययान्ताः । विट शब्दे । विटपः । विशतेरादेः पः । प्रत्ययस्य तुट् । षत्वम् । पिष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । वलतेस्संप्रसारणम् । उलपं कोमलं तृणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1875. विटपं पल्लवम् । 'विटपः पल्लवे षिङ्गे' इति विश्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 132. नवोलपालङ्कृतसैकताभाः ।

किरातार्जुनीये—X. 3.

निहितसरसयावकैर्बभासे
 चरणतलैः कृतपद्धतिर्वधूनाम् ।
अविरलविततेव शक्रगोपै-
 ररुणितनीलतृणोलपा धरित्री ॥ 2978 ॥

चम्पूभारते—XII. 1.

शल्यं ततः परमरातिकुलस्य चित्ते
 शल्यं दिशन्तमनिशं रमणः कुरूणाम् ।
कल्यं रणेषु पृतनाधिपतिं विधाय
 तुल्यं [1] त्रिविष्टपपतेः स्वममन्यतासौ ॥ 2979 ॥

त्रिष्टपम् ।

---

1. सूत्रे विटपविष्टप इति पाठपक्ष इदमुदाहरणम् ।

## ४२६ । वृतेस्तिकन् ।

वर्तिका ।

## ४२७ । कृतिभिदिलतिभ्यः कित् ।

कृत्तिका । भित्तिका भित्तिः । लत्तिका गोधा ।

चम्पूरामायणे—I. 62.

तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम् ।
तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः ॥ 2980 ॥

## ४२८ । इण्यशिभ्यां तकन् ।

इष्टका । अष्टका ।

अस्मिन्नेव ग्रन्थे श्लो० 1171. नवहाटकेष्टकचितम् । 'इष्टकेषीका' (सू. 1006) इति ह्रस्वः ।

## ४३० । वीपतिभ्यां तनन् ।

वी गत्यादौ । वेतनम् । पत्तनम् ।

## ४३१ । दृदलिभ्यां भः ।

दर्भः । 'दल्भः स्याद्दषिचक्रयोः' ।

रघुवंशे—XI. 31.

तौ प्रणामचलकाकपक्षकौ
भ्रातरावभृथाप्लुतो मुनिः ।
आशिषामनुपदं समस्पृश-
द्दर्भपाटिततलेन पाणिना ॥ 2981 ॥

## ४३२ । अर्तिगृभ्यां भन् ।

अर्भः । गर्भः ।

४३३ । इणः कित् ।

इभः ।

अस्मिन्नेव ग्रन्थे श्लो० 188. इभकुम्भ ।

४३४ । असिसञ्जिभ्यां क्थिन् ।

अस्थि । सक्थि ।

अस्मिन्नेव ग्रन्थे श्लो० 2779. अस्थि । 'बहुव्रीहौ' (सू. 852) इति षच् ।

अस्मिन्नेव ग्रन्थे श्लो० 2976. सक्थि ।

४३५ । प्लुषिकुषिशुषिभ्यः क्सिः ।

प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1102. कुक्षिम्भरिः । 'फलेग्रहिः' (सू. 2940) इति सूत्रे चात् कुक्षिभरिः इति निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 2007. कुक्षी उदरपार्श्वौ ।

४३६ । अशेर्नित् ।

अक्षि ।

अस्मिन्नेव ग्रन्थे श्लो० 75. चकोराक्षि । 'बहुव्रीहौ' (सू. 852) इति षचि ङीष् ।

४३७ । इषेः क्सुः ।

इक्षुः ।

अस्मिन्नेव ग्रन्थे श्लो० 61. इक्षुच्छायनिषादिन्यः ।

४३८ । अवितृस्तृतन्त्रिभ्य ईः ।

अवीर्नारी रजस्वला । तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः ।

४३९ । यापोः किद् द्वे च ।

ययीरश्वः । 'पपीः स्यात्सोमसूर्ययोः' ।

४४० । लक्षेर्मुट् च ।

लक्ष्मीः ।

अस्मिन्नेव ग्रन्थे श्लो० 620. लक्ष्मीभृतः ।

॥ इत्युणादिषु तृतीयः पादः ॥

---

## ॥ अथ चतुर्थः पादः ॥

—:०:—

### ४४१ । वातप्रमीः ।

वातशब्द उपपदे माधातोरीप्रत्ययः स च कित् । वातप्रमीः । अयं स्त्रीपुंसयोः ।

### ४४२ । ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः ।

द्वादशभ्यः कत्निजादयः क्रमात्स्युः । अर्तेः कत्निच् । यण् । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च । अञ्जेरलिच् । अञ्जलिः । वनेरिष्ठुच् । वनिष्ठुः स्थविरान्त्रम् । अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः । अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौतेरासः । यवासो दुरालभा । कृशेरानुक् । कृशानुः ।

चम्पूभारते—VII. 19.

जले मत्स्यान्दधानोऽपि स्थले मत्स्यान्विलोकितुम् ।
आगतोऽब्धिरिवानीकः कुरूणां ददृशे ततः ॥ 2982 ॥

चम्पूभारते—V. 87.

सततं सदर्थिसदसे बहु दातुं
सकुतूहलस्य पुरुषस्य जगत्याम् ।
उदकोर्मिकाकरधृता हि विभूषा
कनकोर्मिका तु परमङ्गुलिभारः ॥ 2983 ॥

अङ्गुलिः । स्त्री । 'कृदिकारात्' (ग. सू. 50. सू. 503) इति ईकारः ।

अङ्गुल्यः करशाखाः स्युः' II. vi. 82. इत्यमरः ।

चम्पूभारते—XI. 18.

अप्रासनूतनशरक्षतिभिः स्वसैन्यै-
रस्पन्ददृष्टिभिरनुक्षणमीक्ष्यमाणः ।
दुर्योधनाग्रकरसंवलिताङ्गुलीकः
प्राविक्षदात्मकटकं स तु भानुसूनुः ॥ 2984 ॥

अस्मिन्नेव ग्रन्थे ग० 334. अङ्गुलीयकम् ।

चम्पूभारते—V. 83.

सुखसन्धानविश्लेषमुक्ते कवचकुण्डले ।
तवैते भूषणे शोभां तन्वाते परदुर्लभाम् ॥ 2985 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2585. कृशानुः ।

**४४३ । शः करन् ।**

उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम् । शर्करा ।

**४४४ । पुषः कित् ।**

पुष्करम् ।

**४४५ । कलंश्च ।**

पुष्कलम् ।

**४४६ । गमेरिनिः ।**

गमिष्यतीति गमी ।

**४४७ । आङि णित् ।**

आगामी ।

**४४८ । भुवश्च ।**

भावी । 'भविष्यति गम्यादयः' (सू. 3171) इति निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1354. आगामिनीम्।

चम्पूभारते—II. 95.

आतङ्कपीडामददां पुराह-
मस्या द्रुतं भाविषु वल्लभेषु।
एवं विचिन्त्येव भयेन पादे
लाक्षाकृतं धाम पपात तन्व्याः ॥ 2986 ॥

४४९। प्रेः स्थः।

प्रस्थायी।

४५०। परमे कित्।

परमेष्ठी।

अस्मिन्नेव ग्रन्थे श्लो० 2560. परमे तिष्ठतीति परमेष्ठी पितामहः। अनेन इनिः। 'अम्बाम्ब' (सू. 2918) इति षत्वम्।

४५१। मन्थः।

मन्थतेरिनिः कित्स्यात्। मन्थाः मन्थानौ मन्थानः।

४५२। पथश्च च।

पन्थाः पन्थानौ पन्थानः।

अस्मिन्नेव ग्रन्थे श्लो० 1079. दृशोः पन्थानं दृक्पथम्। 'ऋक्पूः' (सू. 940) इत्यादिना समासान्तः।

४५४। बलाकादयश्च।

बलाका। शलाका। पताका।

४५५। पिनाकादयश्च।

पातेरित्वं नुम् च। 'पिनाकोऽस्त्री शूलशङ्करधन्वनोः' III. iii. 14. इत्यमरः।

४५६ । कषिदूषिभ्यामीकन् ।

कषीका पक्षिजातिः । 'दूषीका नेत्रयोर्मलम्' II. vi. 67. इत्यमरः ।

४५७ । अनिहृषिभ्यां किच्च ।

अनीकम् हृषीकम् ।

४५८ । चङ्कणः कङ्कणश्च ।

कण शब्दे । अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च । 'घण्टिकायां कङ्कणीका सैव प्रतिसरापि च' ।

४६० । पर्फरीकादयश्च ।

स्फुर स्फुरणे । अस्मादीकन्, धातोः पर्फरादेशश्च । पर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् । तिन्तिडीको वृक्षभेदः ।

(ग—सू.) 'चरेर्नुम् च । 199.

चञ्चरीको भ्रमरः । मर्मरीको हीनजनः । कर्करीका गलन्तिका । पुणतेः, पुण्डरीकं वादित्रम् । पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ।

चम्पूभारते—I. 28.

तत्र चित्रमवनीपतेस्ततश्चन्द्रहासपतनं चकार यत् ।
पोषितेषु वनमध्यचर्यया पुण्डरीकनिवहेषु मीलनम् ॥ 2987 ॥

'व्याघ्रेऽपि पुण्डरीको ना' III. iii. 11. इत्यमरः ।

४६१ । ईषेः किद्ध्रस्वश्च ।

इषीका । शलाका ।

अस्मिन्नेव ग्रन्थे श्लो० 1172. इषीकाम् । 'इष्टकेषीका' (सू. 1006) इति तुल्ययोगे ह्रस्वः स्यात् ।

४६३ । सर्तेर्नुम् च ।

सृणीका लाला ।

### ४६५ । अलीकादयश्च ।

कीकन्नन्ता निपात्यन्ते । अल भूषणादौ । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । व्यलीकं पटलप्रान्ते इत्यादि ।

माघे—V. 1.

इत्थं गिरः प्रियतमा इव सोऽव्यलीकाः
शुश्राव सूततनयस्य तदा व्यलीकाः ।
रन्तुं निरन्तरमियेष ततोऽवसाने
तासां गिरौ च वनराजिपटं वसाने ॥ 2988 ॥

अव्यलीका अप्रियरहिताः । व्यलीकाः विगतानृताः । सत्या इत्यर्थः ।

माघे—III. 53.

रम्या इति प्राप्तवतीः पताका
रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः ॥ 2989 ॥

नमद्वलीकाः नम्रनीध्राः । 'वलीकनीध्रे पटलप्रान्ते' II. ii. 15. इत्यमरः ।

### ४६६ । कृतॄभ्यामीषन् ।

'तत्तु शुष्कं करीषोऽस्त्री' II. ix. 51. इत्यमरः । तरीषः तरिता ।

### ४६७ । शॄपॄभ्यां किच्च ।

शिरीषः । पुरीषम् ।

माघे—VI. 22.

रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजो रुचः ।
उपययौ विदधन्नवमल्लिकारुचिरसौ चिरसौरभसम्पदः ॥ 2990 ॥

### ४६८ । अर्जेर्ऋज च ।

ऋजीषं पिष्टपचनम् ।

४६९ । अम्बरीषः ।

अयं निपात्यते । अबि शब्दे । 'अम्बरीषः पुमान् भ्राष्ट्रम्' । 'क्लीबेऽम्बरीषम् भ्राष्ट्रो ना' II. ix. 30. इत्यमरः ।

४७० । कॄशॄपॄकटिपटिशौटिभ्य ईरन् ।

करीरो वंशाङ्कुरः । शरीरम् । परीरं फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कण्टकः कामश्च । 'शौटीरस्त्यागिवीरयोः' । ब्राह्मणादित्वात् ष्यञ् । शौटीर्यम् ।

माघे—IV. 14.

विभिन्नवर्णा गरुडाग्रजेन
सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वा-
मानिन्यिरे वंशकरीरनीलैः ॥ 2991 ॥

वंशकरीरनीलैः वंशाङ्कुरश्यामलैः । 'वंशाङ्कुरे करीरोऽस्त्री III. iii. 173. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 36. शरीरम् ।

चम्पूरामायणे—VI. 8.

अमी तटसमीपनिर्झरतरङ्गरिङ्गत्पयो-
जडीकृतपटीरभूरुहकुटीरसंसारिणः ।
मनो विधुरयन्ति मे मलयमेखलामेदुरा
दुरासदवनप्रियप्रियतमारुता मारुताः ॥ 2992 ॥

४७१ । वशेः कित् ।

उशीरम् ।

४७२ । कशेर्मुट् च ।

कश्मीरो देशः ।

### ४७३ । कुत्र उच्च ।

कुरीरं मैथुनम् ।

### ४७४ । वसेः किच्च ।

क्षीरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2635. क्षीराम्बोधेः ।

### ४७५ । गभीरगम्भीरौ ।

गमेर्भः । पक्षे नुम्च ।

### ४७६ । विषा विहा ।

स्यतिजहातिभ्यां विपूर्वाभ्यामाप्रत्ययः । विषा बुद्धिः । विहा स्वर्गः । अव्यये इमे ।

### ४७७ । पच एलिमच् ।

पचेलिमो वह्निरव्योः । 'केलिमर उपसंख्यानम्' (वा. 1919. सू. 2834) इति तु भावकर्मणोरेव ।

अस्मिन्नेव ग्रन्थे श्लो० 214. पचेलिमं स्वतः पक्वम् । 'कर्मकर्तरि चायमिष्यत' इत्याह वृत्तिकारः ।

### ४७८ । शीङो धुक्लक्वलन्वालनः ।

चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् । शीलं स्वभावः । शैवलः । शेवालम् । बाहुलकाद्धस्य पोऽपि । 'शेवालं शैवलो न स्त्री शेपालो जलनीलिका'

माघ—X. 11.

पीतशीधुमधुरैर्मिथुनानामाननैः परिहृतं चषकान्तः ।
व्रीलयारुददिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ 2993 ॥

चम्पूरामायणे—I. 81.

आवर्तगर्तसम्भ्रान्तविमानप्लवविप्लवा ।
नीलजीमूतशेवालकृतनीलहरिद्वदा ॥ 2994 ॥

### ४७९ । मृकणिभ्यामूकोकणौ ।

मरूको मृगः । काणूकः काकः ।

### ४८० । वलेरूकः ।

वलूकः पक्षी उत्पलमूलञ्च ।

### ४८१ । उलूकादयश्च ।

वलेस्सम्प्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः । शमेर्बुक् च । शम्बूको जलशुक्तिः ।

### ४८२ । शलिमण्डिभ्यामूकण् ।

शालूकं कन्दविशेषः । मण्डूकः ।

### ४८३ । नियो मिः ।

नेमिः ।

रघुवंशे—I. 17.

> रेखामात्रमपि क्षुण्णादामनोवर्त्मनः परम् ।
> न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ 2995 ॥

### ४८४ । अर्तेरूच्च ।

ऊर्मिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1151 ऊर्मिहस्तैः ।

### ४८५ । भुवः कित् ।

भूमिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2094. भूमौ शेते ।

### ४८६ । अश्नोते रश्च ।

रश्मिः किरणो रज्जुश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 1982. रथरश्मिसंयतम् ।

## ४८८ । वीज्याज्वरिभ्यो निः ।

' वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे ' । ज्यानिः । जूर्णिः ।

चम्पूभारते—XII. 20.

ग—ततस्संवर्तसमयसच्छात्रे तादृशि कुरूणामुभयेषामपि संप्रहारे कृष्णा-वेणिबन्धायुषा सह परिसमाप्ते ॥ 2996 ॥

वेणिः । ' कृदिकारात् ' ( ग. सू. 50. सू. 503 ) इति ङीषि वेणी ।

## ४८९ । सृवृषिभ्यां कित् ।

सृणिरङ्कुशः । ' वृष्णिः क्षत्रियमेषयोः ' ।

अस्मिन्नेव ग्रन्थे श्लो० 2151. सृणिं शिताग्रम् ।

## ४९० । अङ्गेर्नलोपश्च ।

अग्निः ।

अस्मिन्नेव ग्रन्थे श्लो० 842. अग्निचित् ।

## ४९१ । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।

वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1985. वह्निः ।

रघुवंशे—I. 43.

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ 2997 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2831. हानिदद्रौ निदद्रौ ।

## ४९२ । घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ।

एते पञ्च निपात्यन्ते। घृणिः किरणः। स्पृशतेस्सलोपः। पृश्निरल्पशरीरः। पृषेर्वृद्धिश्च। पार्ष्णिः पादतलम्। चरेरुपधाया ऊत्वम्। चूर्णिः कपर्दकशतम्। बिभर्तेरूत्वम्। भूर्णिः धरणी।

## ४९३। वृदृभ्यां विन्।

वर्विः घस्मरः। दर्विः।

अस्मिन्नेव ग्रन्थे श्लो० 2956. दर्वी। 'उत्सुकदर्विहोमिनः' (उ. सू. 364) इति तु दृणातेर्विः। दर्विः दर्वी।

## ४९६। कृविघृष्विच्छविस्थविकिकीदिवि।

कृविस्तन्तुवायद्रव्यम्। घृष्विर्वराहः। छास्थोर्ह्रस्वत्वञ्च। छविर्दीप्तिः। स्थविस्तन्तुवायः। दीव्यतेः किकीपूर्वात्। किकीदिविश्चाषः। बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः। चाषेण किकिदीविना।

अस्मिन्नेव ग्रन्थे श्लो० 761. छविः।

## ४८७। पातेर्डतिः।

पतिः।

अस्मिन्नेव ग्रन्थे श्लो० 2811. पतिः।

## ४९८। शकेर्ऋतिन्।

शकृत्।

## ५००। वहिवस्यर्तिभ्यश्चित्।

वहतिः पवनः। 'वसतिर्गृहयामिन्योः'। अरतिः क्रोधः।

अस्मिन्नेव ग्रन्थे श्लो० 2531. अग्रेगतेन वसतिम्।

## ५०१। अञ्चेः को वा।

अङ्कतिरञ्चतिर्वातः।

## ५०३ । हन्तेरंह च ।

हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिः दानम् । 'प्रादेशनं निर्वपणमपवर्जनमंहतिः' II. vii. 30 इत्यमरः ।

## ५०४ । सूङः क्रिः ।

सूरिः ।

## ५०५ । अदिशदिभूशुभिभ्यः क्रिन् ।

अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ।

अस्मिन्नेव ग्रन्थे श्लो० 1943. अद्रेः शृङ्गम् ।

## ५०६ । वङ्क्र्यादयश्च ।

क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । 'अंह्रिरङ्घ्रिश्च चरणः' । तन्द्रिर्मोहः । बाहुलकाद्गुणः । भेरिः ।

अस्मिन्नेव ग्रन्थे श्लो० 168. अस्ता तन्द्रिरालस्यं यस्य तेन अस्ततन्द्रिणा ।

## ५०७ । राशदिभ्यां त्रिप् ।

रात्रिः । शत्रिः कुञ्जरः ।

अस्मिन्नेव ग्रन्थे श्लो० 161. रात्रिः ।

## ५०८ । अदेस्त्रिनिश्च ।

चात्त्रिप् । अत्त्री अत्त्रिणौ अत्त्रिणः । अत्त्रिः ।

चम्पूरामायणे—II. 85.

विस्तीर्णाक्षैर्विपिनहरिणैर्वीतभीतिप्ररोहै-
र्दर्भग्रासेऽप्यकृतरुचिभिस्सस्पृहं वीक्ष्यमाणः ।
रामः प्राप्य प्रकृतिमहितं स्थानमत्रेर्महर्षे-
र्जग्राहास्य प्रमुदितधियः प्रेमवर्यां सपर्याम् ॥ 2998 ॥

५०९ । पतेरत्रिन् ।

पतत्रिः पक्षी ।

५१० । मृकणिभ्यामीचिः ।

मरीचिः । कणीचिः पल्लवो निनादश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 2733. शरच्चन्द्रमरीचिरोचिषम् ।

५१३ । वेञो डिच्च ।

वीचिस्तरङ्गः । नञ्समासेऽवीचिर्नरकभेदः ।

अस्मिन्नेव ग्रन्थे श्लो० 2518. वीचिलोल ।

५१४ । पुरः कुषन् ।

पुर अग्रगमने । पुरुषः । 'अन्येषामपि' ( सू. 3539 ) इति दीर्घः । पूरुषः ।

चम्पूभारते—II. 69.

ग—सोऽपि तदिदं निशम्य बलिपुरुषविशेषमन्दितशकटागमेन प्रथममेव कृतोन्मेषं रोषं द्विगुणयन् गिरिकन्दरमन्दिरमुखात्सरभसं निर्गत्य ॥ 2999 ॥

अस्मिन्नेव ग्रन्थे श्लो० 984. आदिपूरुषः ।

५१५ । पॄनहिकलिभ्य उषच् ।

परुषम् । नहुषः । कलुषम् ।

५१६ । पीयेरूषन् ।

पीय इति सौत्रो धातुः । पीयूषम् ।

५१७ । मस्जेर्नुम् च ।

मञ्जूषा ।

५१८ । गडेश्च ।

गण्डूषः गण्डूषा ।

५१९ । अर्तेररुः ।

अररुः शत्रुः । अररू अररवः ।

५२१ । शकादिभ्योऽटन् ।

शकटोऽस्त्रियाम् । ककिर्गत्यर्थः । कक्कटः सन्नाहः । देवटः शिल्पी । करट इत्यादि ।

चम्पूभारते—II. 48.

स शकटमविलङ्घ्य भीमसेनो
दधिकलशीकुलशीभरान्नराशिम् ।
बकभवनवनं विवेश शाखा-
नगरमिवान्तकवीरराजधान्याः ॥ 3000 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1446. करटः ।

५२२ । कुकदिकडिकटिभ्योऽम्बच् ।

करम्बं व्यामिश्रम् । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 191. करम्बिताङ्गी व्यामिश्रितरूपा । करम्बशब्दात्तत्करोतीति ण्यन्तात् क्तः ।

चम्पूरामायणे—V. 15.

ग—ततस्तस्यां नागपुन्नागतालहिन्तालतमालकृतमालसरलबकुलवञ्जुलतिलकामलककुटजलिकुचकङ्कककोलाङ्कोलललवङ्गविकङ्कतकेतकीकदम्बोदुम्बरकपित्थाश्वत्थकुरवकमरुबकमाकन्दकुन्दतिन्दुकचन्दनस्यन्दनचम्पकचाम्पेयपनसवेतसपलाशपाटलारसालप्रियालुप्रायैरनेकैरनोकहनिवहैः परिवृतायां परिभ्रमदभ्रङ्कषविकटविटपनिविडितगगनप्रपञ्चां काञ्चन काञ्चनमयीं शिंशपामारुरोह ॥ 3001 ॥

५२३ । कदेर्णित्पक्षिणि ।

कादम्बः कलहंसः ।

अस्मिन्नेव ग्रन्थे श्लो० 93. कादम्बकादम्बिनी ।

५२४ । कलिकर्द्योरमः ।

कलमः । कर्दमः ।

रघुवंशे—IV. 37.

आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैस्संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ 3002 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2685. आश्यानकर्दमान् ।

५२५ । कुणिपुल्योः किन्दच् ।

कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः । अस्मिन्नेव ग्रन्थे श्लो० 203. पुलिन्दः ।

५२६ । कुपेर्वा वश्च ।

कुपिन्दकुविन्दौ तन्तुवाये ।

५२९ । सर्तेर्णिच्च ।

इति घथिन् । सारथिः ।

रघुवंशे—I. 78.

स शापो न त्वया राजन्न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ 3003 ॥

५३० । खर्जिपिञ्जादिभ्य ऊरोलचौ ।

खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः ।

( ग. सू. ) लंगेर्वृद्धिश्च । 201.

लाङ्गूलम् । कुसूलः ।

( ग. सू. ) तमेर्बुग्वृद्धिश्च । 202.

ताम्बूलम् ।

(ग. सू.) शृणातेर्दुग्वृद्धिश्च । 203.

शार्दूलः ।

(ग. सू.) दुक्वोः कुक् च । 204.

दुकूलम् । कुकूलम् ।

रघुवंशे—IV. 57.

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः ॥ 3004 ॥

चम्पूभारते—V. 22.

इत्थं गिरा किञ्चिदुदीक्ष्य तस्य
लाङ्गूलमात्रे तरलः कपीन्द्रः ।
कोपारुणाक्षं कुरुसिंहमेनं
स्वापारुणाक्षः स्वयमेवमूचे ॥ 3005 ॥

चम्पूरामायणे—III. 34.

काकुत्स्थोऽप्यथ रक्षसामधिपतेर्वाग्वागुरावेष्टिते
कृत्वा हाटकताटकेयहरिणे शार्दूलविक्रीडितम् ।
आगच्छन्ननुजेन तत्र गदितामाकर्ण्य वार्तां तत-
स्सीतासङ्गमलालसस्स्वटजं रामः प्रतस्थे द्रुतम् ॥ 3006 ॥

५३१ । कुवश्चट् दीर्घश्च ।

कूची चित्रलेखनिका ।

५३२ । सिवेष्टेरू च ।

सूची दर्भाङ्कुरः । सूची ।

नैषधे—I. 80.

त्वदग्रसूचीसचिवस्स कामिनो-
र्मनोभवस्सीव्यति दुर्यशःपटौ ।

स्फुटं च पत्रैः करपत्रमूर्तिभि-
विंयोगिहृद्दारुणि दारणायते ॥ 3007 ॥

## ५३४ । शमेर्बन् ।

शम्बो मुसलम् ।

## ५३५ । उल्बादयश्च ।

बन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वम् गुणाभावश्च । उल्बो गर्भाशयः । शुल्बं ताम्रम् । निम्बः । बिम्बम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2898. बिम्बोष्ठम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2842. शिशिरांशुबिम्बे ।

## ५३६ । स्थः स्तोऽम्बजबकौ ।

तिष्ठतेरम्बच् अबक एतौ स्तः स्तादेशश्च । 'स्तम्बो गुच्छस्तृणादिकः' । स्तबकः पुष्पगुच्छः ।

माघे—VI. 11.

इदमपास्य विरागिपरागिणी-
रलिकदम्बकमम्बुरुहां ततीः ।
स्तनभरेण जितस्तबकानम-
न्नवलते वलतेऽभिमुखं तव ॥ 3008 ॥

## ५३७ । शाशपिभ्यां ददनौ ।

'शादो जम्बालशष्पयोः' । शब्दः ।

अस्मिन्नेव ग्रन्थे श्लो० 1380. शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलानि । 'नडशादाड्ड्वलच्' (सू. 1307) इति ड्वलच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1787. शब्दः ।

## ५३८ । अब्दादयश्च ।

अवतीत्यब्दः ।

(ग. सू.) कौतेर्नुम् । 205.

कुन्दः ।

अस्मिन्नेव ग्रन्थे श्लो० 1433. अपो ददातीत्यब्दः मेघः । 'आतोऽनुपसर्गे कः' (सू. 2925) इति कः ।

अस्मिन्नेव ग्रन्थे श्लो० 1769. कुन्दलता ।

## ५३९ । वलिमलितनिभ्यः कयन् ।

वलयम् । मलयः । तनयः ।

माघे—VIII. 34.

सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य
प्रेयांसं मनसिजदुःखदुर्बलायाः ।
सौवर्णं वलयमवागलत्कराग्रा-
ल्लावण्यश्रिय इव शेषमङ्गनायाः ॥ 3009 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2788. अस्मिन् समाजवलये ।

रघुवंशे—IV. 51.

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ 3010 ॥

अस्मिन्नेव ग्रन्थे ग० 2854. भवतस्तनयेन ।

## ५४० । वृहोः षुग्दुकौ च ।

वृषय आश्रयः । हृदयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 578. हृदयम् ।

५४१ । मिपीभ्यां रुः ।

मेरुः । पेरुः सूर्यः ।

५४२ । जत्र्वादयश्च ।

जत्रु जत्रुणी । अश्रु अश्रुणी ।

माघे—VI. 17.

रुरुदिषा वदनाम्बुरुहश्रियः
सुतनु सत्यमलङ्करणायते ।
तदपि संप्रति सन्निहिते मधा-
वधिगमं चिनयन्नकुलमश्रुणः ॥ 3011 ॥

५४३ । रुशातिभ्यां क्रुन् ।

रुरुर्मृगभेदः । शातयतीति शत्रुः ।

अस्मिन्नेव ग्रन्थे श्लो० 828. शत्रुघ्नान् ।

५४४ । जनिदाच्युसृवृमदिपमिनमिभृञ्भ्यः इत्वन्त्वन्तन्क्निन्शक्-स्यडडटाटचः ।

जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ताण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृश आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 2151. सृणिं शिताग्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2982. मत्स्यः । 'ऋतन्यञ्जि' (उ. सू. 442) इति मदेः स्यनि वा मत्स्यः ।

५४६ । कुसेरुम्भोमेदेताः ।

कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितो जनपदः ।

अस्मिन्नेव ग्रन्थे श्लो० 1589. कुसुमम् ।

### ५४७ । सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ।

सनोतेरसिप्रत्ययः उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ । पर्णसिर्जलगृहम् । तड आघाते । तण्डुलाः । अकि लक्षणे । उशच् । अङ्कुशः । चषेरालः । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । ञि धृषा । ण्यः । ऋकारस्येकारः । धिष्ण्यम् । शलेर्यः । शल्यम् । ‘ वा पुंसि शल्यं शङ्कुर्ना ’ II. viii. 94. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 664. अङ्कुशः ।

असिन्नेव ग्रन्थे श्लो० 1112. चषालः ।

असिन्नेव ग्रन्थे श्लो० 1380. पल्वलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2979. शल्यम् ।

### ५४८ । मूशक्यविभ्यः क्लः ।

मूलम् । शक्लः प्रियंवदे । अम्लो रसः । बाहुलकादमेः । अम्लः ।

असिन्नेव ग्रन्थे श्लो० 2788. मूलम् ।

### ५४९ । माछाससिभ्यो यः ।

माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । ‘ सव्यं दक्षिणवामयोः ’ ।

अस्मिन्नेव ग्रन्थे श्लो० 576. मायानाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1354. छायाम् ।

### ५५० । जनेर्यक् ।

‘ ये विभाषा ’ ( सू. 2319 ) इत्यात्वम् । जन्यं युद्धम् । जाया भार्या ।

अस्मिन्नेव ग्रन्थे श्लो० 1407. तत्र जन्यम् ।

चम्पूभारते—III. 11.

जायया च पतिभिश्च कदाचि-
ज्जायते स्म न हि दम्पतिशब्दः ।
अद्भुतस्य खलु तस्य जगत्या-
मर्थतामनुभवन्ति भवन्तः ॥ 3012 ॥

जायया। जाया च पतिश्च दम्पती जम्पती जायापती । जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते ।

## ५५१ । अघ्न्यादयश्च ।

यगन्ता निपात्यन्ते । हन्तेर्यक् अडागम उपधालोपश्च । अघ्न्या माहेयी । अघ्न्यः प्रजापतिः । कनी दीप्तौ । कन्या । वन्ध्या ।

अस्मिन्नेव ग्रन्थे श्लो० 178. कन्या ।

चम्पूभारते—V. 94.

वीक्ष्य वन्ध्यवचनोऽपि गुणज्ञो
विस्मयाम्बुनिधिवीचिषु मग्नः ।
पद्मबन्धुरिति वादिनमेनं
पाटलस्मितरुचिर्गिरमूचे ॥ 3013 ॥

## ५५२ । स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ।

स्नावा रसिकः । मद्वा शिवः । पद्वा पन्थाः । 'अर्वा तुरङ्गगर्ह्ययोः' । पर्व ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । 'वनो र च' (सू. 456) इति ङीब्रौ । शक्वर्यङ्गुलिः ।

## ५५३ । शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ।

शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ।

## ५५४ । ध्याप्योस्सम्प्रसारणञ्च ।

धीवा कर्मकरः । पीवा स्थूलः ।

५५५ । अदेर्ध च ।

अध्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1666. अध्वानम् ।

५५७ । सर्वधातुभ्य इन् ।

पचिरग्निः । तुडिः । तुण्डिः । बलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मलिः । मली । केलिः । मसी परिणामे । मसिः । बाहुलकाद्गुणः । कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ।

अस्मिन्नेव ग्रन्थे श्लो० 498. यजन्तीति यजयः । देवानां यजयः तान् देवयजीन् ।

विश्वगुणादर्शे—82.

काशी सकाशीभवदिन्द्रगेह-
सौधाग्रभागा बहुसत्तिनागा ।
इन्धे मयूखैरियमन्धकार-
व्युत्सत्तिशून्या शिवशेखरेन्दोः ॥ 3014 ॥

काशी । 'कृदिकारात्' (ग. सू. 50. सू. 503) इतीकारः ।

चम्पूभारते—V. 80.

पार्थाश्च कृच्छ्रादुत्तीर्णा पार्षदीं प्राप्य रेमिरे ।
हेमन्तात्पद्मिनीमुक्तां हेलेरिव कराङ्कुराः ॥ 3015 ॥

चम्पूभारते—III. 74.

यमेवमुद्दिश्य तवोक्तिभङ्गी
स एष दासोऽस्म्यनुकम्पनीयः ।
इति प्रकाश्य क्षणमर्जुनत्वं
चुचुम्ब तां चोरयतिः कपोले ॥ 3016 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2837. मलीम् ।

चम्पूभारते—II. 8.

कुमारास्तूर्णमारुक्षन्कुम्भयोनेरनुग्रहात् ।
कोटिं कोदण्डसारस्य गुणिनस्ते गुणा इव ॥ 3017 ॥

विश्वगुणादर्शे—95.

एतादृशे कलियुगेऽपि शतेषु कश्चि-
ज्जातादरो जगति यः श्रुतिमार्ग एव ।
यत्किञ्चिदाचरति पात्रमसौ श्रुतीनां
श्लाघ्यं मितापमपि किं न मरौ सरश्चेत् ॥ 3018 ॥

५५८ । हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ।

इन् ।

'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ ।
चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः ॥'

पेषिर्वज्रम् । रोहिर्व्रीही । वर्तिः । वेदिः । छेदिश्छेत्ता । कीर्तिः ।

माघे—I. 39.

करोति कंसादिमहीभृतां वधा-
ज्जनो मृगाणामिव यत्तव स्तवम् ।
हरे हिरण्याक्षपुरस्सरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ 3019 ॥

हरिर्विष्णुरेव हरिः सिंहः श्लिष्टरूपकम् ।

चम्पूभारते—III. 54.

कालाम्बुदालिनलिकात्क्षणदीप्तिवर्त्या
संधुक्षितात्सपदि सध्वनि निस्सरद्भिः ।
वर्षाश्मसीसगुलिकानिकरैः कठोरै-
र्घर्माभियातिमवधीद्घनकालयोधः ॥ 3020 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1584. वेदिवत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1723. यत्कीर्तिस्तिलकायते ।

५५९ । इगुपधात्कित् ।

कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्वत्वे लिबिः । तूल निष्कर्षे । तूलिः तूली । कूर्चिका ।

अस्मिन्नेव ग्रन्थे श्लो० 7. ऋषिणा ।

अस्मिन्नेव ग्रन्थे श्लो० 1611. लिपिकरी । 'दिवाविभा' (सू. 2935) इति टः ।

अस्मिन्नेव ग्रन्थे श्लो० 164. लिपी । 'कृदिकारात्' (ग. सू. 50. सू. 503) इति ङीष् ।

५६१ । क्रमितमिशतिस्तम्भामत इच्च ।

क्रिमिः । सम्प्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 761. शितिवाससस्तनुम् ।

रघुवंशे—XVI. 20.

रात्रावनाविष्कृतदीपभासः
कान्तामुखश्रीवियुता दिवापि ।
तिरस्क्रियन्ते कृमितन्तुजालै-
र्विच्छिन्नधूमप्रसरा गवाक्षाः ॥ 3021 ॥

५६२ । मनेरुच्च ।

मुनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 879. मुनिः ।

५६३ । वर्णेर्वलिश्चाहिरण्ये ।

वर्णिः सौत्रो धातुः । अस्य बलिरादेशः । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गके स्त्रियाम्' III. iii. 195. इत्यमरः । हिरण्ये तु वर्णिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1941. मन्दमन्दमपयद्वलित्रया ।

५६४ । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ।

वासिश्छेदनवस्तुनि । वापिः । वापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वाताळिः । सादिः सारथिः । निघातिर्लोहघातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकाद्वारिः पथिकसंहतौ ।

माघे—IV. 9.

राजीवराजीवशलोलभृङ्गं
मुष्णन्तमुष्णं ततिभिस्तरूणाम् ।
कान्तालकान्ता ललनास्सुराणां
रक्षोभिरक्षोभितमुद्वहन्तम् ॥ 3022 ॥

राजी । 'कृदिकारात्' (ग. सू. 50. सू. 503) इति ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 1700. कविराजराजिः । इञ् ।

चम्पूरामायणे—IV. 13.

ग—अथ विदितवृत्तान्ता सन्तताश्रुनिष्यन्दकलुषिततरा तारा नगरान्निर्गत्य वारीवारितमिव वारणयूथपतिं निर्भयनिरीक्षमाणसुग्रीवं उन्नतग्रीवमुत्थातुमक्षमं क्षमातलार्पितकूर्परयुगलं गलदसृक्प्रसरशारशरीरं शरासनशिखरन्यस्तहस्तेन सन्निकर्षस्थितेन काकुत्स्थेन कृतसंलापमपेताडम्बरमिवाम्बुनिधिमस्तोन्मुखमिव मयूखमालिनं वालिनमालिङ्ग्य स्वाङ्गोत्संसिततदुत्तमाङ्गा रघुनाथमित्थमकथयत् ॥ 3023 ॥

वारी स्त्री । 'कृदिकारात्' (ग. सू. 50. सू. 503) इति ङीष् ।

रघुवंशे—IV. 19.

हंसश्रेणिषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ 3024 ॥

५६५ नहो भश्च ।

नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यङ्गे तु स्त्रियां । पुंस्यपीति केचित् ।

अस्मिन्नेव ग्रन्थे श्लो० 801. नाभिसरोजम् ।

५६७ । श्रः शकुनौ ।

शारिः शारिका ।

अस्मिन्नेव ग्रन्थे श्लो० 2863. शारीन् ।

५६८ । कृञ उदीचां कारुषु ।

कारिः शिल्पी ।

५६९ । जनिघसिभ्यामिण् ।

जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

५७० । अज्यतिभ्याञ्च ।

आजिः सङ्ग्रामः । आतिः पक्षी ।

५७१ । पादे च ।

पदाजिः । पदातिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2085. पदातयः ।

५७२ । अशिपणाय्यो रुडायलुकौ च ।

अशे रुट् । राशिः पुञ्जः । पणायतेरायलुक् पाणिः करः ।

किरातार्जुनीये—IX. 50.

पाणिपल्लवविधूननमन्तः
सीत्कृतानि नयनार्धनिमेषाः ।

योषितां रहसि गद्गदवाचा-
मस्त्रतामुपययुर्मदनस्य ॥ 3025 ॥

५७३ । वातेर्डिच्च ।

विः पक्षी । स्त्रियां वीत्यपि ।

५७४ । प्रे हरतेः कूपे ।

प्रहिः कूपः ।

५७५ । नौ व्यो यलोपः पूर्वस्य च दीर्घः ।

व्येञ इण्स्याद्यलोपश्च नेर्दीर्घः । नीवि नीवी । वस्त्रग्रन्थौ मूलधने च ।

५७६ । समाने ख्यः स चोदात्तः ।

समानशब्द उपपदे ख्या इत्यस्माद् इण् स्यात्स च डित् यलोपश्च । समानस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा ।

माघे—II. 36.

सखा गरीयान्शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ 3026 ॥

५७७ । आङि श्रिहनिभ्यां ह्रस्वश्च ।

इण् स्यात्स च डित् । आङो ह्रस्वश्च । 'स्त्रियः पाल्यश्रिकोटयः' । II. viii. 94. इत्यमरः । सर्पे वृत्रासुरेऽप्यहिः ।

५७८ । अच इः ।

रविः । पविः । तरिः । कविः । अरिः । अलिः ।
अस्मिन्नेव ग्रन्थे श्लो० 722. कवयः ।

नैषधे—III. 51.

अन्येन पत्या त्वयि योजितायां
विज्ञत्वकीर्त्या गतजन्मनो वा ।

जनापवादार्णवमुत्तरीतुं
विधा विधातुः कतमा तरिः स्यात् ॥ 3027 ॥

अस्मिन्नेव ग्रन्थे श्लो० 801. अरिः ।

५७२ । खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च ।

खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानञ्च । ध्वनिः । ग्रन्थिः । चलिः पशुः ।

अस्मिन्नेव ग्रन्थे श्लो० 160. खनी । 'कृदिकारात्' (ग. सू. 50. सू. 503) इति ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 19 महासिरेन्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 511. ध्वनीनाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2215. असीन् ।

५८२ । कृगृशृपृकुटिभिदिछिदिभ्यश्च ।

इः कित्स्यात् । किरिर्वराहः । गिरिर्गोलाक्षिरोगयोः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरञ्च । भिदिर्वज्रम् । छिदिः परशुः ।

भट्टिकाव्ये—XIV. 25.

वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा ।
निरासुश्च गिरींस्तुङ्गान् द्रुमान्विचकरुस्तथा ॥ 3028 ॥

५८३ । कुडिकम्प्योर्नलोपश्च ।

कुडि दाहे । कुडिर्देहः । कपिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2333. कपिना ।

अस्मिन्नेव ग्रन्थे श्लो० 1030. कपयः ।

५८४ । सर्वधातुभ्यो मनिन् ।

क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । 'इसन्' (सू. 2985) इति ह्रस्वः । छद्म । सुत्रामा ।

भट्टिकाव्ये—XIV. 37.

तत्कर्म वालिपुत्रस्य दृष्ट्वा विश्वं विसिष्मिये ।
सन्त्रेसू राक्षसास्सर्वे बहु मेने च राघवः ॥ 3029 ॥

किरातार्जुनीये—IX. 20.

द्यां निरुन्धदतिनीलघनाभं
ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा
शम्भुनेव करिचर्म चकासे ॥ 3030 ॥

अस्मिन्नेव ग्रन्थे श्लो० 476. सुत्रामपुत्रारि ।

अस्मिन्नेव ग्रन्थे श्लो० 1405. उमाङ्गसङ्गविभक्तभस्मानम् ।

माघे—IX. 13.

रुचिधाम्नि भर्तरि भृशं विमलाः
परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा
सुलभोऽन्यजन्मनि स एव पतिः ॥ 3031 ॥

## ५८५ । बृहेर्नोऽच्च ।

नकारस्याकारः । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' । III. iii. 114. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 2939. ब्रह्मन् ।

## ५८६ । अशिशकिभ्यां छन्दसि ।

अश्मा । शक्मा ।

किरातार्जुनीये—XIII. 31.

स गतः क्षितिमुष्णशोणितार्द्रः
खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनु-
र्विहितामर्षगुरुध्वनिर्निरासे ॥ 3032 ॥

५८९ । वेञस्सर्वत्र ।

छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः ।

अस्मिन्नेव ग्रन्थे श्लो० 19. महासिवेम्नः ।

५९० । नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन् ।

सप्तामी निपात्यन्ते । म्नायतेऽनेनेति नामा । सिनोतेर्दीर्घः । सीमा सीमानौ सीमानः । पक्षे डाप् । सीमा सीमे सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः । रोम । लोम । पाप्मा पापम् । धाम परिमाणं तेजश्च ।

अस्मिन्नेव ग्रन्थे ग० 2948. धाराधरनामानम् ।

चम्पूरामायणे—V. 55.

घोरस्य राघवकलत्रतपोमयाग्ने-
र्मा भूवमिन्धनमहं क्षणमित्यवेत्य ।
शैत्यं वितत्य दहनः पवमानसूनो-
र्वालाग्रसीम्नि मणिदीप इवावतस्थे ॥ 3033 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2198 व्योम ।

नैषधे— I. 21.

किमस्य रोम्णां कपटेन कोटिभि-
र्विधिर्न रेखाभिरजीगणद्गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता
कृताश्च किं दूषणशून्यबिन्दवः ॥ 3034 ॥

५९२ । सातिभ्यां मनिन्मनिणौ ।

स्यतीति साम सामनी । आत्मा ।

अस्मिन्नेव ग्रन्थे श्लो० 1687. आत्मा ।

५९३ । हनिमशिभ्यां सिकन् ।

हंसिका हंसयोषिति । मक्षिका ।

चम्पूरामायणे— III. 11.

चुलुकगतसमुद्रास्वादने कुम्भयोने-
रितरकरनिरुद्धा मक्षिकोत्सारणीत्या ।
गगनगतिविहीना ये घनाः पल्वलान्ते
विपिनमहिषवेषैः केवलं ते वलन्ते ॥ 3035 ॥

५९५ । गिर उडच् ।

गरुडः ।

चम्पूभारते—III. 113.

अथ गरुडवलीमुखध्वजाभ्या-
मनुमतिमेत्य स संननाह हर्षात् ।
बलरिपुमणिनीलमुत्प्रवालं
वनमशितुं बडवास्यभूरिवाग्निः ॥ 3036 ॥

५९६ । इन्देः कमिन्नलोपश्च ।

इदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 3008. इदम् ।

५९७ । कायतेर्डिमिः ।

किम् ।

अस्मिन्नेव ग्रन्थे श्लो० 66. केन ।

५९८ । सर्वधातुभ्यः ष्ट्रन् ।

वस्त्रम् । अस्त्रम् । शस्त्रम् । 'इस्म' (सू. 2985) इति ह्रस्वत्वम् । छादनाच्छत्रम् ।

चम्पूरामायणे—V. 48.

आनाकलोकपरिकीर्तितसच्चरित्र-
मत्रोपरुध्य रघुवंशपतेः कलत्रम् ।
वैतानवेदिजनितं पवमानबन्धुं
वस्त्रेण बद्धुमविनीत कथं यतेथाः ॥ 3037 ॥

अस्मिन्नेव ग्रन्थे ग० 1489. अस्त्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 314. शस्त्रैः ।

अस्मिन्नेव ग्रन्थे श्लो० 916. शस्त्राशस्त्रि ।

नैषधे—I. 1.

निपीय यस्य क्षितिरक्षिणः कथा-
स्तथाद्रियन्ते न बुधास्सुधामपि ।
नलस्सितच्छत्रितकीर्तिमण्डल-
स्स राशिरासीन्महसां महोज्ज्वलः ॥ 3038 ॥

५९९ । असिजगमिनमिहनिविश्यशां वृद्धिश्च ।

आष्ट्रः । गान्त्रं शकटम् । नान्त्रं स्तोत्रम् । हान्त्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ।

६०० । दिवेर्धुश्च ।

द्यौत्रं ज्योतिः ।

६०१ । उषिखनिभ्यां कित् ।

उष्ट्रः । खात्रं खनित्रं जलाधारश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 2151. इमोष्ट्रौ ।

### ६०२ । सिविमुच्योष्टेरू च ।

सूत्रम् । मूत्रम् ।

रघुवंशे—I. 4.

अथ वा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ 3039 ॥

### ६०३ । अमिचिमिदिशसिभ्यः क्त्रः ।

आन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् ।

### ६०४ । पुवो ह्रस्वश्च ।

पुत्रः ।

चम्पूभारते—II. 36.

पुत्रं तत्र घटोत्कचं पवनभूसङ्गादनङ्गातुरा
प्राप्तं सर्वगुणैर्मनोजवसतां प्रासूत नक्तञ्चरी ।
कुर्यां वः स्मृत एव कर्मसु हरेः शक्तेरपि स्रंसना-
मित्युक्त्वा स पितॄन्यथाभिलषितं युक्तस्तया निर्ययौ ॥ 3040 ॥

### ६०५ । स्त्यायतेर्ड्ट् ।

स्त्री ।

अस्मिन्नेव ग्रन्थे श्लो० 1085. स्त्री च पुमांश्च स्त्रीपुंसौ । 'अचतुर' (सू. 945) इति निपातनादच् समासान्तः ।

### ६०६ । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ।

'गोत्रं स्यान्नामवंशयोः' । गोत्रा पृथिवी । धर्त्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्रम् । क्षत्त्रम् ।

अस्मिन्नेव ग्रन्थे ग० 1369. आकलितं गोत्रान्तरं मालिनीत्यन्यन्नाम यस्मिन् तत् आकलितगोत्रान्तरम् । गोत्रा गोवृन्दः । खरुगोरथात् इत्यनुवृत्य 'इनित्रकट्यचश्च' (सू. 1260) इति समूहार्थे त्रप्रत्ययः ।

रघुवंशे—VI. 26.

तां सैव वेत्रग्रहणे नियुक्ता
राजान्तरं राजसुतां निनाय ।
समीरणोत्थेव तरङ्गलेखा-
पद्मान्तरं मानसराजहंसीम् ॥ 3041 ॥

चम्पूभारते—I. 7.

वक्त्रं विलासमणिदर्पणधार्यमाणं
वामा हिमांशुरयमित्यवधार्य यस्याम् ।
आदर्शबिम्बधृतिरश्रुतदृष्टपूर्वा
तस्येति तादृशधियं विनिवर्तयन्ति ॥ 3042 ॥

अस्मिन्नेव ग्रन्थे श्लो० 654. गोत्रं वंशः ।

## ६०७ । हुयामाश्रुभसिभ्यस्त्रन् ।

होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा ।

नैषधे—I. 8.

यदस्य यात्रासु बलोद्धतं रजः
स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ
दधाति पङ्कीभवदङ्कतां विधौ ॥ 3043 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1031. श्रोत्राक्षि ।

## ६०८ । गमेरा च ।

गात्रम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 654 गात्रं न केवलम् ।

६०९ । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।

६०९ । दादिभ्यश्छन्दसि ।

दात्रम् । पात्रम् ।

अस्मिन्नेव ग्रन्थे ग॰ 867. गुणदात्रे गणरात्रे ।

अस्मिन्नेव ग्रन्थे श्लो॰ 900. पात्राणां प्रियतमावदनानि ।

६१० । भूवादिगृभ्यो णित्रन् ।

भावित्रम् । वादित्रम् । गारित्रमोदनम् ।

चम्पूभारते—II. 1.

ग.—एकदा तु ते सर्वे सुपर्वसरित्सलिलेषु विहृत्य समुत्तीर्णा वीचीभिरनीचीभिरुत्कूलितफेनकूटेष्विव पटगृहवाटेषु परिगृहीतमनोहराम्बरपटीरहाराभ्यवहाराः कुमाराः कुशलकुशीलवकुलशीलितविचित्रवादित्रकलशीरववशीकृतमनसः सुखमासामासुः ॥ 3044 ॥

६११ । चरेर्वृत्ते ।

चारित्रम् ।

६१२ । अशित्रादिभ्य इत्रोत्रौ ।

अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । त्रोत्रं प्रहरणम् । वृञ्, वरुत्रं प्रावरणम् ।

६१३ । अमेर्द्विषति चित् ।

अमित्रः शत्रुः ।

६१४ । आः समिण्निकषिभ्याम् ।

सम्पूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वात् अव्ययत्वम् । समया । निकषा ।

अस्मिन्नेव ग्रन्थे ग० 287. पम्पां सुषमा।

अस्मिन्नेव ग्रन्थे श्लो० 2828. लङ्कां निकषा। उभयत्र 'अभितः परितः' (वा. 1442 & 1443. सू. 544) इत्यादिना द्वितीया।

६१६। सूचेः स्मन्।

सूक्ष्मम्।

६१७। पातेर्डुमसुन्।

पुमान्।

६१८। रुचिभुजिभ्यां किष्यन्।

रुचिष्यमिष्टम्। भुजिष्यो दासः।

रघुवंशे—VI. 53.

अथाङ्गदाश्लिष्टभुजं भुजिष्या
हेमाङ्गदं नाम कलिङ्गनाथम्।
आसेदुषीं सादितशत्रुपक्षं
बालामबालेन्दुमुखीं बभाषे॥ 3045॥

६१९। वसेस्तिः।

'वस्तिर्नाभेरधो द्वयोः' II. vi. 73. इत्यमरः। वस्तयः स्युर्दशासूत्रे। बाहुलकात् शासः। शास्तिः राजदण्डः। विन्ध्यारण्यमगमस्यतीत्यगस्तिः। शकन्ध्वादिः।

६२०। सावसेः।

स्वस्ति। स्वरादिपाठादव्ययत्वम्।

अस्मिन्नेव ग्रन्थे श्लो० 338. स्वस्त्यस्तु तुभ्यं नमः। 'नमः स्वस्ति' (सू. 583) इति चतुर्थी।

६२१। वौ तसेः।

वितस्तिः।

## ६२२ । पदिप्रथिभ्यां नित् ।

पत्तिः । प्रथितिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1148. पत्तिः पदातिः ।

## ६२३ । दृणातेर्ह्रस्वश्च ।

दृतिः ।

## ६२४ । कृतृकृपिभ्यः कीटन् ।

किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णं । कृपीटं कुक्षिवारिणोः ।

## ६२५ । रुचिवचिकुचिकुटिभ्यः कितच् ।

रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् ।

माघे—IX. 5.

उपसन्ध्यमास्त तनु सानुमतः
शिखरेषु तत्क्षणमशीतरुचः ।
करजालमस्तसमयेऽपि सता-
मुचितं खलूच्चतरमेव पदम् ॥ 3046 ॥

## ६२६ । कुटिकुषिभ्यां क्मलन् ।

कुट्मलम् । कुष्मलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2769. [1]कुट्मलम् ।

## ६२८ । सर्वधातुभ्योऽसुन् ।

चेतः । सरः । पयः । सदः ।

अस्मिन्नेव ग्रन्थे श्लो० 1660. चेतोजन्म ।

चम्पूभारते—IV. 43.

---

1. कुट्मलमिति पाठाभिप्रायेणेदमुदाहरणम् ।

ग.—सरसीव चलत्कबन्धबन्धुरे समराजिरे तामरसच्छदानिव शतमपि विमतानेतान् हेमन्त इवाहं धार्तराष्ट्रशब्दशेषां महागदापतिं गमयिष्यामीति ॥3047॥

चम्पूभारते—III. 52.

पयसा परिपूरितौ घटौ परिपश्यन्पथि पाकशासनिः ।
कमलाक्षकनीयसी कुचौ कलयामास करास्थिताविव ॥ 3048 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1359. सदसि ।

## ६३० । अशेर्देवने युट् च ।

देवने स्तुतौ । यशः ।

अस्मिन्नेव ग्रन्थे श्लो० 679. यशोभिः ।

## ६३१ । उब्जेर्बले बलोपश्च ।

ओजः ।

## ६३३ । श्रयतेः स्वाङ्गे शिरः किच्च ।

श्रयतेः शिरआदेशो असुन् किच्च । शिरः शिरसी ।

## ६३४ । अर्तेरुच्च ।

उरः ।

अस्मिन्नेव ग्रन्थे श्लो 975. व्यूढमुरो यस्य स व्यूढोरस्कः । 'उरःप्रभृतिभ्यः कप्' (सू. 889) इति नित्यकप् ।

## ६३५ । व्याधौ शुट् च ।

अर्शो गुदव्याधिः ।

## ६३६ । उदके नुट् च ।

अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः अर्णसी ।

६३९ । इण आगसि ।

एनः ।

६४० । वर्चिशीङ्भ्यां रूपस्वाङ्गयोः पुट् च ।

वर्चो रूपम् । शेपो गुह्यम् ।

६४१ । स्रुरीभ्यां तुट् च ।

स्रोतः । रेतः ।

६४२ । पातेर्बले जुट् च ।

पाजः पाजसी ।

६४३ । उदके थुट् च ।

पाथः ।

६४४ । अन्ने च ।

पाथो भक्तम् ।

६४५ । अदेर्नुम्धौ च ।

अदेर्भक्ते वाच्येऽसुन्नुमागमो धादेशश्च । अन्धोऽन्नम् ।

६४९ । उदके नुम्भौ च ।

अम्भः ।

६५० । नहेर्दिवि भश्च ।

नभः ।

माघे—VI. 26.

गजकदम्बकमेचकमुच्चकै-
र्नभसि वीक्ष्य नवाम्बुदमम्बरे ।

अभिससार न वल्लभमङ्गना
न चकमे च कमैकरसं रहः ॥ 3049 ॥

नभसि श्रावणमासे । ‘ नभाः श्रावणिकश्च सः ’ I. iii. 16. इत्यमरः ।

माघे—VI. 28.

द्रुतसमीरचलैः क्षणलक्षित-
व्यवहिता विटपैरिव मञ्जरी ।
नवतमालनिभस्य नभस्तरो-
रचिररोचिररोचत वारिदैः ॥ 3050 ॥

नभ आकाशस्तरुरिव नभस्तरुः ।

६५१ । इण आगोऽपराधे च ।

‘ पापापराधयोः आगः ’ III. iii. 230. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1990. आगः ।

६५२ । अमेर्हुक् च ।

अंहः ।

६५३ । रमेश्च ।

रंहः ।

अस्मिन्नेव ग्रन्थे श्लो० 2814. रंहसा सिंहवेषे ।

६५४ । देशे ह च ।

रमन्तेऽस्मिन् रहः ।

अस्मिन्नेव ग्रन्थे श्लो० 2831. रहसि नलिनतल्पे ।

६५४ । अञ्चयञ्जियुजिभृजिभ्यः कुश्च ।

एभ्योऽसुन्कवर्गश्चान्तादेशः । अङ्कश्चिहशरीरयोः । अङ्कः पक्षी । योगस्समाधिः । भर्गस्तेजः ।

६५६ । सूरञ्जिभ्यां कित् ।

सुवः । रजः ।

६५७ । वसेर्णित् ।

वासो वस्त्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 761. शितिवाससः ।

६५८ । चन्देरादेश्च छः ।

छन्दः ।

चम्पूरामायणे—I. 10.

छन्दोमयीनां निलयस्य वाचामन्तेवसन्तौ मुनिपुङ्गवस्य ।
एतौ कुमारौ रघुवीरवृत्तं यथाक्रमं गातुमुपाक्रमेताम् ॥ 3051 ॥

६५९ । पचिवचिभ्यां सुट् च ।

पक्षसी तु स्मृतौ पक्षौ । वक्षो हृदयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1456. वक्षोभ्यः ।

६६२ । मिथुनेऽसिः पूर्ववच्च सर्वम् ।

उपसर्गविशिष्टो धातुर्मिथुनम् । तत्रासुनोऽपवादोऽसिः स्वरार्थः । सुयशाः ।

६६३ । नञि हन एह च ।

अनेहाः अनेहसौ अनेहसः ।

६६४ । विधाञो वेध च ।

विदधातीति वेधाः ।

## ६६६ । गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वञ्च ।

असिः स्यात् । सुतपाः । जातवेदाः ।

## ६६७ । चन्द्रे मो डित् ।

चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् । चन्द्रमाः ।

अस्मिन्नेव ग्रन्थे श्लो० 2703. चान्द्रमसी चन्द्रमस इयं । 'तस्येदम्' (सू. 1500) इत्यणि ङीप् ।

## ६७० । पुरसि च ।

पुरोधाः ।

चम्पूभारते—II. 103.

विधिचोदनासु मणिदीपयष्टिका-
परितःस्फुरत्प्रतिकृतेश्च सुभ्रुवः ।
उभयोर्विवेचनविधौ पुरोधसः
स्खलनं बभूव न तु मन्त्रतन्त्रयोः ॥ 3052 ॥

## ६७१ । पुरूरवाः ।

पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ।

## ६७३ । उषः कित् ।

उषः ।

## ६७४ । दमेरुनसिः ।

सप्तार्चिर्दमुनाः ।

## ६७५ । अङ्गतेरसिरिरुडागमश्च ।

अङ्गिराः ।

६७६ । सर्तेरप्पूर्वादसिः ।

अप्सराः । प्रायेणायं भूम्नि । अप्सरसः ।

६७८ । वशेः कनसिः ।

सम्प्रसारणम् । उशनाः ।

॥ इत्युणादिषु चतुर्थः पादः ॥

## ॥ अथ पञ्चमः पादः ॥

—: * :—

### ६७९ । अदि भुवो डुतच् ।

अद्भुतम् ।

### ६८० । गुधेरूमः ।

गोधूमः ।

### ६८३ । पातेरतिः ।

पातिः स्वामी । संपातिः पक्षिराजः ।

चम्पूरामायणे — IV. 42.

इति ब्रुवाणं कृतसौहृदं तं
सम्पातिमापृच्छ्य परापरज्ञम् ।
प्रवृद्धहर्षाः प्रथितप्रभावाः
प्रतस्थिरे वानरयूथनाथाः ॥ 3053 ॥

### ६८६ । तृहेः क्नो हलोपश्च ।

तृणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 305. तृणाय ।

### ६८७ । वृञ्लुटितनिताडिभ्य उलच् तण्डश्च ।

व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ।

### ६८८ । दंसेष्टटनौ न आ च ।

'दासस्सेवकशूद्रयोः' ।

### ६८९ । दंशेश्च ।

दाशो धीवरः ।

### ६९० । उदि चेर्डैसिः ।

स्वरादिपाठादव्ययत्वम् । उच्चैः ।

अस्मिन्नेव ग्रन्थे श्लो० 1187. उच्चैः ।

६९१ । नौ दीर्घश्च ।

नीचैः ।

६९३ । पूञो यण्णुग्घ्रस्वश्च ।

यत्प्रत्ययः । पुण्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 861. पुण्यः ।

६९४ । स्रंसेः शि कुट् किच्च ।

स्रंसतेः शिरादेशो यत्प्रत्ययः कित्तस्य कुडागमश्च । शिक्यम् ।

६९५ । अर्तेः क्युरुच्च ।

उरणो मेषः ।

६९७ । उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ।

उदरम् ।

नैषधे—II. 34.

उदरं नतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेन मुष्टिना ।
चतुरङ्गुलिमध्यनिर्गतत्रिवलिभ्राजि कृतं दमस्वसुः ॥ 3054 ॥

नैषधे—II. 35.

उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु ।
धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः ॥ 3055 ॥

६९८ । डित्खनेर्मुट् स चोदात्तः ।

अजल् च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् ।

माघे—VIII. 29.

किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः ।

संशय्य क्षणमिति निश्चिकाय कश्चिद्
बिब्बोकैर्बकसहवासिनां परोक्षैः ॥ 3056 ॥

### ६९९ । अमेस्सन् ।

अंसः ।

अस्मिन्नेव ग्रन्थे श्लो० 116. अंसानाम् ।

### ७०० । मुहेः खो मूर् च ।

मूर्खः ।

### ७०१ । नहेर्हलोपश्च ।

नखः ।

अस्मिन्नेव ग्रन्थे श्लो० 2164. नखैः ।

### ७०२ । शीङो ह्रस्वश्च ।

शिखा ।

### ७०३ । माङ ऊखो मय् च ।

मयूखः ।

### ७०४ । कलिगलिभ्यां फगस्योच्च ।

कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ।

अस्मिन्नेव ग्रन्थे श्लो० 68. गुल्फद्वयसीं गुल्फप्रमाणाम् । प्रमाणे द्वयसच् ।

### ७०५ । स्पृशेः श्वण्शुनौ पृ च ।

श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः । 'पार्श्वमस्त्री तयोरधः' II. vi. 79. इत्यमरः । पर्शुरायुधम् ।

अस्मिन्नेव ग्रन्थे श्लो० 580. पार्श्वद्रुमाः ।

### ७०६ । श्मनि श्रयतेर्डुन् ।

श्मन्छब्दो मुखवाची । मुखमाश्रयत इति श्मश्रु ।

अस्मिन्नेव ग्रन्थे श्लो० 1436. श्मश्रुभिः प्रवृद्धमुखरोमवद्भिः । 'सिध्मादिभ्यश्च' (सू. 1904) इति लच् ।

### ७०७ । अश्र्वादयश्च ।

अश्रु नयनजलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 3011. अश्रुगः ।

### ७०८ । जनेष्टन् लोपश्च ।

जटा ।

अस्मिन्नेव ग्रन्थे श्लो० 2738. जटाः ।

### ७०९ । अच् तस्य जङ्घ च ।

तस्य जनेर्जङ्घादेशः स्यादच्च । जङ्घा ।

अस्मिन्नेव ग्रन्थे ग० 2300. चतुरर्णवलङ्घनजङ्घालम् । 'प्राणिस्थादातो लजन्यतरस्याम्' (सू. 1903) इति लच् ।

### ७१० । हन्तेः शरीरावयवे द्वे च ।

जघनम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' II. vi. 74. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1667. जघनम् ।

### ७११ । क्लिशेरन्लो लोपश्च ।

लकारस्य लोपः । केशः ।

अस्मिन्नेव ग्रन्थे श्लो० 233. केशैः ।

### ७१२ । फलेरितजादेश्च पः ।

पलितम् ।

अस्मिन्नेव ग्रन्थे ग० 2247. पलितंभवुकाः । 'आढ्यसुभग' (सू. 2973) इत्यनुवृत्तौ 'कर्तरि भुवः' (सू. 2974) इति खुकञ् ।

### ७१३ । कृञादिभ्यः संज्ञायां वुन् ।

करकः करका । कटकः । नरकं नरकः । 'नरको नारकोऽपि च' इति द्विरूपकोशः । सरकं गगनम् । कोरकः कोरकश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 2741. कोरकाणि ।

### ७१४ । चीकयतेराद्यन्तविपर्ययश्च ।

कीचको वंशभेदः ।

रघुवंशे—II. 12.

स कीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेवताभिः ॥ 3057 ॥

### ७१५ । पचिमच्योरिच्चोपधायाः ।

पेचकः । मेचकः ।

अस्मिन्नेव ग्रन्थे श्लो० 3049. गजकदम्बकमेचकं श्यामलम् ।

### ७१६ । जनेररष्ठ च ।

जठरम् ।

चम्पूरामायणे—III. 10.

तस्मिन्महापथधिया वदनं विगाह्य
निर्गन्तुमक्षमतया जठरे लुठद्भिः ।

वन्यैर्गजैरजगराः पिशिताशनेभ्यो
वातापिदानवदशामुपदेशयन्ति ॥ 3058 ॥

## ७२२ । हर्यतेः कन्यन्हिरच् ।

हिरण्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 109. हिरण्यस्य विकारो हिरण्यम् । 'दाण्डिनायन' ( सू. 1145 ) इति निपातनात्साधुः ।

## ७२३ । कृञः पासः ।

कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ।

अस्मिन्नेव ग्रन्थे ग० 1488. कार्पासवाससा ।

## ७२५ । ऊर्णोतेर्डः ।

ऊर्णा ।

## ७२६ । दधातेर्यन्नुट् च ।

धान्यम् ।

## ७२९ । ऋजेः कीकन् ।

ऋजीक इन्द्रो धूमश्च ।

## ७३० । तनोतेर्डउः सन्वच्च ।

'तितउः पुंसि क्लीबे च' ।

## ७३१ । अर्भकपृथुकपाका वयसि ।

ऋधु वृद्धौ । अतो वुन् भकारश्चान्तादेशः । प्रथेः कुकन्सम्प्रसारणञ्च । पिबतेः कन् ।

## ७३२ । अवद्यावमाधमार्वरेफाः कुत्सिते ।

वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः अधमः । अर्तेर्वन् अर्वा । रिफतेस्तौदादिकात् अः रेफः ।

अस्मिन्नेव ग्रन्थे श्लो० 2217. नवनमपि वासरं अनवमं नवसंख्यारहितम् अवमः शून्यो न भवतीति तथोक्तञ्च ।

७३४ । क्लिशेरीच्चोपधायाः कन्लोपश्च लो नाम् च ।

क्लिशेः कन्स्यादुपधाया ईत्वं लस्य लोपो नामागमश्च । कीनाशो यमः ।

माघे—I. 73.

तदेनमुल्लङ्घितशासनं विधे-
विंधेहि कीनाशनिकेतनातिथिम् ।
शुभेतराचारविपक्त्रिमापदो
निपातनीया हि सतामसाधवः ॥ 3059 ॥

७३५ । अश्नोतेराशुकर्मणि वरट् च ।

चकारादुपधाया ईत्वम् । ईश्वरः । 'स्थेश' (सू. 3155) इति वरचि ईश्वरः ।

७३६ । चतेरुरन् ।

चतुरः ।

७३७ । प्रातेररन् ।

प्रातः ।

७३८ । अमेस्तुट् च ।

अन्तर्मध्यम् ।

७३९ । दहेर्गो लोपो दश्च नः ।

गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारश्च । नगः ।

७४० । सिचेस्संज्ञायां हनुमौ कश्च ।

सिञ्चतेः कप्रत्ययो हकारादेशो नुम च स्यात् । सिंहः ।

७४१ । व्याङि घ्रातेश्च जातौ ।

कप्रत्ययः स्यात् । व्याघ्रः ।

७४२ । हन्तेरच् घुर च ।

घोरम् ।

७४३ । क्षमेरुपधालोपश्च ।

चादच् । क्ष्मा ।

अस्मिन्नेव ग्रन्थे श्लो० 531. क्ष्मा ।

७४४ । तरतेर्ड्रिः ।

त्रयः । त्रीन् ।

७४५ । ग्रहेरनिः ।

ग्रहणिः । ङीष् । ग्रहणी व्याधिभेदः ।

७४६ । प्रथेरमच् ।

प्रथमः ।

७४७ । चरेश्च ।

चरमः ।

चम्पूभारते—VI. 1.

तदनु ते भरता व्यवधाश्रया-
चरमहायनलङ्घनकांक्षिणः ।
अतिचिरं रविभाण्डविवर्जितान्
अनुचरानिव तामटवीं जहुः ॥ 3060 ॥

७४८ । मङ्गेरलच् ।

मङ्गलम् ।

॥ इत्युणादिषु पञ्चमः पादः ॥

॥ श्रीरस्तु ॥

## ॥ अथोत्तरकृदन्तप्रकरणम् ॥



### ३१७१ । भविष्यति गम्यादयः । (३. ३. ३)

'गमेरिनिः' (उ. सू. 446) इति, 'आङि णित्' (उ. सू. 447) इति च णिनिः । गमी । आगामी । गम्यादिः—३. १०. 'गम्यादीनामुपसंख्यानम्' (वा. 1247. सू. 686) इति समासः । मधुपिपासुप्रभृतीनां गम्यादिपाठात्समास इति वामनः ।

अस्मिन्नेव ग्रन्थे श्लो० 568. कालयवनादयो राजानः एनं शिशुपालमनुयायिनः अनुयास्यन्तः । अनेन भविष्यदर्थे णिनिः । 'अकेनोः' (सू. 628) इति षष्ठीप्रतिषेधात् द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 569. अथो गामिता गमिष्यता । स्वर्गं गामी गमिष्यति । अनेन गामिशब्दस्य भविष्यदर्थता । 'अकेनोः (सू. 628) इति षष्ठीप्रतिषेधाद्द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 1354. आगामिनीमागमिष्यन्तीम् । पूर्ववत् भविष्यदर्थता ।

अस्मिन्नेव ग्रन्थे श्लो० 2986. भाविषु भविष्यत्सु ।

चम्पूभारते—V. 92.

वाञ्छामनाप्तेन वनीपकेन
सहासवो दातृजनस्य यान्ति ।
तदद्य शकार्चनया धृतासो-
र्भावी वधो मे परमो हि लाभः ॥ 3061 ॥

### ३१७२ । दाशगोघ्नौ सम्प्रदाने । (३. ४. ७३)

दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नः अतिथिः ।

३१७३ । भीमादयोऽपादाने । (३. ४. ७४)

भीमः । भीष्मः ।

अस्मिन्नेव ग्रन्थे श्लो० 626. बिभेत्यस्मादिति भीष्मो भयङ्करः । 'भियष्षुग्वा' (उ. सू. 145) इत्यौणादिको मक्प्रत्ययः । अनेनापादानार्थता । भीमादिः—३. १३.

३१७५ । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । (३. ३. १०)

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोः एतौ स्तः । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति ।

अस्मिन्नेव ग्रन्थे श्लो० 530. धर्मो रामस्य वार्तामाख्यायकः आख्यास्यन् । भविष्यदर्थे ण्वुल् । 'अकेनोः' (सू. 628) इत्यादिना षष्ठीप्रतिषेधाद्द्वितीया ।

भट्टिकाव्ये—III. 33.

तं स्वस्थयन्तस्सचिवा नरेन्द्रं
दिदृक्षयन्तस्समुदूहुरारात् ।
अन्त्याहुतिं भावयितुं सविप्रां-
श्चिचीषयन्तोऽध्वरपात्रजातम् ॥ 3062 ॥

अन्त्याहुतिं भावयितुम् । अनेन तुमुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 384. मित्रकार्याणि कारकाः करिष्यन्तः । अनेन ण्वुल् । 'अकेनोः' (सू. 628) इति षष्ठीप्रतिषेधाद्द्वितीया । रामं द्रष्टुम् । अनेन तुमुन् । 'न लोक' (सू. 627) इत्यादिना षष्ठीप्रतिषेधाद्द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 507. सुग्रीवस्तव सख्यस्य कारकः कर्ता । 'ण्वुल्-तृचौ' (सू. 2895) इति ण्वुल् । षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 1870. पतत्रिणं हन्तुम् । अनेन तुमुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 563. प्रियतमेषु कुकुभः वधूरनुनायिका अनुनेष्यन्ती । भविष्यदर्थे ण्वुल् । 'अकेनोः' (सू. 628) इति षष्ठीप्रतिषेधाद्द्वितीया ।

३१७६ । समानकर्तृकेषु तुमुन् । (३. ३. १५८)

अक्रियार्थोपपदार्थमेतत् । इच्छार्थेषु समानकर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । इच्छति भोक्तुं वष्टि वाञ्छति वा ।

अस्मिन्नेव ग्रन्थे श्लो० 631. सौमित्रिं गन्तुमैजिहत ।

अस्मिन्नेव ग्रन्थे श्लो० 1025. विधातुमिच्छतः ।

नैषधे—V. 114.

कुण्डिनेन्द्रसुतया किल पूर्वं मां वरीतुमुररीकृतमास्ते ।
व्रीडमेष्यति परं मयि दृष्टे स्वीकरिष्यति न सा खलु दुम्मान् ॥3063॥

कुण्डिनेन्द्रसुतया मां वरीतुमुररीकृतमास्ते तया मद्वरणमङ्गीकृतम् । कर्मणि क्तः । अङ्गीकारस्य कथञ्चिदिच्छार्थत्वमङ्गीकृत्यानेन तुमुन् ।

नैषधे—VI. 81.

लोकस्रजि द्यौर्दिवि चादितेया
अप्यादितेयेषु महान्महेन्द्रः ।
किं कर्तुमर्थी यदि सोऽपि रागा-
ज्जागर्ति कक्ष्या किमतः परापि ॥ 3064 ॥

किं कर्तुं सेवितुमर्थी इच्छुः । अर्थयतेरिच्छार्थत्वादनेन तुमुन् ।

३१७७ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तमुन् ।
(३. ४. ६५)

एषूपपदेषु धातोस्तुमुन्स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव सम्बध्यते अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2049. दर्शनं सोढुमशक्नुवन् ।

अस्मिन्नेव ग्रन्थे श्लो० 397. तत्सोढुमशक्नुवाना असहनशीला ।

चम्पूभारते—I. 22.

आकर्ण्य क्षितिपहयारवानसह्या-
 न्नामूलं कुपितवदहितो विपाकम् ।
व्याधूयान्तिकतरुषु क्षणान्निचख्नु-
 र्व्याक्रष्टुं पुनरपि तच्चिरान्न शेकुः ॥ 3065 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1907. वक्तुमसांप्रतमयुक्तम् । साम्प्रतशब्दस्याहार्थत्वात् तद्योगे तुमुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1270. काकुत्स्थं रणे सहितुं कः क्षमः । शक्त्यर्थत्वादनेन तुमुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 98. मन्युर्विनेतुं शक्यः ।

माघे—XVII. 50.

हरेरपि प्रति परकीयवाहिनी-
 मभिद्रुतं प्रववृतिरे चमूचराः ।
विलम्बितुं न खलु सहा मनस्विनो
 विधित्सतः कलहमवेक्ष्य विद्विषः ॥ 3066 ॥

विलम्बितुं सहन्त इति सहाः क्षमाः । पचाद्यच् । न खलु ।

अस्मिन्नेव ग्रन्थे श्लो० 2564. युवां पदमपि चलितुं न सेहे न शशाक ।

रघुवंशे—I. 10.

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ 3067 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1771. प्रतिमोक्तुमर्हसि ।

अस्मिन्नेव ग्रन्थे श्लो० 2369. भटाश्च गन्तुं नोत्सेहिरे ।

अस्मिन्नेव ग्रन्थे श्लो० 73. कर्तुं सहत इति सहा नासि ।

माघे—V. 37.

दानं ददत्यपि जलैस्सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षोः
मंक्षूदपाति परितः पटलैरलीनाम् ॥ 3068 ॥

आसितुमुत्सहेत ।

माघे—XII. 67.

या घर्मभानोस्तनयापि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णापि शुद्धेरधिकं विधातृभिः
विहन्तुमंहांसि जलैः पटीयसी ॥ 3069 ॥

अंहांसि विहन्तुं पटीयसी समर्थतरा । 'पर्याप्ति' (सू. 3178) इति तुमुन् ।

अस्मिन्नेव ग्रन्थे ग० 2840. परिस्पन्दितुमपि प्रभवो न भवन्ति।

अस्मिन्नेव ग्रन्थे श्लो० 1779. विपक्षस्योच्छेदं कर्तुं प्रभवति शक्नोति ।

अस्मिन्नेव ग्रन्थे श्लो० 437. गन्तुं नोत्सहते न शक्नोति ।

अस्मिन्नेव ग्रन्थे श्लो० 164. सख्या भीमभुवः लीलाकमलं विलेखितुमशाकि । भावे लुङ् । पाणि तु नाशाकि ।

नैषधे—VI. 112.

श्रवणपुटयुगेन स्वेन साधूपनीतं
दिगधिपकृपयात्तादीदृशात्सन्निधानात् ।
अलभत मधु बालारागवागुत्थमित्थं
निषधजनपदेन्द्रः पातुमानन्दसान्द्रः ॥ 3070 ॥

निषधजनपदेन्द्रो मधु पातुमलभत । लब्धवानित्यर्थः । अनेन तुमुन् ।

## ३१७८ । पर्याप्तिवचनेष्वलमर्थेषु । ( ३. ४. ६६ )

पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन्स्यात् । पर्याप्तो भोक्तुं । प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुस्सामर्थ्यम् ।

किरातार्जुनीये—V. 17.

अलमेष विलोकितः प्रजानां
सहसा संहतिमंहसां विहन्तुम् ।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपः शिरोभिः ॥ 3071 ॥

अचलाधिपः अंहसां संहतिं विहन्तुमलं समर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 164. सख्या भीमभुवः कर्णोत्पलं विलेखितुमपारि पर्याप्तम् । भावे लुङ् । अनेन तुमुन् । अक्षि तु नापार्येव ।

अस्मिन्नेव ग्रन्थे श्लो० 941. दुर्मेधसोऽपि ग्रन्थानधीत्य व्याकर्तुं व्याख्यातुमलं समर्थाः । तुमुन् ।

## ३१७९ । कालसमयवेलासु तुमुन् । ( ३. ३. १६७ )

कालार्थेषूपपदेषु तुमुन्स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1703. ते द्वितीयमाश्रमं सङ्क्रमितुमयं कालः ।

## ३१८० । भाववचनाश्च । ( ३. ३. ११ )

भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । 'तुमर्थाच्च भाववचनात्' ( सू. 582 ) इति चतुर्थी । यागाय याति ।

अस्मिन्नेव ग्रन्थे श्लो० 359. देवकार्यविघाताय देवकार्यं विहन्तुम् । अनेन भविष्यति घञ् । चतुर्थी ।

भट्टिकाव्ये—VII. 30.

ततः कपीनां सङ्घाता हर्षाद्राघवभूतये ।
पूरयन्तस्समाजग्मुर्भयदाश्चा दिशो दश ॥ 3072 ॥

राघवभूतये कापि नाम राघवस्य सम्पत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थायामुपपदेऽनेन भविष्यति क्तिन् । चतुर्थी च पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 382. रावणप्रीत्यै रावणं प्रीणयितुम् । भविष्यति क्तिन् । चतुर्थी पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1025. द्विषां कर्मणि षष्ठी । विघाताय विहन्तुम् । पूर्ववत् ।

## ३१८१ । अण् कर्मणि च । (३. ३. १२)

कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 3072. भयं दास्यन्तो भयदायाः । कर्मोपपदाद्ददाते-र्भविष्यदर्थे अण् ।

## ३१८२ । पदरुजविशस्पृशो घञ् । (३. ३. १६)

भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः ।

भट्टिकाव्ये—VII. 32.

कर्तास्मि कार्यमायातैरेभिरित्यवगम्य सः ।
काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ 3073 ॥

शीतस्पर्शामाह्लादिकां काकुत्स्थपादपच्छायाम् । अनेन पादस्पर्शौ घञन्ताविति मल्लिनाथव्याख्यानम् । पद्यन्त इति पादाः । अनेन कर्तरि घञ् । शीतस्पर्शामनुद्वेजनकरीम् । स्पृश्यत इति स्पर्शस्तन्मात्र उच्यते । 'अकर्तरि च' (सू. 3186) इति घञ् । न तु पदरुजेत्यादिना । तत्र हि स्पृश उपताप इति वक्तव्यमित्युक्तम् इति जयमङ्गलव्याख्यानम् ।

३१८३ । सृ स्थिरे । (३. ३. १७)

सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः ।

वा० । व्याधिमत्स्यबलेषु चेति वाच्यम् । (2174.)

अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । 'सारो बले दृढांशे च' III. iii. 171. इत्यमरः ।

माघे—XIX. 33.

वाहनाजनि मानासे साराजावनमा ततः ।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ 3074 ॥

सारगा बलभाजः ।

भट्टिकाव्ये—VII. 33.

कार्यसारनिभं दृष्ट्वा वानराणां समागमम् ।
अवैन्नाशं दशास्यस्य निर्वृत्तमिव राघवः ॥ 3075 ॥

सरति कालान्तरमिति सारः स्थिरांशः । अनेन घञ् ।

३१८४ । भावे । (३. ३. १८)

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः ।

अस्मिन्नेव ग्रन्थे श्लो० 3075. दशास्यस्य नाशम् । अनेन घञ् ।

३१८५ । स्फुरतिस्फुलत्योर्घञि । (६. १. ४७)

अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । 'उपसर्गस्य घञि' (सू. 1044) इति दीर्घः । परीहारः । 'इकः काशे' (सू. 1045) इति दीर्घः । नीकाशः ।

३१८६ । अकर्तरि च कारके संज्ञायाम् । (३. ३. १९)

कर्तृभिन्ने कारके घञ् स्यात्संज्ञि अकर्तरि भावे च। घञच्णाप्नङ्घाथुचो, ल्युः, कर्तरीमनिच्, घोः किः, पुंलिङ्गशेषे। (सू. 3184) 'भावे घञ्' (सू. 2902) आरभ्य, अञ्णौ (सू 3232) आरभ्य, अप् (सू. 3268) नङ् (सू. 3296) घ (सू. 3067) अथुच् (सू. 2896) ल्युः (सू. 1784) इमनिच् (सू. 3270) घोः किः। एते पुंलिङ्गाः।

अस्मिन्नेव ग्रन्थे श्लो॰ 2086. इषवोऽस्यन्ते एभिरितीष्वासः धनूंषि। करणे घञ्।

अस्मिन्नेव ग्रन्थे श्लो॰ 2495. अस्यन्ते क्षिप्यन्ते शरा अनेनेति **आसो** धनुः। करणे घञ्।

अस्मिन्नेव ग्रन्थे श्लो॰ 1947. उद्भिद्यन्ते येष्विति उद्भेदाः। अधिकरणार्थे घञ्।

अस्मिन्नेव ग्रन्थे श्लो॰ 241. कपिसमाहारम्।

### ३१८७। घञि च भावकरणयोः। (६. ४. २७)

रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्। रज्यत्यस्मिन् रङ्गः।

### ३१८८। स्यदो जवे। (६. ४. २८)

स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते। स्यदो वेगः। अन्यत्र स्यन्दः।

भट्टिकाव्ये—XXII. 5.

प्रतन्व्यः कोमला विन्ध्ये सहितारः स्यदं न ते।
लताः स्तबकशालिन्यो मधुलेहिकुलाकुलाः॥ 3076॥

ते स्यदं जवम्।

### ३१९०। परिमाणाख्यायां सर्वेभ्यः। (३. ३. २०)

घञ्। एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ।

वा॰। दारजारौ कर्तरि णिलुक् च। (2182.)

दारयन्तीति दाराः। जरयतीति जारः।

अस्मिन्नेव ग्रन्थे श्लो० 241. निष्कृष्य चीयत इति निश्चायो राशिः। चिनोतेर्घञ्। एकनिश्चायं एकराशीभूतम्। एकशब्दस्य 'पूर्वकाल' (सू. 726) इत्यादिना समासः।

### ३१९१ । इङश्च । (३. ३. २१)

घञ्। उपेत्यास्मादधीयते उपाध्यायः।

वा० । अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्। (2184.)

उपाध्याया उपाध्यायी।

अस्मिन्नेव ग्रन्थे श्लो० 241. उपेत्याधीयतेऽस्मादित्युपाध्यायो गुरुः।

### ३१९२ । उपसर्गे रुवः । (३. ३. २२)

घञ्। संरावः। उपसर्गे किम्। रवः।

भट्टिकाव्ये — VII. 35.

सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदम्।
जाम्बवन्नीलसहितं चारुसंद्रावमब्रवीत् ॥ 3077 ॥

जलाम्बोदस्येव संरावो यस्य तम्। घञ्।

माघे—XI. 40.

अरुणजलजराजीमुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी।
अनुपतति विरावैः पत्त्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥ 3078 ॥

विरावैः। घञ्।

चम्पूरामायणे—I. 105.

रवः कठिनकर्षणत्रुटितचापजन्मा क्षणा-
द्दिशां द्विरदधीकृतैः कृतहरित्पतिस्वागतः।

जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गना-
प्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः ॥ 3079 ॥

अनुपसर्गे अप् । 'ध्वनिर्ध्वानरवस्वनाः' I. v. 24. इति, 'आरवारावसंरावविरावा' I. v. 25. इति चामरः ।

## ३१९४ । समि युद्रुदुवः । (३. ३. २३)

संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । संद्रावः । संदावः ।

अस्मिन्नेव ग्रन्थे श्लो० 3077. चारुसंद्रावं श्लाघ्यगतिम् । घञ् ।

## ३१९५ । श्रिणीभुवोऽनुपसर्गे । (३. ३. २४)

श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । प्रणयः । प्रभवः । प्रभावो राज्ञ इति प्रकृष्टो भाव इति प्रादिसमासः । कथं 'राज्ञो नय' इति । बाहुलकात् ।

भट्टिकाव्ये—VII. 36.

यात यूयं यमश्रायं दिशं नायैश्च दक्षिणाम् ।
विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥ 3080 ॥

श्रीयत इति श्रायः । यमस्य श्रायं आश्रयं स्थानम् । नीयन्त इति नायैः नीतिभिः । उपायैरित्यर्थः । उभयत्रापि कर्मणि घञ् ।

किरातार्जुनीये—I. 6.

निसर्गदुर्बोधमबोधविक्लवाः
क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ 3081 ॥

तवानुभावः सामर्थ्यम् । अनुगतो भावोऽनुभाव इति प्रादिसमासः । अत एव काशिकायां 'कथं प्रभावो राज्ञाम् । प्रकृष्टो भाव इति प्रादिसमास' इति ।

अस्मिन्नेव ग्रन्थे श्लो० 1953. अनुभावः । पूर्ववत्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 237. अयं महात्मा तपसः प्रभावात् । पूर्ववत् ।

३१९६ । वौ क्षुश्रुवः । (३. ३. २५)

विक्षावः । विश्रावः । वौ किम् । क्षवः । श्रवः ।

अस्मिन्नेव ग्रन्थे श्लो० 3080. विक्षावैः सिंहनादैः । टु क्षु शब्दे । विश्रूयत इति विश्रावं शब्दम् । उभयत्रापि कर्मणि घञ् ।

३१९७ । अवोदोर्नियः । (३. ३. २६)

अवनायः अधोनयनम् । उन्नाय ऊर्ध्वनयनम् । कथमुन्नयः उत्प्रेक्षा इति । बाहुलकात् ।

भट्टिकाव्ये—VII. 37.

उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् ।
वनाभिलावान्कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ 3082 ॥

गिरीणामुन्नायान् उत्सेधान् । घञ् ।

३१९८ । प्रे द्रुस्तुस्रुवः । (३. ३. २७)

प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् । द्रवः । स्तवः । स्रवः ।

अस्मिन्नेव ग्रन्थे श्लो० 3082. प्रद्रावैः प्रकृष्टगतिभिः । घञ् ।

३१९९ । निरभ्योः पूल्वोः । (३. ३. २८)

निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । पवः लवः ।

अस्मिन्नेव ग्रन्थे श्लो० 3082. वनानामभिलावानुत्सेधान् ।

३२०० । उन्न्योर्ग्रः । (३. ३. २९)

उद्गारः । निगारः । उन्न्योः किम् । गरः ।

अस्मिन्नेव ग्रन्थे श्लो० 554. उद्गारः संस्रावः । गिरतेर्घञ् ।

### ३२०१ । कॄ धान्ये । (३. ३. ३०)

'कॄ' इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारो निकारः । धान्यस्य विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः । पुष्पनिकरः ।

अस्मिन्नेव ग्रन्थे श्लो० 554. धान्यानामुत्कारेषु राशिषु । घञ् ।

### ३२०२ । यज्ञे समि स्तुवः । (३. ३. ३१)

समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगास्स देशस्संस्तावः । यज्ञे किम् । संस्तवः परिचयः ।

भट्टिकाव्ये—VII. 39.

> संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे ।
> शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ 3083 ॥

छन्दोगानां महाध्वरे संस्तावमिव सम्भूय स्तवनमिव । पाठध्वनिविशेषमिव वा । घञ् ।

### ३२०३ । प्रे स्त्रोऽयज्ञे । (३. ३. ३२)

प्रस्तारः ।

अस्मिन्नेव ग्रन्थे श्लो० 3083. पुष्पाणां प्रस्तारा राशयः । घञ् ।

### ३२०४ । प्रथने वावशब्दे । (३. ३. ३३)

विपूर्वात्स्तृणातेर्घञ् स्यात् अशब्दविषये प्रथने । पटस्य विस्तारः ।

भट्टिकाव्ये—VII. 40.

> आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः ।
> स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम् ॥ 3084 ॥

दक्षिणोदधेरम्भसां विस्तारं परिणाहम् । घञ् ।

माघे—V. 2.

तं सद्विपेन्द्रतुलितातुलतुङ्गशृङ्ग-
मभ्युल्लसत्कदलिकावनराजिरुच्चैः ।
विस्ताररुद्धवसुधोऽप्यचलं चचाल
लक्ष्मीं दधत्प्रतिगिरेरलघुर्बलौघः ॥ 3085 ॥

विस्ताररुद्धवसुधो वैपुल्यव्याप्तभूमिः । घञ् ।

रघुवंशे—VI. 70.

तस्मिन्समावेशितचित्तवृत्ति-
मिन्दुप्रभामिन्दुमतीमवेक्ष्य ।
प्रचक्रमे वक्तुमनुक्रमज्ञा
सविस्तरं वाक्यमिदं सुनन्दा ॥ 3086 ॥

सविस्तरं सप्रपञ्चं वाक्यम् । 'प्रथने वावशब्दे' (सू. 3204) इति घञो निषेधात् 'ऋदोरप्' (सू. 3232) इत्यप् । 'विस्तारो विग्रहो व्यासस्स च शब्दस्य विस्तरः' III. ii. 22. इत्यमरः ।

## ३२०७ । उदि ग्रहः । (३. ३. ३५)

उद्ग्राहः ।

## ३२०८ । समि मुष्टौ । (३. ३. ३६)

मल्लस्य सङ्ग्राहः । मुष्टौ किम् । द्रव्यस्य सङ्ग्रहः ।

अस्मिन्नेव ग्रन्थे श्लो० 3084. मुष्टीनां संग्राहः सम्यग्ग्रहणम् । ग्रहेर्घञ् ।

## ३२०९ । परिन्योर्नीणोर्द्यूताभ्रेषयोः । (३. ३. ३७)

परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात्क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान्हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1540. यदत्र न्याय्यं न्यायादनपेतम् । घञ् । 'धर्मपथ्यर्थन्यायादनपेते' (सू. 1644) इति यत् ।

## ३२१० । परावनुपात्यय इणः (३. ३. ३८)

क्रमप्राप्तस्यानतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः । अतिपात इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1540. **पर्यायेणा**नुपात्ययेन । तवोपशायो ममोपशाय इति क्रमेणेत्यर्थः । परिपूर्वादिणो घञ् ।

## ३२११ । व्युपयोः शेतेः पर्याये । (३. ३. ३९)

तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः संशयः । उपशयः समीपशयनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1540. **निशोपशायो** निशायां पर्यायशयनम् । ईशोपशाय इति पाठे राजोपशाय इत्यर्थः । उपपूर्वाच्छीङो घञ् ।

अनर्घराघवे—V. 19.

कुमुदवन**विशाय**जाग्रदम्भो-
रुहकृतयामिकविभ्रमा रमन्ते ।
मदकलकरिकर्णतालनृत्य-
न्मुखरमयूरमनोरमास्तटिन्यः ॥ 3087 ॥

**विशायः** पर्यायशयनम् । विपूर्वाच्छीङो घञ् ।

## ३२१२ । हस्तादाने चेरस्तेये । (३. ३. ४०)

पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयः चौर्येण ।

अस्मिन्नेव ग्रन्थे श्लो० 1540. फलो**च्चायः** । क्षुण्णिवृत्त्यर्थमासन्नफलादानम् । चिनोतेर्घञ् ।

चम्पूरामायणे—IV. 3.

करतलैर**पचायम**थेक्षणैरपचयञ्च वनेषु जनेषु च ।
सुमनसां मनसामपि यद्दिने विरचयन्ति विलोलविलोचनाः ॥ 3088 ॥

विलोलविलोचनाः करतलैर्वनेषु सुमनसामपचायम् । घञ् । ईक्षणैर्जनेषु मनसामपचयम् । अत्राप् । विरचयन्ति ।

अस्मिन्नेव ग्रन्थे श्लो० 2729. अवचयः पुष्पफलादिच्छेदनं यष्ट्यादिना न तु हस्तेन : तदा अवचाय इति घञ् स्यात् ।

## ३२१३ । निवासचितिशरीरोपसमाधानेष्वादेश्च कः । ( ३. ३. ४१ )

एषु चिनोतेर्घञ् स्यात् आदेश्च ककारः । उपसमाधानं राशीकरणम् । तच्च धात्वर्थः । निवासे, काशीनिकायः । चितौ, आकायमग्निं चिन्वीत । चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे गोमयनिकायः । एषु किम् । चयः । 'चः कः' इति वक्तव्ये आदेरित्युक्तेर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनःपुना राशीकरणमित्यर्थः ।

भट्टिकाव्ये—VII. 42.

सीता रक्षोनिकायेषु स्तोककायैश्छलेन च ।
मृगया शत्रुनिकायानां व्यावहासीमनाश्रितैः ॥ 3089 ॥

रक्षोनिकायेषु राक्षसनिवासेषु । अधिकरणे घञ् । आदेश्च ककारः । स्तोककायैरल्पशरीरैः । चिन्वन्त्यस्माच्छुभमिति कायः । शरीरे घञ् ।

निकायादिषु निवासाद्यर्थेषु अनेन चिनोतेर्घञ् । आदेश्चकारस्य ककारः ।

उत्तररामचरिते—V. 9.

अयं शैलाघातक्षुभितबडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे ।
समन्तादुत्सर्पद्घनतुमुलहेलाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ 3090 ॥

## ३२१४ । संघे चानौत्तराधर्ये । ( ३. ३. ४२ )

चेर्घञ्, आदेश्च कः । भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । सङ्घे किम् । ज्ञानकर्मसमुच्चयः ।

अस्मिन्नेव ग्रन्थे श्लो० 3089. शत्रुनिकायानामरिसमूहानाम् । निचीयत इति निकायः । कर्मणि घञ् ।

भट्टिकाव्ये—XII. 5.

हता जनस्थानसदो निकायाः
कृता जितोत्खातभटद्रुमा पूः ।
सदांसि दग्धानि विधेयमस्मिन्
यद्बन्धुना तद्घटयस्व तस्मिन् ॥ 3091 ॥

**३२१५ । कर्मव्यतिहारे णच् स्त्रियाम् । (३. ३. ४३)**

स्त्रीलिङ्गे भावे णच् ।

**३२१६ । णचः स्त्रियामञ् । (५. ४. १४)**

**३२१७ । न कर्मव्यतिहारे । (७. ३. ६)**

अत्र ऐच्न स्यात् । व्यावक्रोशी । व्यावहासी ।

अस्मिन्नेव ग्रन्थे श्लो० 3089. व्यावहासीं मिथो हासव्यवहारम् । अञि स्त्रियां ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 317. व्यात्युक्षीं परस्पराभ्युक्षणम् । पूर्ववत् ।

**३२१८ । अभिविधौ भाव इनुण् । (३. ३. ४४)**

**३२१९ । अणिनुणः । (५. ४. १५)**

'इनण्यनपत्ये' (सू. 1245) इति प्रकृतिभावः । सांराविणं वर्तते ।

अस्मिन्नेव ग्रन्थे श्लो० 1338. समन्ताद्रावः कलकलः सांराविणम् । सम्पूर्वाद्रौतेः इनुण् । ततोऽण् । 'इनण्यनपत्ये' (सू. 1245) इति प्रकृतिभावात् 'नस्तद्धिते' (सू. 679) इति न टिलोपः ।

**३२२० । आक्रोशेऽवन्योर्ग्रहः । (३. ३. ४५)**

अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । निग्रहश्चोरस्य ।

अस्मिन्नेव ग्रन्थे श्लो० 1338. वः सम्बन्धी । अरेः कर्मणि षष्ठी । निग्राह आक्रोशः शपनं अर्थवान्भवति । निपूर्वाद्ग्रहेः घञ् ।

३२२१ । प्रे लिप्सायाम् । (३. ३. ४६)

पात्रप्रग्राहेण चरति भिक्षुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1536. मैथिलीकृतैः सीताकृतैः सीतालिप्सया कल्पितैः पात्राणां प्रग्राहैः भिक्षापात्रस्वीकारैः । प्रपूर्वाद्ग्रहेर्घञ् ।

३२२२ । परौ यज्ञे । (३. ३. ४७)

यज्ञविषये घञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1584. वेदिवत्सपरिग्राहा स्थण्डिलशयनादिव्रतपरिग्रहवती । अन्यत्र संस्कारविशेषवती ।

३२२३ । नौ वृ धान्ये । (३. ३. ४८)

नीवाराः ।

अस्मिन्नेव ग्रन्थे श्लो० 1228. नीवारा अकृष्टपच्या व्रीहयः । निपूर्वाद्वृञो घञ् । 'उपसर्गस्य घञि' (सू. 1044) इत्यादिना नेर्दीर्घः ।

३२२४ । उदि श्रयतियौतिपूद्रुवः । (३. ३. ४९)

उच्छ्रायः । उद्यावः । उत्पावः । कथं 'पतनान्तास्समुच्छ्रयाः' इति । बाहुलकात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1228. निरुद्रावाः स्थिराः । घञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2516. उच्छ्रायः । मल्लिनाथस्तु उत्कृष्टः श्राय उच्छ्राय इति घञन्तेनोपसर्गसमासः । न तूपसृष्टात् घञ्, अनुपसर्ग इति नियमादिति ।

किरातार्जुनीये—XVI. 2.

मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढाः ।

सहिष्णवो नेह युधामभिज्ञाः
नागा नगोच्छ्रायमिवाक्षिपन्तः ॥ 3092 ॥

नगोच्छ्रायम् । मल्लिनाथस्तु पूर्ववद्घञन्तेनोपसर्गस्य समास इत्याह ।

भट्टिकाव्ये—VII. 47.

उच्छ्रायवान् महारावो वानरं जलदारवम् ।
गजाप्लावो हनूमन्तं रामः प्रोचे दुराप्लवम् ॥ 3093 ॥

उच्छ्रायवान् उन्नतियुक्तः । घञ् ।

३२२५ । विभाषाङि रुप्लुवोः । (३. ३. ५०)

आरावः आरवः । आप्लावः आप्लवः ।

अस्मिन्नेव ग्रन्थे श्लो० 3093. महान् आरावो यस्य महारावः । भावे घञ् । जलदारवं मेघगंभीरघोषम् । आङ्पूर्वाद्रौतेरनेन विकल्पाद्घञ् । गजाप्लवः गजगमनः । पक्षे पूर्ववदप् । दूराप्लावं दूरमाप्लाव उद्गमनं यस्य । पूर्ववद्घञ् ।

चम्पूभारते—I. 8.

आलापकालसमपल्लविताङ्गवीणा-
सौरभ्यपातिमधुपारवसङ्कुलस्य ।
तन्त्रीस्वनस्य समितौ तरुणीस्वरस्य
जानाति यत्र चतुरोऽपि न तारतम्यम् ॥ 3094 ॥

आरवः । घञो विकल्पादप् ।

३२२६ । अवे ग्रहो वर्षप्रतिबन्धे । (३. ३. ५१)

विभाषेति वर्तते । अवग्रहः । अवग्राहः ।

अस्मिन्नेव ग्रन्थे श्लो० 1218. अवग्राहे वर्षाभावे । विकल्पाद्घञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1264. रावण एवावग्रहो वर्षप्रतिबन्धः । अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2921. अवग्रहविशोषिणाम् । अप् । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" I. ii. 11. इत्यमरः ।

## ३२२७ । प्रे वणिजाम् । (३. ३. ५२)

प्रे ग्रहेर्घञ्वा वणिजां सम्बन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति तुलाप्रग्रहेण वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1718. तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः । करणे घञ् ।

## ३२२८ । रश्मौ च । (३. ३. ५३)

प्रग्रहः प्रग्राहः ।

भट्टिकाव्ये—VII. 50.

> अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्थलम् ।
> वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव ॥ 3095 ॥

विमुक्तः प्रग्रहो नियमरज्जुर्येषां ते विमुक्तप्रग्रहाः । करणे घञ् । विभाषाग्रहणमनुवर्तते । घञभावपक्षे 'ग्रहवृ' (सू. 3234) इत्यप् ।

भट्टिकाव्ये—VII. 52.

> प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ ।
> अप्रग्राहैरिवादित्यो वाजिभिर्दूरपातिभिः ॥ 3096 ॥

अप्रग्राहैः शिथिलितप्रग्रहैः । विकल्पात्प्रपूर्वाद्ग्रहेः घञ् ।

## ३२२९ । वृणोतेराच्छादने । (३. ३. ५४)

विभाषा प्र इत्येव । प्रावारः प्रवरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1229. प्रावारैरुत्तरासङ्गैरिव । घञ् । 'उपसर्गस्य घञि' (सू. 1044) इति दीर्घः । 'द्वौ प्रावारोत्तरासङ्गौ' II. vi. 117. इत्यमरः । प्रवरैः श्रेष्ठैः । अनाच्छादने 'ग्रह' (सू. 3234) इत्यादिना अप् ।

## ३२३० । परौ भुवोऽवज्ञाने । (३. ३. ५५)

परिभावः परिभवः । अवज्ञाने किम् । परिभवः सर्वतो भवनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2538. परिभावम् अवज्ञानम् । घञ् । परिभवः । घञभावपक्षे अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2610. परिभवोऽरिभवो हि सुदुस्सहः । अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 595. भवतां परिभावः । विभाषया घञ् ।

## ३२३१ । एरच् । ( ३. ३. ५६ )

चयः जयः ।

वा० । भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् । ( 2197. 2198.)

भयं वर्षम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2010. उच्चयः । उत्पूर्वाच्चिनोतेरनेनाच् । शिलाभिरुच्चयो येषां तान् शिलोच्चयान् ।

अस्मिन्नेव ग्रन्थे श्लो० 15. क्षयन्ति निवसन्त्यस्मिन्निति क्षये गृहे । 'निवासः शरणं क्षयः' । क्षि निवासगत्योरित्यस्मादेरच् ।

## ३२३२ । ऋदोरप् । ( ३. ३. ५७ )

ॠवर्णान्तादुवर्णान्तच्चाप् । करः । गॄ निगरणे । गरः । शरः । यवः । लवः । स्तवः । पवः ।

अस्मिन्नेव ग्रन्थे श्लो० 1555. संस्तीर्यत इति संस्तरः तल्पम् । अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2010. शत्रोर्लवमुच्छेदम् । लूञ् छेदने । अप् । अतरान् अविद्यमानतरणान् । 'तॄ प्लवनतरणयोः' इत्यस्मात् अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2653. अभिभवेन पराजयेन । भवतेरप् ।

रघुवंशे—I. 2.

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ 3097 ॥

प्रभवत्यस्मादिति प्रभवं कारणम् । दुस्तरम् । अप् ।

३२३३ । वृक्षासनयोर्विष्टरः । (८. ३. ९३)

अनयोर्विपूर्वस्य स्तः षत्वं निपात्यते । विष्टरो वृक्ष आसनञ्च । 'प्रथने वावशब्दे' (सू. 3204) इति घञ् । पटस्य विस्तारः । घञ् । शब्दानां विस्तरः । न षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1119. विष्टरस्थां पवित्रासनस्थाम् अपि । षत्वनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1601. विष्टरभाजं आसनगतम् ।

चम्पूरामायणे—II. 34.

ग—तस्मिन् सुमन्त्रेण विज्ञाप्य प्रदर्शिते भूपतिर्भूताविष्ट इव विष्टरान्निपत्य सदारस्सदा रचितपरिदेवनो वनोत्कण्ठां स्वयमप्यकरोत् ॥ 3098 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1897. विष्टरमासनम् ।

चम्पूरामायणे—V. 65.

वाचामिदानीं किमु विस्तरेण
लङ्कापुरीं रावणबाहुगुप्ताम् ।
काकुत्स्थदूतोऽयमुपेत्य चक्रे
कृतान्तदूतस्य सुखप्रवेशाम् ॥ 3099 ॥

वाचां विस्तरेण । अत्र न षत्वम् ।

माघे—II. 24.

संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।
सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥ 3100 ॥

सुविस्तरतराः प्रपञ्चतराः । अशब्द इति घञ्प्रतिषेधे 'ॠदोरप्' (सू. 3232) इत्यप् ।

३२३४ । ग्रहवृदनिश्चिगमश्च । (३. ३. ५७)

अप् स्यात् । ग्रहः । वरः । दरः । निश्चयः । गमः ।

वा० । वशिरण्योरुपसंख्यानम् । (2203.)

वशः । रणः ।

वा० । घञर्थे कविधानम् । (2204.)

प्रस्थः विघ्नः ।

वा० । द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् । (3429.)

चक्रम् । चिक्लिदम् । चङ्क्रमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1229. **प्रवरैः** श्रेष्ठैः । अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2010. सीताया विनिश्चयं **स्थाननिर्णयम्** । अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 396. **अभिगमो**ऽभिगमनं प्रयाणम् । भावे अप् ।

अस्मिन्नेव ग्रन्थे श्लो० 460. पुंसाम**गमं** अगम्यं देशम् । कर्मण्यप् । पुंसामिति कर्तरि षष्ठी ।

भट्टिकाव्ये—XIII. 9.

तुङ्गा गिरिवरदेहा अगमं सलिलं समीरणो रसहारी ।
अहिमो रविकिरणगणो मायासंसारकारणं ते परमा ॥ 3101 ॥

**अगमम**गम्यं सलिलम् । कर्मण्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 317. ग्लहो द्यूतपणः । 'पणोऽक्षेषु ग्लहः' II. x. 45. इत्यमरः । 'अक्षेषु ग्लहः' (सू. 247) इति ग्रहेरेवाक्षपणे लत्वनिपातः । अप्प्रत्ययस्त्वनेन ।

भट्टिकाव्ये—VII. 56.

आदरेण गमं चक्रुर्विषमेष्वप्यसंघसाः ।
व्याप्नुवन्तो दिशो न्यादान् कुर्वन्तस्सव्यघान्हरीन् ॥ 3102 ॥

विषमेष्वपि प्रदेशेषु **गमं** गमनं चक्रुः । **आदरेणा**नवज्ञया । उभयत्राप्यप् ।

**३२३५ । उपसर्गेऽदः । (३. ३. ५९)**

अप् स्यात् ।

**३२३६ । घञपोश्च । (२. ४. ३८)**

**अदेर्घस्लृ** स्याद्घञ्यपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः ।

अस्मिन्नेव ग्रन्थे श्लो० 3102. असंघसाः त्यक्ताहाराः । 'उपसर्गेऽदः' (सू. 3235) इत्यपि अनेन अदेर्घस्लादेशः । अन्यादान् परित्यक्ताहारान् । 'नौ ण च' (सू. 3237) इति निपूर्वाददो णप्रत्ययः । तस्मिन्नदेर्घस्लादेशः । चकाराद्बपि । तत्र निघसः ।

अस्मिन्नेव ग्रन्थे श्लो० 1821. गङ्गाप्रपातान्तनिरूढघासम् । कर्मणि घञि अदेर्घस्लादेशः ।

चम्पूभारते—III. 131.

क्षेत्रमप्यधिपतिः कुरु पूर्वं संश्रितौ सपदि दैवबलेन ।
चर्दितुरुकलखाण्डवममैस्तक्षकादभजतां विघसत्वम् ॥ 3103 ॥

'अमृतं विघसो यज्ञशेषभोजनशेषयोः' II. vii. 28. इत्यमरः ।

## ३२३७ । नौ ण च । (३. ३. ६०)

नौ उपपदे अदेर्णः स्यादप्च । न्यादः । निघसः ।

अस्मिन्नेव ग्रन्थे श्लो० 3102. अन्यादान् परित्यक्ताहारान् । णप्रत्ययः ।

## ३२३८ । व्यधजपोरनुपसर्गे । (३. ३. ६१)

अप्स्यात् । व्यधः । जपः । उपसर्गे तु आव्याधः । उपजापः ।

अस्मिन्नेव ग्रन्थे श्लो० 3102. सव्यधान् सप्रहारान् ।

अस्मिन्नेव ग्रन्थे श्लो० 629. व्यधो वेधः । अप् ।

माघे—XVIII. 47.

लब्धस्पर्शं भूव्यधादव्यधेन
स्थित्वा किञ्चिद्दन्तयोरन्तराले ।
ऊर्ध्वाधासिच्छिन्नदन्तप्रवेष्टं
जित्वोत्तस्थे नागमन्येन सद्यः ॥ 3104 ॥

अव्यधेन निर्व्यधेन । अप् ।

## ३२३९ । स्वनहसोर्वा । ( ३. ३. ६२ )

अप् । पक्षे घञ् । स्वनः स्वानः । हसः हासः । अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः । निस्वन इति तु 'नौगद' (सू. 3241.) इत्यनेन बोध्यम् ।

'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ।
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥' I. v. 24, 25. इत्यमरः ।

भट्टिकाव्ये—VII. 57.

सक्ष्वेलससहसाः केचिदस्वनाः केचिदाटिषुः ।
संयामवन्तो यतिवन्निनादानपरेऽमुचन् ॥ 3105 ॥

सहसाः सहासाः । अस्वनाः निश्शब्दाः । उभयत्र विकल्पादप् ।

अस्मिन्नेव ग्रन्थे श्लो० 972. सुहसं सुस्मितम् । अप् ।

भट्टिकाव्ये—XI. 1.

अथास्तमासेदुषि मन्दकान्तौ
पुण्यक्षयेनेव निधौ कलानाम् ।
समाललम्बे रिपुमित्रकल्पैः
पद्मैः प्रहासः कुमुदैर्विषादः ॥ 3106 ॥

प्रहासः । घञ् ।

भट्टिकाव्ये—XVII. 7.

आघ्नन्भेरीर्महास्वानाः कम्बूंश्चाप्यधमन्मुहुः ।
अताडयन्मृदङ्गांश्च पेराश्चापूरयन्कलाः ॥ 3107 ॥

महास्वानाः महानादाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1978. विष्वणन्तीति विष्वणाः । पचाद्यच् । 'वेश्च' (सू. 2274) इति षत्वम् । सोपसृष्टत्वात्कर्त्रर्थत्वाच्च घञ्, नाप् ।

## ३२४० । यमः समुपनिविषु च । ( ३. ३. ६३ )

एष्वनुपसर्गे च यमेरब्वा । संयमः संयामः । उपयमः उपयामः । नियमः नियामः । वियमः वियामः । यमः यामः ।

अस्मिन्नेव ग्रन्थे श्लो० 3105. यतिवत् संयामवन्तो नियमवन्तः । विकल्पाद्घञ् ।

चम्पूरामायणे—II. 15.

वत्सं कठोरहृदये नयनाभिरामं
शामं विना न खलु तिष्ठति जीवितं मे ।
धातुर्बलादुपयमस्त्वयि जातपूर्वः
कैकेयि मामुपयमं नयतीति मन्ये ॥ 3108 ॥

**उपयमो** विवाहः । अप् ।

चम्पूभारते—II. 31.

उपयामविधौ त्वरस्व मे कृपया मारशराश्शरारवः ।
दिवि वा भुवि वाथ दिक्षु वा रमये त्वामुपनीय रंहसा ॥ 3109 ॥

**उपयामो** विवाहः । घञ् ।

## ३२४१ । नौ गदनदपठस्वनः । ( ३. ३. ६४ )

निगदः निगादः । निनदः निनादः । निपठः निपाठः । निस्वनः निस्वानः ।

अस्मिन्नेव ग्रन्थे श्लो० 3105. **निनादान्** । विकल्पाद्घञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 681. **निनादं** निनदम् । पक्षे घञ् । निगादान् इति पाठे वचनानीत्यर्थः । घञ् ।

## ३२४२ । क्वणो वीणायां च । ( ३. ३. ६५ )

नावनुपसर्गे च वीणाविषयाच्च क्वणतेरब्वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणो निक्वाणः । क्वणः क्वाणः । वीणायान्तु प्रक्वणः प्रक्वाणः ।

' निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ।
वीणायाः क्वणते: प्रादेः प्रक्वाणप्रक्वणादयः ॥' I. v. 26,27. इत्यमरः ।

भट्टिकाव्ये—VII. 58.

अथ क्रमादनिक्वाणा नराः क्षीणपणा इव ।
अमदास्सेदुरेकस्मिन् नितम्बे निखिला गिरेः ॥ 3110 ॥

निक्वाणा निश्शब्दाः । अनेन विकल्पेन घञ् । वीणादिविषयमेतत् ।

३२४३ । नित्यं पणः परिमाणे । ( ३. ३. ६६ )

अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते , सोऽस्य विषयः । परिमाणे किम् । पाणः ।

अस्मिन्नेव ग्रन्थे श्लो० 3110. क्षीणपणा इव अर्थरहिता नरा इव । पण्यन्त इति पणाः । इह वित्तमात्रं लक्ष्यते ।

३२४४ । मदोऽनुपसर्गे । (३. ३. ६७)

धनमदः । उपसर्गे तून्मादः ।

३२४५ । प्रमदसम्मदौ हर्षे । ( ३. ३. ६८ )

हर्षे किम् । प्रमादः । सम्मादः ।

भट्टिकाव्ये—VII. 59.

ततस्ससम्मदास्तत्र निरैक्षन्त पतत्रिणः ।
गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ 3111 ॥

ससंमदाः सहर्षाः ।

अस्मिन्नेव ग्रन्थे श्लो० 647. आसादितसंमदं प्राप्तहर्षम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2042. संमदेन हर्षेण ।

३२४६ । समुदोरजः पशुषु । ( ३. ३. ६९ )

सम्पूर्वोऽजिस्समुदाये । उत्पूर्वश्च प्रेरणे । तस्मात्पशुविषयकादप् स्यात् । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 3111. समजेन बृन्देन पशूनिव निर्यातः । अप् ।

३२४७ । अक्षेषु ग्लहः । ( ३. ३. ७० )

अक्षशब्देन देवनं लक्ष्यते तत्र ग्रहणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते । अक्षस्य ग्लहः । 'व्यात्युक्षीमभिसरणग्लहामदीव्यन्' । अक्षेषु किम् । पादस्य ग्रहः । 'ग्रहवृ' ( सू. 3234 ) इत्यप् । अनेन ग्रहेरेवाक्षपणे लत्वनिपातः ।

भट्टिकाव्ये—VII. 60.

ग्लहमक्षेषु कुर्वाणान् छद्मना कितवानिव ।
मलिम्लुचानिवापश्यन् शकुन्तानागतान् गिरेः ॥ 3112 ॥

अक्षेषु पाचकेषु विषये छद्मना कपटेन ग्लहं पणं कुर्वाणान् । 'पणोऽक्षेषु ग्लहः' II. x. 45. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 317. व्यात्युक्षीमभिसरणग्लहामदीव्यन् ।

चम्पूभारते—III. 99.

ग्लहं निमग्नग्रहणेषु कल्पयन्
स्वयंग्रहालिङ्गसुखं यदूद्वहः ।
सवर्णवर्मा सलिले तटित्तनू-
स्सुखादगृह्णात्सुदृशस्तु ता न तम् ॥ 3113 ॥

स्वयंग्रहालिङ्गसुखं ग्लहं पणं कल्पयन् । अनेन लत्वनिपातः । अन्यत्र स्वयंग्रह इति कर्मण्यप् ।

३२४८ । प्रजने सर्तेः । (३. ३. ७१ )

प्रजनं प्रथमगर्भग्रहणम् । गवामुपसरः । कथमवसरः प्रसर इति । अधिकरणे 'पुंसि संज्ञायाम्' (सू. 3296) इति घः ।

भट्टिकाव्ये—VII. 61.

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपहवा गुहाम् ।
प्राविशन्नाह्वमज्ञा आहावमुपलिप्सवः ॥ 3114 ॥

वीनां पक्षिणामुपसरं नैरन्तर्येण निर्गमनं उपसर इवोपसरः । उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते । स च संभ्रमेण भवति । अप् ।

३२४९ । ह्वः सम्प्रसारणञ्च न्यभ्युपविषु । (३. ३. ७२)

निहवः । अभिहवः । उपहवः । विहवः । एषु किम् । प्रह्वाय. ।

अस्मिन्नेव ग्रन्थे श्लो० 3114. अन्योन्यमुपहव आह्वानमेषां ते अन्योन्योपहवाः । ह्वयतेरप् सम्प्रसारणञ्च ।

३२५० । आङि युद्धे । (३. ३. ७३)

आहूयन्तेऽस्मिन्निति आहवः । युद्धे किम् । आह्वायः ।

अस्मिन्नेव ग्रन्थे श्लो० 3114. आह्वायन्ते स्पर्धमाकारयन्त्यस्मिन्निति आहवो युद्धम् । अप् सम्प्रसारणञ्च ।

अस्मिन्नेव ग्रन्थे श्लो० 2777. महाहवाय । पूर्ववदप् सम्प्रसारणञ्च ।

चम्पूरामायणे—I. 47.

ग.—तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससंभ्रममभिलषिताहवाय राघवाय न्यवेदयन् ॥ 3115 ॥

आहवो युद्धम् । पूर्ववत् ।

चम्पूभारते—I. 33.

न ह्यतीव विधिरप्यसुतानां
नह्यते फलमिति श्रुतिसिद्धेः ।
जीवतो मम यथाहवसाध्यो
मीलतोऽपि न तथा परलोकः ॥ 3116 ॥

शत्रुजनः आहवेन युद्धेन साध्यो यथा भवति तथा मीलतः परलोकः स्वर्गादिः आहवेन ज्योतिष्टोमादियज्ञेन साध्यो न भवति । 'आहवः सङ्गरे यज्ञे आह्वानेऽपि' इति विश्वः । आह्वयन्त्याकारयन्त्यस्मिन्देवानिति आहवो यज्ञः । अधिकरणेऽप् ।

३२५१ । निपानमाहावः । (३. ३. ७४)

आङ्पूर्वस्य ह्वयतेस्सम्प्रसारणमब्वृद्धिश्चोदकाधारश्चेद्वाच्यः । 'आहावस्तु निपानं स्यादुपकूपजलाशये ' I. ix. 26. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 3114. आहावं निपानाख्यं जलाशयम् । निपातनात्साधुः ।

३२५२ । भावेऽनुपसर्गस्य । ( ३. ३. ७५ )

अनुपसर्गस्य ह्वयतेस्सम्प्रसारणमप् च स्याद्भावे । हवः ।

अस्मिन्नेव ग्रन्थे श्लो० 1966. आप्तानां हवमाह्वानम् । अप् सम्प्रसारणञ्च ।

३२५३ । हनश्च वधः । ( ३. ३. ७६ )

अनुपसर्गाद्धन्तेर्भावे अप् स्याद्वधादेशश्च । चाद्घञ् । घातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1966. पिपासाया वधो निवृत्तिः । अप् । वधादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 51. कृतघातयत्ना विहितवधोद्योगा । चाद्घञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 2653. वधेन ।

अस्मिन्नेव ग्रन्थे श्लो० 25. जनवधे ।

३२५४ । मूर्तौ घनः । ( ३. ३. ७७ )

मूर्तिः काठिन्यं तस्मिन्नभिधेये हन्तेरप्स्यात् । घनश्चादेशः । अभ्रघनः ।

अस्मिन्नेव ग्रन्थे श्लो० 1966. तमसो घनो मूर्तिः कठिनत्वम् । सङ्घात इति यावत् ।

३२५५ । अन्तर्घनो देशे । ( ३. ३. ७८ )

वाहीकग्रामविशेषस्य संज्ञेयम् । ' अन्तर्घण ' इति पाठान्तरम् ।

भट्टिकाव्ये—VII. 63.

तस्मिन्नन्तर्घनेऽपश्यन् प्रघणे सौधसद्मनः ।
लोहोद्धनघनस्कन्धा ललितापघनां स्त्रियम् ॥ 3117 ॥

तस्मिन् बिले अन्तर्हन्यते गम्यत इत्यन्तर्घनोऽन्तर्घणो वा । बाह्लिकेषु देश इति काशिका । अत्राभ्यन्तराश्रकाशमात्रं लक्ष्यते । अन्तःपूर्वाद्धन्तेरप् घनादेशः ।

३२५६ । अगारैकदेशे प्रघणः प्रघाणश्च । ( ३. ३. ७९ )

द्वारैकदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यत इति प्रघणः । प्रघाणः कर्मण्यप् । पक्षे वृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 3117. प्रघणोऽलिन्दे । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' II. ii. 13. इत्यमरः । प्रपूर्वाद्धन्तेरप्प्रत्ययान्तो निपातः ।

३२५७ । उद्घनोऽत्याधानम् । ( ३. ३. ८० )

अत्याधानमुपरि स्थापनम् । यस्मिन्काष्ठेऽन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् ।

अस्मिन्नेव ग्रन्थे श्लो० 3117. उद्धन्यतेऽस्मिन्नित्युद्घनो हन्यमानस्य तप्तायःपिण्डादेराधारभूतः अत्याधानाख्यो लोहकूटः । हन्तेरुत्पूर्वादप्प्रत्ययान्तो निपातः ।

३२५८ । अपघनोऽङ्गम् । ( ३. ३. ८१ )

अङ्गं शरीरावयवः । स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः । करणेऽप् ।

अस्मिन्नेव ग्रन्थे श्लो० 3117. ललितापघनाम् ।

३२५९ । करणेऽयोविद्रुषु । ( ३. ३. ८२ )

एषु हन्तेः करणेऽप्स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । 'पूर्वपदात्संज्ञायां' ( सू. 857 ) इति णत्वम् । संज्ञैषा कुठारस्य ।

अस्मिन्नेव ग्रन्थे श्लो० 635. अयो हन्यते एभिरित्ययोघनाः लोहघण्टाः । द्रुर्हन्यतेऽनेनेति द्रुघणः कुठारादिः । उभयत्रापि करणार्थे हन्तेरप्प्रत्ययो घनादेशश्च । अरीहणादिपाठात् 'पूर्वपदात्संज्ञायां' ( सू. 857) इति वा द्रुघण इति णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2101. विहन्यते तमस्तेजोऽन्तरं वानेनेति विघनः करणे अप् ।

३२६० । स्तम्बे क च । (३. ३. ८३)

स्तम्ब उपपदे हन्तेः करणे कः स्यात् । अप् च । पक्षे घनादेशश्च । स्तम्बघ्नः स्तम्बघनः । करण इत्येव । स्तम्बघातः ।

अस्मिन्नेव ग्रन्थे श्लो० 2101. स्तम्बा गुल्मा हन्यन्ते एभिरिति स्तम्बघ्नाः । स्तम्बोपपदाद्धन्तेः करणे कप्रत्ययः । 'गमहन' (सू. 2363) इत्यादिनोपधालोपः ।

३२६१ । परौ घः । (३. ३. ८४)

परौ हन्तेरप्स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः ।

अस्मिन्नेव ग्रन्थे श्लो० 2101. परिघोऽर्गला । अप् घादेशश्च ।

३२६३ । उपघ्न आश्रये । (३. ३. ८५)

उपपूर्वाद्धन्तेरप्स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यत इति पर्वतोपघ्नः ।

भट्टिकाव्ये—VII. 66.

पिप्रायाद्रिगुहोपघ्नानुद्धान्सङ्घश आगतान् ।
फलैर्नानाविधैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ 3118 ॥

अद्रिगुहोपघ्नान् तदाश्रयान् । हन्तेरप् उपधालोपश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 519. उपघ्नवृक्षस्य परोक्षभावात् ।

३२६४ । सङ्घोद्धौ गणप्रशंसयोः । (३. ३. ८६)

संहननं सङ्घः । भावे अप् । उद्धन्यते उत्कृष्टो ज्ञायत इत्युद्धः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने ।

अस्मिन्नेव ग्रन्थे श्लो० 3118. उद्धान् प्रशस्तान् । सङ्घशो गणशः । सम्पूर्वाद्धन्तेरप् घादेशश्च निपातितः ।

## ३२६५ । निघो निमितम् । ( ३. ३. ८७ )

समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1511. निघानिघतरुच्छन्ने निमितानिमिततरुच्छन्ने । समारोहपरिणाहाभ्यां निमितमित्युच्यते ।

## ३२६६ । ड्वितः क्त्रिः । ( ३. ३. ८८ )

अयं भाव एव स्वभावात् । 'क्त्रेर्मम् नित्यम्' ( सू. 1570 ) इति मप् । डु पचष् । पाकेन निर्वृत्तं पक्त्रिमम् । डु वप् । उप्त्रिमम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1511. लब्धिमैर्लाभनिर्वृत्तैः फलैः । क्त्रिः ।

अस्मिन्नेव ग्रन्थे श्लो० 256. विपाकेन निर्वृत्तं विपक्त्रिमम् परिपक्वम् । पचेः क्त्रिः । मप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1454. दत्त्रिमसभ्यतोषे । दानेन निर्वृत्तो दत्त्रिमः । विधानेन निर्वृत्ते विहित्त्रिमे । दाञो धाञश्च अनेन क्त्रौ प्रथमस्य 'दो दद्घोः' ( सू. 3077 ) इति ददादेशः । द्वितीयस्य 'दधातेर्हिः' ( सू. 3076 ) इति हिरादेशः । मप् ।

अस्मिन्नेव ग्रन्थे श्लो० 63. जनो मार्जालमपि कृत्रिमं क्रियानिर्वृत्तं मेने करोतेः क्त्रिः । मप्प्रत्ययः ।

## ३२६७ । ट्वितोऽथुच् । ( ३. ३. ८९ )

अयमपि स्वभावाद्भाव एव । टु वेपृ । वेपथुः । टु ओश्वि । श्वयथुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1511. भ्राजथुमतीं शोभावतीम् । टु भ्राजृ दीप्तौ । अथुच् । तदन्तान्मतुप् ।

भट्टिकाव्ये—IV. 43.

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तं वमथुं केचित् भ्राजथुं न च केचन ॥ 3119 ॥

वेपथुं कम्पम् । टु वेपृ कम्पने । दवथुं परितापम् । टु दु उपतापे । वमथुं वमनम् । टु वमु उद्गिरणे । भ्राजथुं दीप्तिम् । टु भ्राजृ दीप्तौ । सर्वत्राथुच् ।

भट्टिकाव्ये—V. 20.

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः ।
तल्पे कान्तान्तरैस्साधं मन्येऽहं धिङ् निमज्ञथुम् ॥ 3120 ॥

नन्दथुरानन्दः । टु नदि समृद्धौ । निमज्ञथुं निमज्जनम् । टु मस्जो शुद्धौ । उभयत्राथुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 681. त्रिस्फूर्जथुप्रख्यं वज्रघोषकल्पम् । 'स्फूर्जथुर्वज्रनिर्घोषः' I. ii. 10. इत्यमरः । टु ओ स्फूर्जा वज्रनिर्घोषे । अथुच् ।

माघे—XV. 62.

गुरु निश्वसन्नथ विलोलसदवथुवपुर्वचोविषम् ।
कीर्णदशनकिरणाग्निकणः फणवानिवैष विससर्ज चेदिपः ॥ 3121 ॥

विलोलं सदवथु ससन्तापं वपुर्यस्य स विलोलसदवथुवपुः । टु दु उपतापे । अथुच् ।

३२६८ । यजयाजयतविच्छप्रच्छरक्षो नङ् । ( ३. ३. ९० )

यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ।

भट्टिकाव्ये—VII. 68.

रक्ष्णं करोषि कस्मात्त्वं यत्नेनाख्याहि नः शुभे ।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः ॥ 3122 ॥

त्वं यत्नेन रक्ष्णं रक्षणं करोषि । यतिरक्षतिभ्यां भावे नङ्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 64. यत्नः । नङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 51. कृतघातयत्नाः विहितवधोद्योगाः । नङ् ।

### ३२६९ । स्वपो नन् । ( ३. ३. ९१ )

स्वप्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 3122. स्वप्ने स्वप्नावस्थायाम् ।

अस्मिन्नेव ग्रन्थे ग० 585. दुःस्वप्नबुद्धया । स्वप्नः कथमाप्नुयात् ।

### ३२७० । उपसर्गे घोः किः । ( ३. ३. ९२ )

प्रधिः अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः ।

अस्मिन्नेव ग्रन्थे श्लो० 3122. । निधिः । किः ।

अस्मिन्नेव ग्रन्थे श्लो० 2144. अन्तर्धा अन्तर्धानम् । अन्तःशब्दस्योपसर्गत्वात् 'आतश्चोपसर्गे' ( सू. 3283 ) इत्यङ् ।

अस्मिन्नेव ग्रन्थे ग० 1607. अधिराजस्य भावः कर्म वा आधिराज्यम् । ब्राह्मणादित्वात्ष्यञ् । तदेव पदमाधिराज्यपदम् । आधिश्च राज्यपदश्च आधिराज्यपदम् । तस्य द्वन्द्वैकवद्भावः । 'पुंस्याधिर्मानसी व्यथा' I. vi. 29. इत्यमरः । घोः किः ।

### ३२७१ । कर्मण्यधिकरणे च । ( ३. ३ ९३ )

कर्मण्युपपदे घोः किः स्यात् अधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः ।

अस्मिन्नेव ग्रन्थे श्लो० 506. ततो जलधिगम्भीरान् समुद्रगम्भीरान् । घोः किः ।

अस्मिन्नेव ग्रन्थे श्लो० 1518. बाणा धीयन्तेऽस्मिन्निति बाणधिः । घोः किः ।

अस्मिन्नेव ग्रन्थे श्लो० 1340. शिरो धीयतेऽस्मिन्निति शिरोधिर्ग्रीवा । 'शिरोधिः कन्धरा' II. vi. 88. इत्यमरः । किप्रत्ययः ।

किरातार्जुनीये—III. 57.

अविलंघ्य विकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम् ।
अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी ॥ 3123 ॥

इषवो धीयन्तेऽनयोरिति इषुधी । किः ।

अस्मिन्नेव ग्रन्थे श्लो० 1745. जलधिम् । पूर्ववत् ।

चम्पूरामायणे—VI. 15.

पश्येदानीमुदधिपरिघापालिता कुत्र लङ्का
वाचातीतः क्व नु वनचरादागतो दुर्विपाकः ।
कर्तुं नक्तञ्चरपरिभवं क्वापि मायेति शङ्के
जाता सीता धरणितनया जानकी मैथिलीति ॥ 3124 ॥

उदकानि धीयन्तेऽस्मिन्नित्युदधिः । घोः किः । 'उदकस्योदः संज्ञायां' (सू. 995) इत्युदकशब्दस्योदादेशः । समुद्रस्योदधिरिति संज्ञा । उदधिर्घट इत्यत्र पूर्ववत्किः । 'पेषंवासवाहनधिषु' (सू. 996) इत्युदादेशः । घटस्योदधिरिति संज्ञा न ।

३२७२ । स्त्रियां क्तिन् । (३. ३. ९४)

स्त्रीलिङ्गे भावादौ क्तिन्स्यात् । कृतिः । चितिः । स्तुतिः । स्फायी, स्फातिः । स्फीतिकाम इति तु प्रामादिकम् ।

वा० । श्रुयजीषिस्तुभ्यः करणे । (2211.)

श्रूयतेऽनया श्रुतिः । यजेरिषेश्च इष्टिः । स्तुतिः ।

वा० । चायतेः क्तिनि चिभावो वाच्यः । (4418.)

अपचितिः ।

वा० । सम्पदादिभ्यः क्विप् । (2233.)

सम्पत् । विपत् । 'क्तिन्नपीष्यते' । सम्पत्तिः । विपत्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 506. विश्वकर्मणः । कृद्योगात्कर्तरि षष्ठी । सृज्यत इति सृष्टिः । कर्मणि क्तिन् ।

अस्मिन्नेव ग्रन्थे श्लो० 164. अतिविख्यातिभृता । भावे क्तिन् ।

अस्मिन्नेव ग्रन्थे श्लो० 798. सम्पत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1018. कनिष्ठिनेयस्य कृते कार्यार्थम् । क्विप् । अव्ययमिति केचित् । सम्पदादिः—३. १२.

## ३२७३ । स्थागापापचो भावे । ( ३. ३. ९५ )

क्तिन्स्यात् । अङोऽपवादः । प्रस्थितिः । उपस्थितिः । संगीतिः । सम्पीतिः । पक्तिः । कथमवस्था संस्था इति । व्यवस्थायामिति ज्ञापकात् ।

भट्टिकाव्ये—VII. 70.

निहतश्च स्थितिं भिन्दन्दानवोऽसौ बलिद्रुहा ।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा ॥ 3125 ॥

स्थितिं मर्यादाम् । भावे क्तिन् । 'द्यतिस्यति' ( सू. 3074 ) इतीत्वम् ।

## ३२७४ । ऊतियूतिजूतिसातिहेतिकीर्तयश्च । ( ३. ३. ९७ )

अवतेः 'ज्वरत्वर' (सू. 2654) इत्यूठ् । ऊतिः । यूतिः । जूतिः । अनयोर्दीर्घत्वञ्च निपात्यते । स्यतेः सातिः । 'द्यतिस्यति' ( सू. 3074 ) इतीत्वे प्राप्ते इह इत्वाभावो निपात्यते । सनोतेर्वा । हन्तेर्हिनोतेर्वा हेतिः । कीर्तिः ।

भट्टिकाव्ये—VII. 71.

जूतिमिच्छथ चेत्तूर्णं कीर्तिं वा पातुमात्मनः ।
करोमि वो बहिर्यूतीन् पिधध्वं पाणिभिर्दृशः ॥ 3126 ॥

जूतिं बहिर्गतिम् । यूतिर्मिश्रणम् । जूतियूत्योर्जवतेर्यौतेश्च दीर्घनिपातः । कीर्तयतेः कीर्तिः ।

## ३२७५ । व्रजयजोर्भावे क्यप् । ( ३. ३. ९८ )

व्रज्या । इज्या ।

भट्टिकाव्ये—VII. 72.

व्रज्यावती निरुद्धाक्षान् विधेवानुष्ठितक्रियान् ।
निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ 3127 ॥

व्रज्यावती प्रशस्तगतिमती । भावे क्यप् । ततः प्रशंसायां मतुप् । ततो ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 539. इज्या यागः । भावे क्यप् ।

रघुवंशे— I. 68.

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ 3128 ॥

**इज्या** । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 510. **इज्या** ।

**३२७६ । संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । (३. ३. ९९)**

समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तस्संज्ञायाम् ।

**वा० । अजेः क्यपि वीभावो नेति वाच्यम् । ( 1596. )**

'अजेर्वी' (सू. 3292) इति वीभावो न । समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वसिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका ।

अस्मिन्नेव ग्रन्थे श्लो० 2405. **समज्या** गोष्ठी । पानगोष्ठीत्यर्थः । 'समज्या परिषद्गोष्ठी' II. vii. 15. इत्यमरः । क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2200. निषीदन्त्यास्विति **निषद्या आपणान्** । 'आपणास्तु निषद्यायां' II. ii. 2. इत्यमरः । **क्यप्** ।

अस्मिन्नेव ग्रन्थे श्लो० 1024. **मन्या** ग्रीवापृष्ठसिरा 'पश्चाद्ग्रीवासिरा मन्या' II. vi. 65. इत्यमरः । क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 3127. **विद्या** ।

अस्मिन्नेव ग्रन्थे श्लो० 1555. शेरतेऽस्यामिति **शय्या** । क्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1683. **कुमारभृत्या** बालचिकित्सा । क्यप् ।

**३२७७ । कृञः श च । ( ३. ३. १०० )**

कृञ इति योगविभागः । कृञः क्यप्स्यात् । कृत्या । 'श च' । चात्क्तिन् । क्रिया कृतिः ।

अस्मिन्नेव ग्रन्थे श्लो० 3127. अनुष्ठितक्रियान् कृतोचितव्यापारान् । क्रियां शप्रत्यये रिङादेशः ।

चम्पूरामायणे—I. 9

ग.—एतौ मुनिः परिगृह्य स्वां कृतिं अपाठयत् ॥ 3129 ॥

चम्पूरामायणे—I. 7.

वाणीविलासमपरत्र कृतोपलम्भ-
मम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-
व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥ 3130 ॥

३२७८ । इच्छा । (३. ३. १०१)

इषेर्भावे शो यगभावश्च निपात्यते । इच्छा ।

वा० । परिचर्यापरिसर्यामृगयाटाटयानामुपसंख्यानम् । (2215.)

शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि । मृग अन्वेषणे । चुरादावदन्तः । अतो लोपाभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि टयशब्दस्य द्वित्वम् । पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । अटाटया ।

वा० । जागर्तेरकारो वा । (2216.)

पक्षे शः । जागरा जागर्या ।

अस्मिन्नेव ग्रन्थे श्लो० 2480. इच्छा मे । 'सूचिसूत्रि' (सू. 2630) इति यङि अटाट्यते । 'अ प्रत्ययात्' (सू. 3279) इत्यकारप्रत्यये अतष्टापि अटाटा । अतो लोपः । 'यस्य हलः' (सू. 2631) इति यलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 3127. इच्छातः । शप्रत्यये यगभावो निपातितः ।

३२७९ । अ प्रत्ययात् । (३. ३. १०२)

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ।

अस्मिन्नेव ग्रन्थे श्लो० 610. द्रष्टुमिच्छा दिदृक्षा । दृशेस्सन्नन्तात् स्त्रियामप्रत्यये टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 589. पुत्रकाम्या आत्मनः पुत्रेच्छा । पुत्रशब्दात्काम्यजन्तादप्रत्यये स्त्रियां टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1413. रोरुदा भृशं रोदनम् । रुदेर्यङन्तादप्रत्यये टाप् । अतो लोपः । 'यस्य हलः' (सू. 2631) इति यलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 1929. कुटिलं क्रमणं गतिश्चङ्क्रमा। 'नित्यं कौटिल्ये गतौ' (सू. 2634) इति यङि अप्रत्यये टाप् । अल्लोपयलोपौ ।

अस्मिन्नेव ग्रन्थे श्लो० 2264. वरिवस्यया शुश्रूषया । 'वरिवस्या तु शुश्रूषा' II. vii. 35 इत्यमरः । 'नमोवरिवश्चित्रङः' (सू. 2675) इति क्यचि अकारप्रत्यये टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 2141. च्युताशनायाः निवृत्तक्षुधः । उदन्यां पिपासाम् । 'अशनायोदन्या' (सू 2661) इति क्यचि अप्रत्यये टाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1923. परिसेसिचाम् ।

**३२८० । गुरोश्च हलः । (३. ३. १०३)**

गुरुमतो हलन्तात्स्त्रियामकारः स्यात् । ईहा । ऊहा ।

भट्टिकाव्ये—III. 5.

उक्षान् प्रचक्रुर्नगरस्य मार्गान्
ध्वजान्बबन्धुर्मुमुचुः खधूपान् ।
दिशश्च पुष्पैश्चकरुर्विचित्रै-
रर्थेषु राज्ञा निपुणा नियुक्ताः ॥ 3131 ॥

नगरस्य मार्गानुक्षान्सेकवतः प्रचक्रुः । उक्षणमुक्षा । अनेनाकारः । स विद्यते एषामिति अर्शआद्यच् । 'इजादेश्च गुरुमतः' (सू. 2237) इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते । 'कृञ्चानुप्रयुज्यते' (सू. 2239) इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् इति जयमङ्गलव्याख्या । उक्षांप्रचक्रुरिति पाठः । नगरस्य मार्गानुक्षांप्रचक्रुः धूलिप्रशमनार्थं निषिषिचुः । उक्ष सेचने । लिट् । 'इजादेश्च'

( सू. 2237 ) इत्याम्प्रत्यये कृञोऽनुप्रयोगः । व्यवहितप्रयोगस्यासाधुत्वेऽपि उक्षाञ्चकुरित्यत्रानुप्रयोगावदुपसर्गाणामपि 'ते प्राग्धातोः' ( सू. 2230 ) इति व्यवहितप्रयोगनियमान्नासाधुत्वम् इति मल्लिनाथव्याख्या ।

भट्टिकाव्ये—VII. 73.

निष्क्रम्य शिक्षया तस्याः त्रपावन्तो रसातलात् ।
ज्ञात्वा कालमतिक्रान्तं व्यथामवलम्बिरे ॥ 3132 ॥

शिक्षया उपदेशेन ।

३२८१ । षिद्भिदादिभ्योऽङ् । ( ३. ३. १०४ )

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जॄष्, जरा । त्रपूष्, त्रपा । भिदा । छिदा । मृजा ।

( ग. सू. ) । कृपेस्संप्रसारणञ्च । 32.

कृपा । भिदादिः—३. ११.

रघुवंशे—I. 22.

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ 3133 ॥

क्षमा । 'क्षमूष् सहने' इति षित्करणादनेनाङ् ।

रघुवंशे—I. 23.

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना ॥ 3134 ॥

जरसा जरया । जॄष् वयोहानौ । पूर्ववदङ् । 'जरायाः' ( सू. 227 ) इति विकल्पाज्जरसादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 3132. त्रपावन्तः । त्रपूष् इति षित्वादङ् । ततो मतुप् । व्यथां भयम् । भिदादित्वादङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1046. स्फूर्जावान् । भिदाद्यङ् । ततो मतुप् ।

३२८२ । चिन्तिपूजिकथिकुम्बिचर्चश्च । ( ३. ३. १०५ )

अङ् स्यात् । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ।

चम्पूरामायणे—V. 9.

ग.—तदनु पारावारस्य पारे लम्बशिखरिणि लम्बमानः प्रतनुतरवपुर्लङ्का-पुरोत्तरगोपुरद्वारमासाद्य नितान्तचिन्तातन्तुसन्तानसन्दानितान्तःकरणोऽभूत् ॥ 3135 ॥

चिन्ता । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1755. कथाभिः ।

भट्टिकाव्ये—VII. 74.

चिन्तावन्तः कथां चक्रुरुपधाभेदभीरवः ।
अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथम् ॥ 3136 ॥

चिन्तावन्तः कथं पूजां संमानं लप्स्यामह इति कथां चक्रुः । सर्वत्राङ् ।

माघे—II. 40.

आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् ।
कथापि खलु पापानामलमश्रेयसे यतः ॥ 3137 ॥

कथा कथनम् । अङ् ।

३२८३ । आतश्चोपसर्गे । ( ३. ३. १०६ )

अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा ।

वा० । श्रदन्तरोरुपसर्गवद्वृत्तिः । ( 1131, 1147. )

श्रद्धा । अन्तर्धा ।

अस्मिन्नेव ग्रन्थे श्लो० 3136. उपधा सम्यक् परीक्षा । 'उपधा सुपरीक्षापि' इति यादवः । स्त्रियां भावे ।

अस्मिन्नेव ग्रन्थे श्लो० 1851. संस्था संस्थितिः । अङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 878. उपज्ञायत इत्युपज्ञा । अन्येनाङ् । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम् । कृद्योगे षष्ठीसमासे 'उपज्ञोपक्रमं' (सू. 824) इति नपुंसकत्वम् ।

३२८४ । ण्यासश्रन्थो युच् । ( ३. ३. १०७ )

अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ।

वा० । घट्टिवन्दिविदिभ्यश्चेति वाच्यम् । ( 2222. )

घट्टना । वन्दना । वेदना ।

वा० । इषेरनिच्छार्थस्य । ( 2223. )

अन्वेषणा ।

वा० । परेर्वा । ( 2224. )

पर्येषणा परीष्टिः ।

अस्मिन्नेव ग्रन्थे श्लो० 3074. वाहना निर्वाहयितृत्वम् । वहतेर्ण्यन्ताद्युच् ।

अस्मिन्नेव ग्रन्थे श्लो० 683. परिचयस्थैर्ये हेतुर्गुणानिका आम्रेडनम् । 'गुण आम्रेडने' इत्यस्मात् चौरादिकात् युच् । ततः संज्ञायां कन् । 'प्रत्ययस्थात्कात्पूर्वस्य' (सू. 463) इतीकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 502. भरतोपज्ञं विज्ञापना । विपूर्वाज्जानातेर्ण्यन्ताद्युच् ।

नैषधे—IV. 53.

मुखरयस्व यशो नवडिण्डिमं
  जलनिधेः कुलमुज्ज्वलयाधुना ।
अपि गृहाण वधूवधपौरुषं
  हरिणलाञ्छन मुञ्च कदर्थनाम् ॥ 3138 ॥

कुत्सितोऽर्थः कदर्थः पीडाकरः । 'कोः कत्' (सू. 1027) इति कुशब्दस्य कदादेशः । कदर्थीकरणं कदर्थना । कदर्थशब्दात् तत्करोतीति ण्यन्ताद्युच् ।

नैषधे — VI. 78.

सलीलमालिङ्गनयोपपीड-
मनामयं पृच्छति वासवस्त्वाम् ।
शेषस्त्वदाश्लेषकथाविनिद्रै-
स्तद्रोमभिस्सन्दिदिशे भवत्यै ॥ 3139 ॥

आलिङ्गनया आलिङ्गनेन । आङ्पूर्वाल्लिङ्गयतेश्चौरादिकाद्युच् ।

नैषधे—I. 34.

उपासनामेत्य पितुः स्म रज्यते
दिने दिने सावसरेषु वन्दिनाम् ।
पठत्सु तेषु प्रतिभूपती नलं
विनिद्ररोमाजनि शृण्वती नलम् ॥ 3140 ॥

उपासनां सेवाम् । उपपूर्वादास उपवेशने इत्यस्मात् युच् ।

भट्टिकाव्ये—VII. 75.

प्रायोपासनया शान्तिं मन्वानो वालिसम्भवः ।
युक्ता योगं स्थितश्शैले विवृण्वंश्चित्तवेदनाम् ॥ 3141 ॥

प्रायोपासनया प्रायोपवेशनेन । उपपूर्वादासेर्युच् । चित्तवेदनां मनोव्यथाम् ।
'घट्टिवन्दि' (वा. 2222. सू. 3284.) इति विदेर्युच् ।
अस्मिन्नेव ग्रन्थे श्लो० 1859. व्याघट्टना सङ्घर्षणम् । पूर्ववद्युच् ।

चम्पूरामायणे—IV. 21.

आर्यार्यान्वेषणा कार्या शरदीत्युक्तसंविदा ।
कपीन्द्रेणार्थितो रामः किष्किन्धावर्तनं प्रति ॥ 3142 ॥

अन्वेषणा । इषेर्युच् ।

३२८५ । रोगाख्यायां ण्वुल् बहुलम् । (३. ३. १०८)

प्रच्छर्दिका । प्रवाहिका । विचर्चिका ।

वा० । धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । ( 2225. )

आसिका । शायिका ।

वा० । वर्णात्कारः । ( 2227. )

अकारः । ककारः ।

वा० । रादिफः । ( 2228. )

रेफः ।

वा० । मत्वर्थाच्छः । ( 2229. )

मत्वर्थीयः ।

वा० । इणजादिभ्यः । ( 2230. )

आजिः आतिः ।

वा० । इञ्वपादिभ्यः । ( 2231. )

वापिः । वासिः ।

वा० । इक्कृष्यादिभ्यः । ( 2232. )

कृषिः । गिरिः ।

अस्मिन्नेव ग्रन्थे श्लो० 719. प्रस्कन्दिका रोगविशेषम् । स्कन्देः प्रपूर्वाद्रोगाख्यायां स्त्रियां ण्वुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 1201. वाहिका रणभारोद्वहनम् । 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' इति ण्वुल् ।

चम्पूभारते—IV. 70.

शबरत्वजुषः परस्य पुंसः शशिखण्डान्नु शकारसंविधानम् ।
भजति स्म तदा शिखण्डभावं भगवन्मस्तकभूषणं यदेषः ॥ 3143 ॥

शकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 1218. कृषीवलाः कर्षकाः । 'रजः कृषि' (सू. 1919) इति मत्वर्थीयो वलच् । 'वले' (सू. 1040) इति पूर्वस्य दीर्घः ।

३२८६ । संज्ञायाम् । (३. ३. १०९)

अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका ।

अस्मिन्नेव ग्रन्थे श्लो० 719. सालभञ्जिकाः दारुदन्तवस्त्रादिनिर्मिताः क्रीडासाधनभूताः पुत्रिकाः । अनेन ण्वुल् । 'नित्यं क्रीडाजीविकयोः' (सू. 711.) इति समासः ।

३२८७ । विभाषाख्यानपरिप्रश्नयोरिञ्च । (३. ३. ११०)

परिप्रश्न आख्याने च गम्य इञ्स्यात् । चाण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षीः । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षम् । एवं गणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् । इज्यां इष्टिम् ।

भट्टिकाव्ये—VII. 77.

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियाम् ।
अहमप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ 3144 ॥

अयं राजपुत्रो यां कारिं अनुतिष्ठति तां क्रियामहमप्यनुतिष्ठामि । करोतेरिञ् । पक्षे 'कृञश्च' (सू. 3277) इति शः ।

३२८८ । पर्यायार्हर्णोत्पत्तिषु ण्वुच् । (३. ३. १११)

पर्यायः परिपाटी क्रमः । अर्हणमर्हः योग्यता । पर्यायादिषु द्योत्येषु ण्वुज्वा स्यात् । भवत आसिका । शायिका । अग्रगामिका । भवानिक्षुभक्षिकामर्हति । इक्षु-भक्षिका उदपादि ।

भट्टिकाव्ये—VII. 78.

उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान् ।
अहं पर्यायसंप्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ 3145 ॥

पर्यायसम्प्राप्तां प्रायोपवेशिकां प्रायोपवेशनं पर्यायार्थे ण्वुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 505. हे मैथिलि ! तवोपशायिका परिपाट्या शयनम् । पूर्ववत् ण्वुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 718. पक्षभारिकाः पक्षभरणानि । अर्हणार्थे ण्वुच् ।

## ३२८९ । आक्रोशे नञ्यनिः । (३. ३. ११२)

नञ्युपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् ।

भट्टिकाव्ये—VII. 79.

> अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः ।
> इत्युक्त्वा सर्व एवास्थुर्बद्ध्वा योगासनानि ते ॥ 3146 ॥

यो जीवेत्तस्य अजीवनिरस्तु अजीवनमेवास्तु । धिक् तस्य जीवनमिति भावः । आक्रोशे जीवेरनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 2740. यो दुःखदग्धोऽपि जीवति तस्याजननिरनुत्पत्तिरेवास्तु । नञ्पूर्वाज्जनिधातोरनिप्रत्ययः ।

## ३२९० । ल्युट् च । (३. ३. ११५)

हसितं हसनम् । योगविभाग उत्तरार्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2491. प्रपतनं शरीरपातम् । भावे ल्युट् ।

अस्मिन्नेव ग्रन्थे श्लो० 2494. मन्दगतो मन्दगमनः । भावे क्तः । न शोभत इत्यशोभनः अमङ्गलरूपः । 'कृत्यल्युटो बहुलं' (सू. 284) इति कर्तरि ल्युट् । प्रायोपवेशनं मरणव्रतम् । अनेन ल्युट् ।

## ३२९१ । कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् । (३. ३. ११६)

कर्मोपपदात् भावे ल्युट् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2494. पयःपानं क्षीरपानमिव भक्ष्यलाभात् । तद्वच्छरीरसुखकरमित्यर्थः । कर्मोपपदात् पिबतेः भावे ल्युट् ।

३२९३ । करणाधिकरणयोश्च । ( ३. ३. ११७ )

ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक् करणाधिकरणयोरित्यधिकारः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 703. वृश्च्यते भिद्यतेऽनेनेति व्रश्चनम् । करणे ल्युट् । 'कर्तृकर्मणोः कृति' ( सू. 623 ) इति कर्मणि देहस्येति षष्ठी । 'कृद्योगा च' (सू. 703 ) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1595. तर्पणम् तृप्तिकरणम् । करणे ल्युट् । तर्पयतीति तर्पणम् । 'कृत्यल्युटो बहुलम्' (सू. 2841) इति कर्तरि ल्युडिति जयमङ्गलव्याख्या ।

अस्मिन्नेव ग्रन्थे श्लो॰ 40. पितॄणां तर्पणीः तृप्तिकरीरपः । पूर्ववल्ल्युट् । टित्वात्स्त्रियां ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 42. धीयन्तेऽस्यामिति धानी । राज्ञां धानी राजधानी । अधिकरणे ल्युट् । टित्वान्ङीप् ।

माघे—IV. 12.

अविद्यतासन्नमुदग्रतापं रविं दधानेऽप्यरविन्दधाने ।
भृङ्गावलिर्यस्य तटे निपीतरसानमत्तामरसा न मत्ता ॥ 3147 ॥

धीयन्तेऽस्मिन्निति धानम् । अधिकरणे ल्युट् । अरविन्दानां धानमिति समासः । ल्युट् ।

३२९४ । अन्तरदेशे । ( ८. ४. २४ )

अन्तरशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः ।

भट्टिकाव्ये—IX. 103.

वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।
मा कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुम् ॥ 3148 ॥

वेश्मान्तः गृहमध्ये हननं वेश्मान्तर्हणनम् । नकारस्य णत्वम् ।

३२९५ । अयनं च । (८. ४. २५)

अयनस्य णोऽन्तरशब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः ।

अस्मिन्नेव ग्रन्थे श्लो० 3148. अन्तरयणं विघातमन्तरायम् ।

३२९६ । पुंसि संज्ञायां घः प्रायेण । (३. ३ ११८)

आकुर्वन्त्यस्मिन् आकरः ।

अस्मिन्नेव ग्रन्थे श्लो० 703 अशुभाकरं अमङ्गलालयम् । घः ।

किरातार्जुनीये—VII. 40.

शाखावसक्तकमनीयपरिच्छदाना-
मध्वश्रमातुरवधूजनसेवितानाम् ।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥ 3149 ॥

परिच्छाद्यतेऽनेनेति परिच्छदः परिकरो वसनाभरणादिः । अनेन घः । 'छादेर्घेऽद्व्युपसर्गस्य' (सू. 3297) इति ह्रस्वत्वम् ।

भट्टिकाव्ये—V. 19.

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा ।
संशृणोति न चोक्तानि मिथ्यासौ विहितेन्द्रियः ॥ 3150 ॥

छाद्यतेऽनेनेति छदः । दन्तानां छदो दन्तच्छदोऽधरः । पूर्ववद्धः । ह्रस्वः ।

३२९८ । गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च । (३. ३. ११९)

घान्ता निपात्यन्ते । 'हलश्च (सू. 3300) इति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । सञ्चरन्त्यनेन सञ्चरो मार्गः । वहन्त्यनेन वहः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः । निकषः ।

अस्मिन्नेव ग्रन्थे श्लो० 703. पापगोचरं पापाश्रयम् । अधिकरणे निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 2678. सञ्चरन्त्यस्मिन्निति सञ्चरः सञ्चारस्थानम् । अधिकरणार्थे घान्तो निपातः । दण्डकारण्यं सञ्चरो यस्येति दण्डकारण्यसञ्चरः ।

अस्मिन्नेव ग्रन्थे श्लो० 186. सदसद्वेति संशयगोचरः सन्देहास्पदं उदरं यस्यास्सा सदसत्संशयगोचरोदरी । 'नासिकोदर' (सू. 511) इत्यादिना ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 52. परेषां ग्रहणस्याक्रमणस्य न गोचरा अविषया या नगरी । स्त्रीलिङ्गश्चिन्त्यः । 'नाम्न्यकर्तरि भावे च घञजञ्नङ्णघाथुचः' III.v.15. इति पुलिङ्गशेषे नामलिङ्गानुशासनात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1049. अवाङ्मनसगोचरम् ।

रघुवंशे—XVI. 12.

निशासु भास्वत्कलनूपुराणां यस्सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥3151॥

सञ्चरन्तेऽनेनेति सञ्चरः सञ्चारसाधनं राजपथः । घप्रत्ययान्तो निपातः ।

भट्टिकाव्ये—XIII. 12.

गन्तुं लङ्कातीरं बद्धमहासलिलसञ्चरेण सहेलम् ।
तरुहरिणा गिरिजालं वहन्तु गिरिभारसंसहा गुरुदेहम् ॥ 3152 ॥

बद्धो घटितो महासलिले यः सञ्चरः तेन सेतुना ।

अस्मिन्नेव ग्रन्थे श्लो० 1941. मध्यमयष्टिरपि दृष्टिगोचरा ।

## ३२९९ । अवे तृस्त्रोर्घञ् । (३. ३. १२०)

अवतारः कूपादेः । अवस्तारो जवनिका ।

भट्टिकाव्ये—VII. 84.

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः ।
अचेष्टा यदिहान्यायादनेनास्स्यामहे वयम् ॥ 3153 ॥

अस्माकमयं प्रत्यक्षो नरकस्यावतारोऽवतरणमार्गः । करणे घञ् ।

चम्पूभारते— III. 30.

ग.—तत्र तस्य हिमाचलस्य कन्दुपुटनिर्गच्छदम्भःकणिकाभिरवतार-पथैरपि रोमन्थफेनकल्कतारकितैः प्रतीरमुखैरुदलोपवेशैरप्यनुमेयहरणमार्गेषु निम्नगानु कटकसरणीषु वृजिनानि विशोध्य वनवराहकलभविदलिततरुस्कन्धभवकुसुमस्तबककलुषित-लेनोपत्यकावर्त्मना दिवि भुवि भरणकुशलाभ्यां हस्ताभ्यां परिगृहीतो हरिरवजगाहे ॥ 3154 ॥

अवतारपथैरवरोहणमार्गैः ।

अस्मिन्नेव ग्रन्थे श्लो० 32. अवतर इत्यत्र 'ऋदोरप्' (सू. 3232) इति अप्प्रत्ययः । तेन तरशब्देनावशब्दस्य सुप्सुपेति समासः । न तूपसृष्टात्तरस्योत्पत्तिः । तदा 'अवे तॄ' (सू. 3299) इति घञ् स्यात् । सति तु तस्मिन् अवतार इति स्यात् इति व्याख्या । वस्तुतस्तु अवतरतीत्यवतरः । कर्तरि पचाद्यच् । तरतेः पचादिषु स्थितत्वात् ।

## ३३०० । हलश्च । (३. ३. १२१)

घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरि-त्यपामार्गः ।

## ३३०१ । अध्यायन्यायोद्यावसंहाराश्च । (३. ३. १२२)

अधीयतेऽस्मिन्नित्यध्यायः । नियन्त्युद्युवन्ति संहरन्त्यनेनेति विग्रहः ।

### वा० । अवहाराधारावायानामुपसंख्यानम् । (2236.)

अस्मिन्नेव ग्रन्थे श्लो० 3153. अन्यायात् । नीयतेऽनेनेति न्यायः । निपूर्वादिणः करणे घञन्तो निपातः । न न्यायः अन्यायस्तस्मात् ।

## ३३०२ । उदङ्कोऽनुदके । (३. ३. १२३)

उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके । घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्क-श्चर्ममयं भाण्डं । अनुदके किम् । उदकोदञ्चनः ।

भट्टिकाव्ये—VII. 85.

हृदयोदङ्कसंस्थानं कृतान्तानायसंनिभम् ।
शरीराखनतुण्डाग्रं प्राप्यामुं शर्म दुर्लभम् ॥ 3155 ॥

उदञ्चयते आकृष्यतेऽनेनेत्युदङ्कः उद्धरणी । करणे घञन्तो निपातः ।

३३०३ । जालमानायः । (३. ३. १२४)

आनीयन्ते मत्स्यादयोऽनेनेत्यानायः ।

अस्मिन्नेव ग्रन्थे श्लो० 3155. आनीयते आकृष्यतेऽनेनेत्यानायः जालं जलजन्तुबन्धनम् । 'आनायः पुंसि जालं स्यात्' I. ix. 16. इत्यमरः । आङ्पूर्वान्नयतेः करणे घञन्तो निपातः ।

रघुवंशे—XVI. 55.

स तीरभूमौ विहितोपकार्या-
मानायिभिस्तामपकृष्टनक्राम् ।
विगाहितुं श्रीमहिमानुरूपं
प्रचक्रमे चक्रधरप्रभावः ॥ 3156 ॥

स कुशः आनायो जालमेषामस्तीति आनायिनो जालिकाः । तैरपकृष्टनक्रां तां सरयूं विगाहितुं प्रचक्रमे ।

३३०४ । खनो घ च । (३. ३. १२५)

चाद्धञ् । आखनः आखानः ।

वा० । खनेर्डडरेकेकवका वाच्याः । (2238.)

आखः आखरः आखनिकः आखनिकबकः । एते खनित्रवचनाः ।

अस्मिन्नेव ग्रन्थे श्लो० 3155. आखन्यतेऽनेनेत्याखनः । करणे घः ।

३३०५ । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् । (३. ३. १२६)

करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । 'तयोरेव' (सू. 2833) इति भावे कर्मणि च । कृच्छ्रे, दुष्करः कटो भवता । अकृच्छ्रे, ईषत्करः सुकरः ।

वा० । निमिमीलियां खलचोरात्वं नेति वाच्यम् । (3487.)

ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः ।

अनर्घराघवे—III, 33.

उत्पादयन्क्रमपि कौणपकोटिहोमं
तेजोहुताशनसमिन्धनसामिधेनीम् ।
यस्ताटकामकृत बालसखैः पृषत्कै-
रीषज्जयः स्फुटमनेन दशाननोऽपि ॥ 3157 ॥

अनेन रामेण दशाननोऽपि ईषज्जयोऽकृच्छ्रजयः सुजय इति यावत् । कर्मण्यकृच्छ्रार्थे खल् ।

अस्मिन्नेव ग्रन्थे श्लो० 147. सङ्घर्षिणा मत्सरिणा कर्त्रा । गुणाभ्यधिकैः सह दुरासम् । आसितुमशक्यमित्यर्थः । आसेरकर्मकाद्भावे खल् । 'तयोरेव कृत्यक्तखलर्थाः' (सू. 2833) इति नियमात् ।

अस्मिन्नेव ग्रन्थे श्लो० 2075. दुःखेन हन्यत इति दुर्हणो निकुम्भे । कर्मणि कृच्छ्रार्थे खल् ।

अनर्घराघवे—IV. 16.

ग.—परन्त्वनेनापि सकलमूर्धाभिषिक्तकण्ठकाण्डरुधिरावसेकपङ्किलकुठारेण दुरभिभवो दाशरथिः ॥ 3158 ॥

पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 999. द्विषां भङ्गस्सुलभः । कर्मण्यकृच्छ्रार्थे खल् । दुर्लभा सत्स्ववाच्यता । कर्मणि कृच्छ्रार्थे खल् ।

अस्मिन्नेव ग्रन्थे श्लो० 550. बलिः वैरोचनिः । स्वर्गभर्तुरिन्द्रस्य सुखेन बध्यत इति सुबन्धः तत्तामगमत् । कर्मण्यकृच्छ्रार्थे खल् । 'न लोक' (सू. 627) इत्यादिना कृद्योगषष्ठ्या एव निषेधात् स्वर्गभर्तुरिति शेषषष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 3155. शर्म दुर्लभम् ।

### ३३०६ । उपसर्गात्खल्घञोः । ( ७. १. ६७ )

उपसर्गादेव लभेर्नुम्स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । घञ् । उपालम्भः । उपसर्गात्किम् । ईषल्लभः । लाभः ।

### ३३०७ । न सुदुर्भ्यां केवलाभ्याम् । ( ७. १. ६८ )

उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्यां किम् । सुप्रलम्भः ।

अस्मिन्नेव ग्रन्थे श्लो० 3155. शर्म दुर्लभं । 'उपसर्गात्खल्घञोः' (सू. 3306) इति प्राप्तस्य नुमः अनेन प्रतिषेधः ।

### ३३०८ । कर्तृकर्मणोश्च भूकृञोः । ( ३. ३. १२७ )

कर्तृकर्मणोरीषदादिषूपपदेषु भूकृञोः खल् स्यात् । यथासंख्यं नेष्यते । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये । ईषदादयस्तु ततः प्राक् ।

वा० । कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् । ( 2241. )

खित्त्वान्मुम् । अनाढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करः ।

अस्मिन्नेव ग्रन्थे श्लो० 1894. सुराजम्भवं सुखेन राज्ञा भूयते । कर्तरि ईषदादौ चोपपदे भवतेः खल्प्रत्ययेन लोपमुमागमौ ।

भट्टिकाव्ये—VII. 86.

ईषदाढ्यङ्करोऽप्येष न परत्राशुभक्रियः ।
अस्मानत्तुमितोऽभ्येति परिग्लानो बुभुक्षया ॥ 3259 ॥

एष वानरगणः परत्राप्यकृच्छ्रेण सुखेनानाढ्य आढ्यः कृतो विधात्रा ईषदाढ्यङ्करो न । इह तावदास्तां दैवेन परत्रापि सुखभाङ् न कृत इत्यर्थः । करोतेः कर्मणि ईषदादौ चोपपदे खल्प्रत्ययः ।

३३०९ । आतो युच् । ( ३. ३. १२८ )

खलोऽपवादः । ईषत्पान सोमो भवता । दुष्पानः ।

वा० । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः । ( 2243. )
दुःशासनः दुर्योधन इत्यादि ।

भट्टिकाव्ये—VII. 87.

संप्राप्य वानरान्पक्षी जगाद मधुरं वचः ।
के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्धनि ॥ 3160 ॥

दुरुपस्थाने दुःखेनोपस्थातुं शक्ये गिरिमूर्धनि । आतो युच् । तत्रापि ईषदादयोऽनुवर्तन्ते । कर्तृकर्मणोरिति न स्मर्यते ।

भट्टिकाव्ये—V. 32.

अन्तर्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर ।
सो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ 3161 ॥

रामो रणे दुरुपस्थानो दुःखेनोपस्थीयते उपगम्यत इति दुरुपस्थानः । आतो युच् ।

अनर्घराघवे—VII. 15.

जरयतु जगत्कल्पोच्छित्तौ पिपर्तु पयोधरान्
वहतु बडबावक्त्रज्योतिर्दधातु सुधाभुजः ।
भवतु वपुषा यावांस्तावानगस्त्यरुषा पुन-
र्विधिरयमपामीषत्पानस्तपांसि नमोऽस्तु वः ॥ 3162 ॥

अयमपांनिधिः अगस्त्यरुषा ईषत्पानः ।

किरातार्जुनीये—II. 8.

द्विषतामुदयस्सुमेधसा गुरुरस्वन्ततरस्सुमर्षणः ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥ 3163 ॥

सुमेधसा द्विषतामुदयो वृद्धिः सुखेन मृष्यत इति सुमर्षणः सुसहः । 'भाषायां शासि' इत्यादिना खलर्थे युच् ।

३३१० । षात्पदान्तात् । (८. ४. ३५)

नस्य णो न । निष्पानं सर्पिष्पानम् । षात्किम् । निर्णयः । पदान्तात्किम् । पुष्णाति ।

**३३११ । आवश्यकाधमर्ण्ययोर्णिनिः । (३. ३. १७०)**

अवश्यंकारी । शतंदायी ।

अस्मिन्नेव ग्रन्थे श्लो० 571. इहैकग्राहि । दिवि कोटिगुणितं दायि दातृ । आधमर्ण्ये णिनिः । षष्ठीप्रतिषेधाद् द्वितीया ।

३३१२ । कृत्याश्च । (३. ३. १७१)

आवश्यकाधमर्ण्ययोरित्येव । अवश्यं हरिस्सेव्यः । शतं देयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2481. द्रष्टव्यमवश्यं दर्शनीयम् ।

**३३१६ । अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा । (३. ४. १८)**

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् । अलं दत्वा । पीत्वा खलु ।

अस्मिन्नेव ग्रन्थे श्लो० 3137. इदं दारापहरणं आलप्यालम् । नालपनीयमित्यर्थः । क्त्वाप्रत्ययः । समासे ल्यबादेशः । कथापि अश्रेयसे अलं शक्तम् । 'नमःस्वस्ति' (सू० 583) इत्यादिना चतुर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 1907. लेख्येन पत्रेण अर्थे वाच्ये निर्धारिते सति वाचिकं व्याहतार्थां वाचं खलूक्त्वा खलु । न वाच्यमित्यर्थः । खलुशब्दः प्रतिषेधे । अन्यो वाक्यालङ्कारे ।

अस्मिन्नेव ग्रन्थे श्लो० 2708. गुरुं क्लिशित्वालं वृथा । गुरुर्न क्लेशनीय इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2322. अलमिष्ट्वा मखान्मूर्खाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1960. रुषं प्रणियातुं प्राप्तुमलम् । रोषो न कर्तव्य इत्यर्थः । क्त्वाप्रत्ययविषये तुमुन्प्रयोगो देशविभाषानुसारात्कृतः ।

अस्मिन्नेव ग्रन्थे श्लो० 3071. अचलाधिपः अंहसां संहतिं निहन्तुमलं समर्थः । 'पर्याप्तिवचनेष्वलमर्थेषु' (सू. 3178) इति तुमुन् ।

३३२० । समानकर्तृकयोः पूर्वकाले । (३. ४. २१)

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति ।

३३२१ । क्त्वि स्कन्दिस्यन्दोः । (६. ४. ३१)

एतयोर्नलोपो न स्यात् क्त्वि परे । स्कन्त्वा । ऊदित्त्वादिड्वा । स्यन्त्वा स्यन्दित्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 1936. गङ्गा दिवः स्यन्त्वास्यन्त्वा सुत्वासुत्वा । 'आभीक्ष्ण्ये णमुल् च' (सू. 3343) इति चकारात् क्त्वा । शम्भोर्मूर्ध्नि स्कन्त्वा गत्वा । अनुनासिकलोपप्रतिषेधः ।

३३२२ । न क्त्वा सेट् । (१. २. १८)

सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् ? कृत्वा ।

३३२३ । मृडमृदगुधकुषक्लिशवदवसः क्त्वा । (१. २. ७)

एभ्यस्सेट् क्त्वा कित् । मृडित्वा । 'क्लिशः क्त्वा' (सू. 3049) इति वेट् । क्लिशित्वा क्लिष्ट्वा । उदित्वा । उषित्वा ।

भट्टिकाव्ये—VII. 97.

बभूव याधिशैलेन्द्रं मृदित्वेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ 3164 ॥

इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं मृदित्वेव निष्पेष्येव जगतां सारं कुषित्वा उत्कृष्य । उद्धृत्येत्यर्थः । मृदित्वा कुषित्वेति 'न क्त्वा सेट्' (सू. 3322) इति कित्त्वप्रतिषेधे प्राप्तेऽनेन कित्त्वम् ।

भट्टिकाव्ये—VII. 98.

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे ।
उदित्वालं चिरं यत्नात्सैका धात्रा विनिर्मिता ॥ 3165 ॥

सहस्राक्षममृडित्वा असुखयित्वा । 'मृड सुखने' इति धातोः क्त्वाप्रत्यये नञ्समासः । अनञ्पूर्व इति निषेधान्न क्त्वो ल्यबादेशः । चिरं क्लिशित्वा परिश्रम्य । चिरमभ्यस्येत्यर्थः । सर्वत्र क्त्वः कित्त्वान्न गुणः ।

अस्मिन्नेव ग्रन्थे श्लो० 2708. अलं क्लिशित्वा । 'अलं खल्वोः' (सू. 3316) इत्यादिना क्त्वा । 'क्लिशः क्त्वानिष्ठयोः' (सू. 3049) इति सेट् । 'न क्त्वा सेट्' (सू. 3322) इति कित्त्वनिषेधे प्राप्तेऽनेन कित्त्वम् ।

### ३३२४ । नोपधात्थफान्ताद्वा । (१. २. २३)

सेट् क्त्वा कित्स्याद्वा । श्रथित्वा श्रन्थित्वा । गुफित्वा गुम्फित्वा । नोपधात्किम् । कोथित्वा रेफित्वा ।

### ३३२६ । तृषिमृषिकृशेः काश्यपस्य । (१. २. २५)

एभ्यः सेट् क्त्वा किद्वा । तृषित्वा तर्षित्वा । मृषित्वा मर्षित्वा । कृषित्वा कर्षित्वा ।

भट्टिकाव्ये—VII. 108.

> वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि ।
> तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः ॥ 3166 ॥

तृषित्वेव । कित्त्वप्रतिषेधः ।

### ३३२७ । जॄव्रश्च्योः क्त्वि । (७. २. ५५)

आभ्यां परस्य क्त्व इट् स्यात् । जरीत्वा जरित्वा । व्रश्चित्वा ।

भट्टिकाव्ये—IX. 41.

> जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः ।
> व्रश्चित्वा विवशानन्यांस्तलेनापातयत्तरून् ॥ 3167 ॥

जरित्वेव जीर्णा भूत्वेव । पाणितलेन व्रश्चित्वा छित्वा । क्त्वाप्रत्यये नित्यमिट् ।

३३२८ । उदितो वा । (७. २. ५६)

उदितः परस्य क्त्व इड् वा । शमित्वा शान्त्वा । दिवु, द्यूत्वा देवित्वा ।

भट्टिकाव्ये—IX. 42.

दमित्वा रिपुसङ्घातानश्रान्त्वा वनकेसरी ।
वनं चचार कर्तिष्यन् कर्त्स्यन्निव सिन्धुरः ॥ 3168 ॥

रिपुसङ्घातान् दमित्वा दान्त्वा । अश्रान्त्वा अश्रमित्वा । दमेः श्रमेश्च क्त्वायां विकल्पादिट् ।

३३२९ । क्रमश्च क्त्वि । (६. ४. १८)

क्रम उपधाया वा दीर्घः स्यात् । क्रान्त्वा क्रन्त्वा ।

रघुवंशे—I. 14.

सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना ।
स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥ 3169 ॥

विकल्पाद्दीर्घः ।

३३३० । जान्तनशां विभाषा । (६. ४. ३२)

जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे । भक्त्वा भङ्क्त्वा । रक्त्वा रङ्क्त्वा । 'मस्जिनशोः' (सू. 2517) इति नुम् । तस्य पक्षे लोपः । नष्ट्वा नंष्ट्वा । 'रधादिभ्यश्च' (सू. 2515) इतीट्पक्षे नशित्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 969. भुजौ भङ्क्त्वा । अनुनासिकलोपाभावपक्षे रूपम् ।

३३३१ । जहातेश्च क्त्वि । (७. ४. ४३)

हित्वा । 'दधातेर्हिः' (सू. 3076) इति क्त्वा । हाङस्तु हात्वा । 'अदो जग्धिः' (सू. 3080) इति जग्ध्यादेशो जग्ध्वा ।

भट्टिकाव्ये—III. 36.

कृतेषु पिण्डोदकसञ्ज्ञयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः ।
प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतस्सपौरः ॥ 3170 ॥

हित्वा । ओ हाक् त्यागे । क्त्वि हिरादेशः ।

३३३२ । समासेऽनञ्पूर्वे क्त्वो ल्यप् । ( ७. १. ३७ )

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् । अकृत्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 852. समादाय गृहीत्वा । ल्यबादेशः ।

माघे—II. 52.

अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ।
कथङ्कारमनालम्बा कीर्तिर्द्यामधिरोहति ॥ 3171 ॥

अकृत्वा । अनञ्पूर्वे इति निषेधात् समासे न ल्यबादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 397 अपृष्ट्वा । पूर्ववत् ।

माघे—XIX. 8.

उल्मुकेन द्रुमं प्राप्य सङ्कुचत्पत्रसम्पदम् ।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥ 3172 ॥

प्राप्य । ल्यबादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 2271. निरीय निर्गत्य । 'इण् गतौ' इति धातोः समासे क्त्वो ल्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 988. प्रोष्य प्रवासं कृत्वा । प्रपूर्वाद्वसधातोः समासे क्त्वो ल्यप् ।

अस्मिन्नेव ग्रन्थे श्लो० 97. अविध्वा । व्यध ताडने । निषेधान्न ल्यबादेशः ।

३३३७ । विभाषाऽऽपः । ( ६. ४. ५७ )

आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि । प्रापय्य प्राप्य ।

नैषधे—IV. 49.

> अयमयोगिवधूवधपातकै-
> भ्रमिमवाप्य दिवः खलु पात्यते ।
> शितिनिशादृषदि स्फुटदुत्पत-
> त्कणगणाधिकतारकिताम्बरः ॥ 3173 ॥

भ्रमिमवाप्य प्राप्य । आप्नोतेर्ण्यन्तात्क्त्वो ल्यबादेशः । विकल्पाद्य देशाभावः ।

३३४३ । आभीक्ष्ण्ये णमुल् च । ( ३. ४. २२ )

पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च । द्वित्वम् । स्मारंस्मारं नमति शिवम् । स्मृत्वास्मृत्वा । पायंपायम् । भोजंभोजम् । श्रावंश्रावम् । 'चिण्णमुलोः' ( सू. 2762 ) इति णमुल्परे णौ वा दीर्घः । गामंगामं गमंगमम् । 'विभाषा चिण्णमुलोः' ( सू. 2765 ) इति नुम्वा । लम्भंलम्भम् लाभंलाभम् । व्यवस्थितविभाषयोपसृष्टस्य नित्यं नुम् । प्रलम्भंप्रलम्भम् । 'जाग्रोऽविचिण्णल्' ( सू. 2480 ) इति गुणः । जागरंजागरम् । ण्यन्तस्याप्येवम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1934. कचित्प्रदेशे स्थायंस्थायं पुनः पुनः स्थित्वा । कचित् क्रान्त्वाक्रान्त्वा उत्प्लुत्योत्प्लुत्य । णमुल् क्त्वा च । 'नित्यवीप्सयोः' ( सू. 2140 ) इति द्विर्वचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1935. स्यन्त्वास्यन्त्वा लुत्वालुत्वा । अत्र चकारात् क्त्वा । द्विर्वचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 465. स्पर्शंस्पर्शं स्पृष्ट्वास्पृष्ट्वा । आभीक्ष्ण्ये णमुल् । **मन्दंमन्दम्** । 'नित्यवीप्सयोः' ( सू. 2140 ) इति उभयत्र द्विर्वचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 326. **श्लाघंश्लाघम्** । णमुल् । द्विर्वचनम् ।

३३४६ । कर्मण्याक्रोशे कृञः खमुञ् । ( ३. ४. २५ )

कर्मण्युपपदे आक्रोशे गम्ये कृञः खमुञ् स्यात् । चौरंकारमाक्रोशति । करोतिरुच्चारणे । चौरशब्दमुच्चार्येत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 847. भीतं कृत्वा **भीतंकारम्** । खमुञ् । आक्रुश्य भीरुस्त्वमिति निर्भर्त्स्येत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 2293. चौरङ्कारं चौरशब्दमुच्चार्य आक्रुश्यमानः। चौरिकामुच्चार्य वाक्रुश्यमानः। णमुल्।

३३४७। स्वादुमि णमुल्। (३. ४. २६)

स्वाद्वर्थेषु कृञो णमुल्स्यादेककर्तृकयोः पूर्वकाले। अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते। सम्पन्नंकारम्। लवणंकारम्। सम्पन्नलवणशब्दौ स्वादुपर्यायौ। वासरूपेण क्त्वापि। स्वादुं कृत्वा भुङ्क्ते।

अस्मिन्नेव ग्रन्थे श्लो० 850. स्वादुंकारं स्वादुकृत्य। णमुल्।

३३४८। अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्। (३. ४. २७)

एषु कृञो णमुल् स्यात्।

अस्मिन्नेव ग्रन्थे श्लो० 3171. कथंकारम्। कथमित्यर्थः। करोतेः कथंपूर्वाण्णमुल्।

अस्मिन्नेव ग्रन्थे श्लो० 2483. कथङ्कारं। पूर्ववत्।

अस्मिन्नेव ग्रन्थे ग० 1110. इत्थंकारं। आलोचनं कृत्वेत्यर्थः। इत्थमुपपदात्करोतेर्णमुल्।

३३५०। कर्मणि दृशिविदोः साकल्ये। (३. ४. २९)

कर्मण्युपपदे णमुल्स्यात्। कन्यादर्शं वरयति। सर्वाः कन्या इत्यर्थः। ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः।

अस्मिन्नेव ग्रन्थे श्लो० 735. मांसशोणितसन्दर्शं कार्त्स्न्येन मांसशोणितञ्च दृष्ट्वा। णमुल्। 'अमैवाव्ययेन' (सू. 783) इति समासः।

अस्मिन्नेव ग्रन्थे श्लो० 51. विप्रान् साकल्येन दृष्ट्वा विप्रदर्शम्। रात्रिचरी साकल्येन जिघांसुं विदित्वा जिघांसुवेदम्। उभयत्रापि णमुल्। अत्र ताटकाया एकत्वेऽपि अवयवाभिप्रायं साकल्यवचनं वेदितव्यम्।

३३५१। यावति विन्दजीवोः। (३. ४. ३०)

यावद्वेदं भुङ्क्ते। यावज्जीवमधीते।

३३५२ । चर्मोदरयोः पूरेः । ( ३. ४. ३१ )

कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ।

३३५३ । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् । ( ३. ४. ३२ )

कर्मण्युपपदे पूरेर्णमुल्स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वृष्टो देवः ।

भट्टिकाव्ये—XIV. 20.

ददाल भूर्नभो रक्तं गोष्पदप्रं ववर्ष च ।
मृगाः प्रसस्रुर्वामेन खगाश्चुक्रुशिरेऽशुभम् ॥ 3174 ॥

नभश्च रक्तं ववर्ष । कियत्प्रमाणं गोष्पदप्रम् । णमुल् ऊलोपश्च ।

३३५४ । चेले क्नोपेः । ( ३. ४. ३३ )

चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल्स्याद्वर्षप्रमाणे । चेलक्नोपं शब्दायमन् वृष्टो देवः । वस्त्रक्नोपं वसनक्नोपम् ।

भट्टिकाव्ये—XVII. 74.

मेघाः सविद्युतोऽवर्षंश्चेलक्नोपं च शोणितम् ।
अवान्भीमा नभस्वन्तः मारुतश्चाशिवाशिवाः ॥ 3175 ॥

मेघाश्चेलक्नोपं शोणितमवर्षन् यावता रक्तेन चेलं क्नोपयते सिच्यते तावत्प्रमाणं वृष्टवन्तः । 'क्नूयि शब्दे' इत्यस्य ण्यन्तस्य 'अर्तिह्री' ( सू. 2570 ) इत्यादिना पुक् । यलोपः ।

३३५५ । निमूलसमूलयोः कषः । ( ३. ४. ३४ )

कर्मणीत्येव । कषादिष्वनुप्रयोगं वक्ष्यति । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 848. समूलकाषं समूलं कषित्वा चकषुः । णमुल् । 'कषादिषु यथाविध्यनुप्रयोगः' ( सू. 3367 ) इत्यनुप्रयोगः ।

अनर्घराघवे—IV. 28.

सविधमुपसरन् समूलकाषं
कषितनृपान्वयमद्य मां धिनोषि ।
हरिमिव करिकुम्भकूटकोटि-
प्रकटकठोरनखाङ्कुरं कुरङ्गः ॥ 3176 ॥

पूर्ववत् ।

## ३३५६ । शुष्कचूर्णरूक्षेषु पिषः । ( ३. ४. ३५ )

एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ।

भट्टिकाव्ये—VI. 37.

धर्मं युनज्मि कालेन समिन्धानोऽस्त्रकौशलम् ।
शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्वतेजसा ॥ 3177 ॥

शुष्कं पिष्ट्वा शुष्कपेषं पिनष्मि सञ्चूर्णयिष्यामि । शुष्कं पिनष्मीत्यर्थः । णमुल् । कषाद्यनुप्रयोगः ।

माघे—XV. 76.

परिमोहिणा परिजनेन कथमपि चिरादुपाहृतम् ।
वर्म करतलयुगेन महत्तनुचूर्णपेषमपिषद्रुषा परः ॥ 3178 ॥

तनुचूर्णं सूक्ष्मचूर्णं पिष्ट्वा तनुचूर्णपेषं अपिषत् चूर्णितवान् । णमुल् । कषाद्यनुप्रयोगः । पिषो लुङ् । पुषादित्वादङ् ।

## ३३५७ । समूलाकृतजीवेषु हन्कृञ्ग्रहः । ( ३. ४. ३६ )

कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवतीति जीवः । इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 849. समूलं हत्वा समूलघातं न्यवधीत् निहतवान् । अनेन णमुल् । कषाद्यनुप्रयोगः । 'लुङि च' ( सू. 2434 ) इति हनो वधादेशः ।

माघे—II. 33.

सम्मूलघातमघ्नन्तः परान्नोद्यतमानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ 3179 ॥

पूर्ववण्णमुल् ।

माघे—XVIII. 66.

भिन्नानस्त्रैर्मोहभाजोऽभिजातान्
हन्तुं लोलं वारयन्तः स्ववर्गम् ।
जीवग्राहं ग्राहयामासुरन्ये
योग्येनार्थः कस्य न स्याज्जनेन ॥ 3180 ॥

जीवान् जीवतो गृहीत्वा जीवग्राहं ग्राहयामासुः । जीवत एव ग्राहयामासुरित्यर्थः । णमुल् । कषादित्वादनुप्रयोगः ।

चम्पूरामायणे—V. 37.

ग.—पुनरपि निशमितामितनिशिचरगणमारणो रावणः सचिवान् पञ्च पञ्चाननपराक्रमान् प्रहसनप्रमुखान् वलीमुखं जीवग्राहं गृह्णीध्वमिति प्राहिणोत् ॥ 3181 ॥

अस्मिन्नेव ग्रन्थे श्लो० 69. जीवग्राहं गृह्णन्ति ।

चम्पूभारते—II. 10.

कृत्ते भल्लैर्धनुषि स गुरुद्रोहिणस्तस्य जीव-
ग्राहे बाहाञ्चलपरिचलत्खड्गवल्लीसहायः ।
पुत्रावल्यां सुबलदुहितुः पूर्वपक्षीभवत्यां
सिद्धान्तोऽभूद्दिवि भुवि बुधैः श्लाघितस्सव्यसाची ॥ 3182 ॥

जीवग्राहे जीवत एव ग्रहणे । जीवतीति जीवः तस्य ग्राहो ग्रहणम् । भावे घञ् ।

## ३३५८ । करणे हनः । (३. ४. ३७)

पादघातं हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थोऽयं योगः । भिन्नधातुसम्बन्धे तु 'हिंसार्थानां च' (सू. 3369) इति वक्ष्यते ॥

माघे—XVIII. 12.

रोषावेशादाभिमुख्येन कौचित्
पाणिग्राहं रंहसैवोपयातौ ।
हित्वा हेती मल्लवन्मुष्टिघातं
घ्नन्तौ बाहूबाहवि व्यासृजेताम् ॥ 3183 ॥

मुष्टिभिर्हत्वा मुष्टिघातम् । अनेन णमुल् । घ्नन्तौ । कषादित्वादनुप्रयोगः । मुष्टिभिर्घ्नन्तावित्यर्थः । पाणिग्राहं अन्योन्यपाणिं गृहीत्वा । 'द्वितीयायां' (सू. 3374) इति णमुल् । बाहूबाहवि व्यासृजेताम् । 'कर्तरि कर्मव्यतिहारे' (सू. 2680) इत्यात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 735. तुण्डघातमयुध्यत । तुण्डेन घातो यस्मिन्कर्मणि तद्यथा तथेति घञन्तोत्तरपदो बहुव्रीहिः । अनेन णमुलन्तत्वे पादघातं हन्तीतिवत् 'कषादिषु' (सू. 3367) इति यथाविध्यनुप्रयोगः स्यात् ।

## ३३५९ । स्नेहने पिषः । (३. ४. ३८)

स्निह्यते येन तस्मिन्करणे पिषेर्णमुल् । उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः । 'पेषंवास' (सू. 996) इत्युदकशब्दस्योदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1802. मत्तो हस्ती चक्रकृत्तं स्वहस्तं सरोषस्सन् पादेन असृक्पङ्केन पङ्कीभूतेनासृजा पिष्ट्वा असृक्पङ्कपेषं पिपेष । रक्तपङ्केन स्नेहद्रव्येण ममर्देत्यर्थः । अनेन णमुल् । कषादित्वादनुप्रयोगः ।

## ३३६० । हस्ते वर्तिग्रहोः । (३. ४. ३९)

हस्तार्थे करणे । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहं पाणिग्राहम् ।

भट्टिकाव्ये—XV. 37.

अतौत्सीद्गदया गाढमपिषच्चोपगूहनैः ।
जानुभ्यामदमीचान्यान् हस्तवर्तमवीवृतत् ॥ 3184 ॥

हस्तवर्तिमवीवृतत् हस्ताभ्यां वर्तितवान्। पिष्टवानित्यर्थः। वृतेर्ण्यन्ताण्णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः।

३३६१। स्वे पुषः। (३. ४. ४०)

करण इत्येव। स्व इत्यर्थग्रहणम्। तेन स्वरूपे पर्याये विशेषे च णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोषम्।

अस्मिन्नेव ग्रन्थे श्लो० 2056. या सीता युष्मान् स्वेन धनेन पुष्ट्वा स्वपोषं अपुषत्। णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः। पुषादित्वादङ्।

अस्मिन्नेव ग्रन्थे श्लो० 1817. अस्मानपुषत्स्वपोषम्। पूर्ववत्सर्वम्।

अस्मिन्नेव ग्रन्थे श्लो० 752. स्वपोषं पुष्टान्।

३३६२। अधिकरणे बन्धः। (३. ४. ४१)

चक्रबन्धं बध्नाति। चक्रे बध्नातीत्यर्थः।

३३६३। संज्ञायाम्। (३. ४. ४२)

बध्नातेर्णमुल् संज्ञायाम्। क्रौञ्चबन्धं बद्धः। मयूरिकाबन्धम्। अट्टालिकाबन्धम्। बन्धविशेषाणां संज्ञा एताः।

३३६४। कर्त्रोर्जीवपुरुषयोर्नशिवहोः। (३. ४. ४३)

जीवनाशं नश्यति। जीवो नश्यतीत्यर्थः। पुरुषवाहं वहति। पुरुषो वहतीत्यर्थः।

भट्टिकाव्ये—XIV. 31.

सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च॥ 3185॥

प्रजङ्घो नाम राक्षसो जीवनाशं ननाश जीवेन विनष्टः। णमुल्।

३३६५। ऊर्ध्वे शुषिपूरोः। (३. ४. ४४)

ऊर्ध्वे कर्तरि। ऊर्ध्वशोषं शुष्यति। वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः।

अस्मिन्नेव ग्रन्थे श्लो० 2692. ऊर्ध्वशोषं तृणवद्विशुष्कः तृणवदूर्ध्वं शुषित्वा ऊर्ध्वशोषं विशुष्कः। पूर्ववण्णमुल्। अनुप्रयोगः। 'शुषः कः' (सू. 3030) इति निष्ठातकारस्य कः।

भट्टिकाव्ये—XI. 40.

प्रबोधकालात्त्रिदशेन्द्रशत्रोः
प्रागूर्ध्वशोषं परिशोष्यमाणाः।
हीना महान्तश्च समत्वमीयु-
र्द्रास्थैरवज्ञापरुषाक्षिदृष्टाः॥ 3186॥

ऊर्ध्वशोषं परिशोष्यमाणाः ऊर्ध्वं गता एव प्रबोधकाले शोषं नीयमानाः। णमुल्।

## ३३६६। उपमाने कर्मणि च। (३. ४. ४५)

चात्कर्तरि। घृतनिधायं निहितं जलम्। घृतमिव सुरक्षितमित्यर्थः। अजकनाशं नष्टः। अजक इव नष्ट इत्यर्थः।

चम्पूरामायणे—III. 42.

ग.—तदनन्तरमनश्रुपात्रेषु राक्षसीनेत्रेषु सदोत्पादिततरवारिभ्यां रामलक्ष्मणयोस्तरवारिभ्यां कबन्धबाहुयुगलं कदलीलावमलूयत॥ 3187॥

कदलीमिव लूत्वा कदलीलावम्। कर्मणि णमुल्।

अस्मिन्नेव ग्रन्थे श्लो० 2692. विद्युत्प्रणाशं प्रनष्टः। विद्युदिवोत्पत्त्यनन्तरमेव विनाशं गतः। अत्र चकारात् 'कर्त्रोर्जीवपुरुषयोः' (सू. 3364) इत्यतः कर्तृग्रहणानुवृत्तौ कर्तृवाचिनि विद्युच्छब्द उपपदे णमुल्।

किरातार्जुनीये—XI. 79.

विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि।
आराध्य वा सहस्राक्षमयशश्शल्यमुद्धरे॥ 3188॥

विच्छिन्नं वाताहतं यदभ्रं तदिव विलीय विच्छिन्नाभ्रविलायम्। विलीये। कर्तर्युपपदे णमुल्। कषादित्वाद्यथाविध्यनुप्रयोगः।

## ३३६७ । कषादिषु यथाविध्यनुप्रयोगः । (३. ४. ४६)

यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः । तथैवोदाहृतम् ।

## ३३६८ । उपदंशस्तृतीयायाम् । (३. ४. ४७)

'तृतीयाप्रभृतीन्यन्यतरस्यां' (सू. 784) इति वा समासः । मूलकोपदंशं भुङ्क्ते मूलकेनोपदंशं । दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया ।

अस्मिन्नेव ग्रन्थे श्लो० 850. कालखण्डेन यकृता उपदंशं **कालखण्डोपदंशम्** । कालखण्डमुपदंशं कृत्वेत्यर्थः । णमुल् । कालखण्डस्य दंशनक्रियाकर्मत्वेऽपि भुजिक्रियाकरणत्वात्तृतीयोपपदत्वम् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (सू. 784) इति विकल्पेनोपपदसमासः ।

## ३३६९ । हिंसार्थानाञ्च समानकर्मकाणाम् । (३. ४. ४८)

तृतीयान्त उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थात् णमुल्स्यात् । **दण्डोपघातं** गाः कालयति दण्डेनोपघातम् । दण्डताडम् । समानकर्मकाणामिति किम् । दण्डेन चोरमाहत्य गाः कालयति ।

अस्मिन्नेव ग्रन्थे श्लो० 735. असौ पक्षी अयुध्यत । युधेर्दैवादिकादकर्मकाल्लङ् । तुण्डघातमिति क्रियाविशेषणम् तुण्डेन घातो हननं यस्मिन्युद्ध इति । अनेन णमुल् न । समानकर्मकताभावात् । अकर्मकत्वाद्युधेः ।

## ३३७० । सप्तम्याञ्चोपपीडरुधकर्षः । (३. ४. ४९)

उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल्स्यात् । पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडं पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति । व्रजेन व्रजे उपरोधं वा । पाण्युपकर्षं धानास्सङ्गृह्णाति । पाणावुपकर्षम् पाणिनोपकर्षम् । 'तृतीयाप्रभृतीनि' (सू. 784) इति वा समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 3139. हे भैमि ! वासवस्त्वां **आलिङ्गनयोपपीडं** उपपीड्य गाढमालिङ्ग्य । चकारात्तृतीयोपपदे णमुल् । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (सू. 784) इति विकल्पान्न समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 2119. स्तनाभ्यामुपपीडयेति स्तनोपपीडम् । तृतीयोपपदे णमुल् । समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 74. बाहुभ्यामुपपीड्य बाहूपपीडम् । णमुल् । समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 3161. हस्तेन रोधः पीडनं यस्य तत् हस्तरोधं धनुः । उपोपसर्गव्यभिचारान्न णमुल् । हस्तेन रुध्वा हस्तरोधम् । हस्तशब्दे तृतीयान्त उपपदे अनेन णमुलिति केचित् । समासपक्षः ।

अस्मिन्नेव ग्रन्थे श्लो० 77. मुष्ट्या पीडा निपीडनं यस्मिन् कर्मणि तद्यथा तथा मुष्टिपीडम् । अनेन णमुलिति केचित् । तच्चिन्त्यम् । उपोपसर्गव्यभिचारेण तदसम्भवादिति ।

## ३३७१ । समासत्तौ । (३. ४. ५०)

तृतीयासप्तम्योर्धातोर्णमुल्स्यात्सन्निकर्षे गम्यमाने । केशग्राहं युध्यन्ते । केशेषु गृहीत्वा । हस्तग्राहं हस्तेन गृहीत्वा ।

## ३३७३ । अपादाने परीप्सायाम् । (३. ४. ५२)

परीप्सा त्वरा । शय्योत्थायं धावति ।

अस्मिन्नेव ग्रन्थे श्लो० 1555. शय्यायास्सत्वरमुत्थाय शय्योत्थायम् । णमुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 1620. शय्योत्थायम् । पूर्ववत् ।

भट्टिकाव्ये—VI. 45.

सत्वानजस्रं घोरेण वनाकर्षं समश्नता ।
क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना ॥ 3189 ॥

अजस्रं सत्वान् वनात् त्वरया आकृष्य वनाकर्षम् । णमुल् । समश्नता रक्षसा तौ जगृहाते ।

### ३३७४ । द्वितीयायां च । ( ३. ४. ५३ )

परीप्सायामित्येव । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 3183. पाणिग्राहं अन्योन्यं पाणिं गृहीत्वा । णमुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 643. गोत्रनिघाय गोत्रानिघायम् । णमुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 2583. शब्दकारः सिंहनादकाः नराशिनम् । 'न शब्दश्लोक' ( सू. 2937 ) इत्यादिना टप्रतिषेधात्कर्मण्यण् । शब्दकारमित्यत्र अनेन णमुलिति केचित् ।

### ३३७६ । स्वाङ्गेऽध्रुवे । ( ३. ४. ५४ )

द्वितीयायामित्येव । अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल् । भ्रूविक्षेपं कथयति । भ्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य । येन विना न जीवनं तद् ध्रुवम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1252. अङ्गुलिस्फोटं अङ्गुलीन् चालयित्वा वदन् भ्रुवं विक्षिप्य भ्रूविक्षेपम् । उभयत्राप्यनेन णमुल् ।

### ३३७७ । परिक्लिश्यमाने च । ( ३. ४. ५५ )

सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल्स्यात् । उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयन्त इत्यर्थः । 'उरोविदारं प्रतिचस्करे नखैः' । ध्रुवार्थमिदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 2164. उरो विदार्य उरोविदारम् । णमुल् ।

### ३३७८ । विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः । ( ३. ४. ५६ )

द्वितीयायामित्येव । द्वितीयान्त उपपदे विश्यादिभ्यो णमुल्स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये । गेहादिद्रव्याणां विश्यादिक्रियाभिस्साकल्येन सम्बन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा । 'नित्यवीप्सयोः' (सू. 2140 ) इति द्वित्वं तु न भवति । समासेनैव स्वभावतस्तयोरुक्तत्वात् । यद्यप्याभीक्ष्ण्ये णमुलुक्त एव तथाप्युपपदसंज्ञार्थमासेवायामिह पुनर्विधिः । गेहानुप्रवेशमास्ते । गेहंगेहमनुप्रवेशम् । गेहंगेहमनुप्रपातम् गेहानुप्रपातम् । गेहानुप्रपादम् । गेहानुस्कन्दम् । असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम् ।

भट्टिकाव्ये—II. 11.

लतानुपातं कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च ।
कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत्स्मयमान आस्त ॥ 3190 ॥

लतांलतामनुपत्यासाद्य तथा लतामनुपत्यानुपत्य च लतानुपातं कुसुमान्यगृह्णात् । नदींनदीमवस्कन्द्य तथा नदीमवस्कन्द्यावस्कन्द्य च नद्यवस्कन्दमुदकमुपास्पृशत् आचामति स्म । चारुशिलांचारुशिलामुपविश्य चारुशिलामुपविश्योपविश्य च चारुशिलोपवेशं आस्त । तत्रोपविष्ट इत्यर्थः । द्वितीयान्त उपपदे णमुल् ।

भट्टिकाव्ये—XII. 84.

क्रीडन्भुजङ्गेन गृहानुपातं
कश्चिद्यथा जीवति संशयस्थः ।
संसेवमानो नृपतिं प्रमूढं
तथैव यज्जीवति सोऽस्य लाभः ॥ 3191 ॥

गृहानुपातं गृहंगृहमनुपत्य । णमुल् ।

## ३३८० । नाम्न्यादिशिग्रहोः । (३. ४. ५८)

द्वितीयायामित्येव । नामादेशमाचष्टे । नामग्राहमाह्वयति ।

अस्मिन्नेव ग्रन्थे श्लो० 449. नाम गृहीत्वा नामग्राहम् । णमुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 1733. नामग्राहं । पूर्ववण्णमुल् ।

## ३३८१ । अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ । (३. ४. ५९)

अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य च नीचैः कथनम् । उच्चैःकृत्य उच्चैः कृत्वा उच्चैःकारमप्रियमाचष्टे । नीचैःकृत्य नीचैःकृत्वा नीचैःकारं प्रियं ब्रूते ।

अस्मिन्नेव ग्रन्थे श्लो० 848. एते बृंहितमन्युवेगाः प्रवृद्धशोकवेगाः । अत एव रुदन्तः क्षितिपालं दशरथं रामवियोगशोकान्मृतं उच्चैःकारमुच्चैः कृत्वा आवेदयन्तः । पुत्रशोकान्मृत इत्युच्चैः कथयन्त इत्यर्थः । णमुल् ।

३३८५ । तूष्णीमि भुवः । ( ३. ४. ६३ )

तूष्णींशब्द उपपदे भुवः क्त्वाणमुलौ स्तः । तूष्णींभूय तूष्णींभूत्वा तूष्णीम्भावम् ।

अस्मिन्नेव ग्रन्थे श्लो० 852. तूष्णींभूय तूष्णीं भूत्वा । मौनीभूयेत्यर्थः । 'मौने तु तूष्णीं तूष्णीका' III. iv. 9. इत्यमरः । पक्षे क्त्वाप्रत्ययः । 'क्त्वा च' ( सू. 785 ) इति पक्षे समासे क्त्वो ल्यबादेशः ।

३३८६ । अन्वच्यानुलोम्ये । ( ३. ४. ६४ )

अन्वक्छब्द उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने । अन्वग्भूय आस्ते । अन्वग्भूत्वा । अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वानुकूलो भूत्वा आस्त इत्यर्थः । आनुलोम्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1733. रघुवृषभयोः अन्वग्भावं अन्वग्भूत्वा । अनुकूलीभूयेत्यर्थः । णमुल् ।

॥ इत्युत्तरकृदन्तप्रकरणम् ॥

---

॥ श्रीरस्तु ॥

## ॥ अथ वैदिकप्रकरणम् ॥



### ३४०९ । छन्दसि सहः । ( ३. २. ६३ )

ण्विः स्यात् । पृतनाषाट् ।

रघुवंशे—XV. 40.

तमभ्यनन्दत्प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥ 3192 ॥

तुरं वेगं सहत इति तुराषाडिन्द्रः । ण्विः । यद्वा सहतेर्णिचि कृते साहयतेः क्विप् । 'अन्येषामपि दृश्यते' (सू. 3539) इति पूर्वपदस्य दीर्घः ।

भट्टिकाव्ये—IX. 67.

पृतनाषाड्द्विषो धूर्षु युक्तान्यानस्य वाजिनः ।
आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत् ॥ 3193 ॥

पृतनां सहत इति पृतनाषाडिन्द्रः । 'छन्दसि सहः' (सू. 3409) इति ण्विप्रत्ययस्य छन्दसि विधानात् पुरुहूतद्विष इति पाठं भिन्दन्ति । अन्ये तु 'तुरासाहं पुरोधाय' इत्यादिप्रयोगदर्शनात् भाषायामपीच्छन्ति ।

### ३४१८ । आतो मनिन्क्वनिब्वनिपश्च । ( ३. २. ७४ )

सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः । चाद्विच् । सुधामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा । विच् । कीलालपाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1276. रेतोधाः शुक्रार्पकः । विच् ।

### ३४४५ । रात्रेश्चाजसौ । ( ४. १. ३१ )

रात्रिशब्दान्ङीप्स्वादुदात्तविषये छन्दसि 'ङीपि तु कृत्तिकारात्' (फि. सू. 50. सू. 503) इति ङीप्यन्तोदात्तः।

अस्मिन्नेव ग्रन्थे श्लो० 162. नाक्तरात्रीम्।

३४६२। अग्राद्यत्। (४. ४. ११६)

भट्टिकाव्ये—I. 22.

घानिष्यते तेन महान् विपक्षः स्थास्यते येन रणे पुरस्तात्।
मा मां महात्मन् परिभूरयोग्ये न मद्विधो न्यस्यति भारमग्र्यम्॥ 3194 ॥

३४६४। समुद्राभ्राद्धः। (४. ४. ११८)

समुद्रियाभ्रियौ अविभवे त्रिषु। समुद्रियं 'कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियं' I. ii. 8. इत्यमरः।

३४६६। दूतस्य भागकर्मणी। (४. ४. १२०)

भागोंऽशः। दूत्यम्।

३५३९। अन्येषामपि दृश्यते। (६. ३. १३७)

अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात्। पूरुषः। दण्डादण्डि।

अस्मिन्नेव ग्रन्थे श्लो० 984. पूरुषः पुरागपुरुषः। वा दीर्घः।

अस्मिन्नेव ग्रन्थे श्लो० 3192. तुरं वेगं सहत इति तुराषाट्। पूर्वपदस्य दीर्घः।

अस्मिन्नेव ग्रन्थे श्लो० 813. हनू कपोलपार्श्वे। तद्वन्तं हनूमन्तम्। निन्दार्थे मतुप्। दृशिग्रहणसामर्थ्यात्पाक्षिको दीर्घः।

अस्मिन्नेव ग्रन्थे श्लो० 3077. [1]हनुमन्तम्। अत्र दीर्घो न।

---

1. हनुमन्तमिति पाठपक्ष उदाहरणम्।

चम्पूभारते—XII. 8.

ग.—अथ तेन कृताञ्जलिना सविनयं निवेदितायां सार्वभौमलक्षणोपेतायां पदपङ्क्तौ लक्ष्यमाणैः सलिलमाहर्तुं वनदेवताभिराहितैरिव कलशैरङ्किताक्तारपथात् सङ्गररङ्गप्रयुक्तविविधायुधसविधाभ्यस्ततैक्ष्ण्यानीव मारुतिवचनानि निशम्य विशालैः क्रोध-निश्वासैरुपरिकोरकितबुद्बुदकलककलोदयात्तस्माज्जलाशयादुत्तीर्य मानिनामग्रणीस्सुयोधनो धीरधीरमनास्तादृशेन भीमेन सह भयानकं गदागदि कलहं सरभसमुपचक्रमे ॥3195॥

गदागदि । दीर्घः ।

३६३८ । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । (८. ३. ५३)

वाचस्पति दिवस्पुत्र दिवस्पृष्ठ तमसस्पार इत्यादीनि ।

अस्मिन्नेव ग्रन्थे श्लो० 782. वाचस्पत्यं वाग्मित्वम् । कस्कादित्वात्सः । अलुक्पक्षे षष्ठ्याः पतिपुत्रेत्यादिना सत्वमिति स्वामी । तन्न । [1] छन्दोविषयत्वात् । ब्राह्मणादित्वात् ष्यञ् ।

किरातार्जुनीये—XI. 43.

अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ 3196 ॥

वाचस्पतेः बृहस्पतेः । कस्कादित्वात्सः । अथवा षष्ठ्याः पतिपुत्रेति सकारः । एतस्मादेव ज्ञापकादलुगिति केचित् ॥

॥ इति वैदिकप्रकरणं समाप्तम् ॥

---

1. पातौ च बहुलमिति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या भाषायामपि अस्य सूत्रस्य प्रवृत्ति-संभवात् पक्षान्तरस्यापि क्लिष्टत्वात् स्वामिपक्षः साधीयान् इति भाति ।

॥ श्रीरस्तु ॥

# ॥ अथ लिङ्गानुशासनप्रकरणम् ॥

## ॥ स्त्रीलिङ्गाधिकारः ॥

—:*:—

१ । लिङ्गम् । २ । स्त्री ।

अधिकारसूत्रे एते ।

३ । ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ।

ऋकारान्ता एते पञ्च स्त्रीलिङ्गाः ।

४ । अन्यूप्रत्ययान्तो धातुः ।

अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः ।

५ । अशनिभरण्यरणयः पुंसि च ।

इयमयं वाशनिः ।

६ । मिन्यन्तः ।

मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः ।

७ । वह्निवृष्ण्यग्नयः पुंसि ।

पूर्वस्यापवादः ।

८ । श्रोणियोन्यूर्मयः पुंसि च ।

इयमयं वा श्रोणिर्योनिरूर्मिर्वा ।

९ । क्तिन्नन्तः ।

स्पष्टं । कृतिरित्यादि ।

१० । ईकारान्तश्च ।

ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः ।

११ । ऊङाबन्तश्च ।

कुरूः । विद्या ।

१२ । य्वन्तमेकाक्षरम् ।

श्रीः । भूः ।

१३ । विंशत्यादिरानवतेः ।

इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ।

१४ । दुन्दुभिरक्षेषु ।

इयं दुन्दुभिः । अक्षेषु किम् । अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः ।

१५ । नाभिरक्षत्त्रिये ।

इयं नाभिः । 'नहो भश्च' (उ. सू. 565) इति इञ् ।

१६ । उभावप्यन्यत्र पुंसि ।

दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्त्रियः । कथं तर्हि 'समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः' इति भारविः । उच्यते । दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यात्पुंस्त्वमपीह साधु । अत एव

'नाभिर्मुख्यनृपे चक्रमध्यक्षत्त्रिययोः पुमान् ।
द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे ॥'

इति मेदिनी । रभसोऽप्याह—

'मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः ।
चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे ॥'

इति । एवमेवंविधेऽन्यत्रापि बोध्यम् ।

किरातार्जुनीये—VIII. 24.

समुच्छ्वसत्पङ्कजकोशकोमलै-
रुपाहितश्रीण्युपनीवि नाभिभिः ।
दधन्ति मध्येषु वलीविभङ्गिषु
स्तनातिभारादुदराणि नम्रताम् ॥ 3197 ॥

कोमलैर्मुग्धैर्नाभिभिः प्रतारिकाख्यैः । 'अथ नाभिस्तु जन्त्वङ्गे तस्य संज्ञा प्रतारिका' इति केशवः । पुंलिङ्गतायान्तु कविरेव प्रमाणम् ।

१७ । तलन्तः ।

अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता ।

१८ । भूमिविद्युत्सरिल्लतावनिताभिधानानि ।

भूमिर्भूः । विद्युत्सौदामिनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् ।

१९ । यादो नपुंसकम् ।

यादश्शब्दः सरिद्वाचकोऽपि क्लीबं स्यात् ।

२० । भाःस्रुक्स्रग्दिगुष्णिगुपानहः ।

एते स्त्रियां स्युः । इयं भा इत्यादि ।

२१ । स्थूणोर्णे नपुंसके च ।

एते स्त्रियां क्लीबे च स्तः । स्थूणा स्थूणम् । ऊर्णा ऊर्णम् । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ।

२२ । गृहशशाभ्यां क्लीबे ।

नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । गृहस्थूणम् । शशोर्णम् । 'शशोर्णं शशलोमनि' II. x. 107. इत्यमरः ।

२३ । प्रावृड्विप्रुड्रुट्तृड्विड्त्विषः ।

एते स्त्रियां स्युः ।

२४ । दर्विविदिवेदिखनिशान्त्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः ।

एते स्त्रियां स्युः । पक्षे ङीप् । दर्वी दर्विरित्यादि ।

२५ । तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविनीविरात्र्यादयः ।

एते प्राग्वत् । इयं तिथिरित्यादि । अमरस्त्वाह 'तिथयो द्वयोः' I. iii. 1. इति । तथा च भारविः 'तस्य भुवि बहुतिथास्तिथयः' इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च 'निखिलां निशि पौर्णिमातिथीन्' इति ।

अस्मिन्नेव ग्रन्थे श्लो० 1701. बहूनां पूरणाः बहुतिथाः बहुसङ्ख्यकाः । तस्य पूरणे डट् । 'बहुपूग' (सू. 1852) इत्यादिना तिथुक् । तिथयः ।

२६ । शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः ।

एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः ।

२७ । प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः ।

इयं प्रतिपदित्यादि ।

२८ । आशीर्धूःपूर्गीर्द्वारः ।

इयमाशीरित्यादि ।

रघुवंशे—I. 34.

सन्तानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ 3198 ॥

२९ । अप्सुमनस्समासिकतावर्षाणां बहुत्वञ्च ।

अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वञ्च । आप इमाः । 'स्त्रियः सुमनसः पुष्पम्' II. iv. 17. 'सुमना मालती जातिः' II. iv. 73. सुपर्वाणस्सुमनसः I. i. 7. इत्यमरः । देववाची तु पुंस्येव । बहुत्वं प्रायिकम् ।

३० । स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ।

इयं स्रक् । त्वक् । ज्योक् । वाक् । यवागूः । नौः । स्फिक् ।

३१ । त्रुटिसीमासम्बध्याः ।

इयं त्रुटिः । सीमा । सम्बध्या ।

३२ । चुल्लिवेणिखार्यश्च ।

स्पष्टम् ।

३३ । ताराधाराज्योत्स्नादयश्च ।

शलाका स्त्रियां नित्यम् ।

॥ इति स्त्रीलिंगाधिकारः ॥

—:*:—

॥ श्रीरस्तु ॥

## ॥ अथ पुंलिङ्गाधिकारः ॥

—:*:—

### ३४ । पुमान् ।

अधिकारोऽयम् ।

### ३५ । घञबन्तः ।

पाकः । त्यागः । करः । गरः । भावार्थ एवेदम्

### ३६ । घाजन्तश्च ।

विस्तरः । गोचरः । चयः । जय इत्यादि ।

### ३७ । भयलिङ्गभगपदानि नपुंसके ।

एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् ।

### ३८ । नङन्तः ।

नङ्प्रत्ययान्तः पुंसि स्यात् । यज्ञः । यत्नः ।

### ३९ । याच्ञा स्त्रियाम् ।

पूर्वस्यापवादः ।

चम्पूरामायणे—III. 25.

तदनु जनकपुत्रीयाच्ञया तं जिघृक्षु-
हरिणमनुजगाहे चापमदाय रामः ।
समय इति च भेजे वक्त्रमाततय मृत्युः
कुशिकसुतमखाजौ अष्टमेनं जिघांसुः ॥ 3199 ॥

### ४० । क्यन्तो घुः ।

किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधिः ।

४१ । इषुधिः स्त्री च ।

इषुधिशब्दः स्त्रियां पुंसि च । पूर्वस्यापवादः ।

४२ । देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठ-
खड्गशरपङ्काभिधानानि ।

एतानि पुंसि स्युः । देवाः सुराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दम इत्यादि ।

४३ । त्रिविष्टपत्रिभुवने नपुंसके ।

स्पष्टम् ।

४४ । द्यौः स्त्रियाम् ।

द्योदिवोस्तन्त्रेणोपादानमिदम् ।

४५ । इषुबाहू स्त्रियां च ।

चात्पुंसि ।

४६ । बाणकाण्डौ नपुंसके च ।

चात्पुंसि । त्रिविष्टपेत्यादिचतुस्सूत्री देवासुरेत्यस्यापवादः ।

४७ । नन्तः ।

अयं पुंसि । राजा । तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः । 'मन्व्यच्कोऽकर्तरि' इति नपुंसकप्रकरणे वक्ष्यमाणत्वात् ।

४८ । क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ।

क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः ।

४९ । अभ्रं नपुंसकम् ।

पूर्वस्यापवादः ।

५० । उकारान्तः ।

अयं पुंसि स्यात् । प्रभुः । इक्षुः । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनी । 'करेणुरिभ्यां स्त्री नेभे'-III. iii. 52. इत्यमरः ।

५१ । धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् । ५२ । समासे रज्जुः पुंसि च ।

कर्कटरज्वा । कर्कटरज्जुना ।

५३ । श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके । ५४ । वसु चार्थवाचि ।

अर्थवाचि किम् । 'वसुर्मयूखाग्निधनाधिपेषु' ।

५५ । मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च ।

चात्पुंसि । अयं मद्गुः । इदं मद्गु ।

५६ । रुत्वन्तः ।

मेरुः । सेतुः ।

चम्पूरामायणे—I. 94.

दुःखे सुखे च रज एव बभूव हेतु-
स्तादृग्विधे महति गौतमधर्मपत्न्याः ।
यस्माद्गुणेन रजसा विकृतिं गता सा
रामस्य पादरजसा प्रकृतिं प्रपेदे ॥ 3200 ॥

हेतुः ।

५७ । दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ।

रुत्वन्त इति पुंस्त्वस्यापवादः ।

अस्मिन्नेव ग्रन्थे श्लो० 1396. सक्तुनः ।

५८ । सक्तुर्नपुंसके च ।

चात्पुंसि । सक्तुः । सक्तु ।

अस्मिन्नेव ग्रन्थे श्लो० 645. सक्तु ।

५९ । प्राग्रश्मेरकारान्तः ।

'रश्मिदिवसाभिधानानि' (लि. सू. 98) इत्यतः प्राक् अकारान्त इत्यधिक्रियते ।

६० । कोपधः ।

कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः ।

६१ । चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ।

पूर्वसूत्रस्यापवादः ।

६२ । कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलकानि नपुंसके च ।

चात्पुंसि । अयं कण्टकः इदं कण्टकमित्यादि ।

६३ । टोपधः ।

टोपधोऽकारान्तः पुंसि स्यात् । घटः पटः ।

६४ । किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके ।

६५ । कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ।

चात्पुंसि । कुटः कुटमित्यादि ।

नैषधे—I. 21.

किमस्य रोम्णां कपटेन कोटिभि-
र्विधिर्न रेखाभिरजीगणद् गुणान् ।

न रोमकूपौघमिषाज्जगत्कृता
  कृताश्च किं दूषणशून्यबिन्दवः ॥ 3201 ॥

नैषधे—I. 22.

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने
  ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरःश्रिया तत्र च गोपुरस्फुर-
  त्कवाटदुर्धर्षतिरःप्रसारिता ॥ 3202 ॥

६६ । णोपधः ।

णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः ।

६७ । ऋणलवणपर्णतोरणोष्णानि नपुंसके ।

पूर्वसूत्रापवादः ।

अस्मिन्नेव ग्रन्थे श्लो० 2997. तोरणस्रजम् । 'तोरणोऽस्त्री बहिर्द्वारं' II. ii. 17. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 3022. उष्णं मुष्णन्तम् । धर्मवाचिनि नपुंसकम् ।

माघे—IV. 16.

फलद्भिरुष्णांशुकराभिमर्शात्
  कार्शानवं धाम पतङ्गकान्तैः ।
शशंस यः पात्रगुणाद् गुणानां
  सङ्क्रान्तिमाक्रान्तगुणातिरेकाम् ॥ 3203 ॥

उष्णा अंशवो यस्य स उष्णांशुः । धर्मिवाचिनि विशेष्यलिङ्गम् ।

६८ । कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ।

चात्पुंसि ।

अस्मिन्नेव ग्रन्थे ग० 1765. व्रणः ।

अस्मिन्नेव ग्रन्थे ग० 2394. चरणाभ्याम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1900. मेषस्य वृषणं वृशा ।

अस्मिन्नेव ग्रन्थे श्लो० 3065. विषाणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 305. तृणाय मत्वा ।

## ६९ । थोपधः ।

रथः ।

## ७० । काष्ठपृष्ठसिक्थोक्थानि नपुंसके ।

इदं काष्ठमित्यादि । काष्ठा दिगर्था स्त्रियाम् । इमाः काष्ठाः ।

चम्पूभारते—II. 6.

काष्ठां परां कार्मुककौशलस्य
काष्ठाः परास्तानपि तद्यशोऽपि ।
प्रज्ञाद्दगारोपयितुं प्रवृत्तो
व्यज्ञापयद्विष्णुपदीतनूजम् ॥ 3204 ॥

## ७१ । तीर्थप्रोथयूथगाथानि नपुंसके च ।

चात्पुंसि । अयं तीर्थः । इदं तीर्थम् ।

अस्मिन्नेव ग्रन्थे श्लो० 7. तीर्थोपहताः ।

## ७२ । नोपधः ।

अदन्तः पुंसि । इनः फेनः ।

## ७३ । जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।

पूर्वस्यापवादः ।

अस्मिन्नेव ग्रन्थे श्लो० 1667. जघनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 761. एणाजिनम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 42. तुहिनकिरणः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2947. कानने ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2950. वनम् ।

चम्पूभारते—III. 14.

ग—तथाभूतेष्वस्मासु यो मिथुनकृतोपवेशे देशे दशापि प्रविशेत् सोऽयं वृजिनं विहातुमजिनं परिधाय सुकृतसार्थसमर्थापकतीर्थपरिमृष्टास्वष्टासु दिक्षु तत्त्रिगुणसंख्याकान् पक्षान्क्षपयेदिति ॥ 3205 ॥

मिथुनं । वृजिनं । अजिनम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 862. विपिनम् ।

रघुवंशे—VI. 3.

वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशावः तुङ्गं नगोत्सङ्गमिवारुरोह ॥ 3206 ॥

अस्मिन्नेव ग्रन्थे श्लो॰ 2837. श्मशाने ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1446. रत्नम् ।

७४ । मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके च ।

चात्पुंसि । अयं मानः इदं मानम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 170. यानात् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 25. अभिधानपदम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 2606. आलानम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 3000. बकभवनवनम् ।

विश्वगुणादर्शे—5.

विश्वावलोकस्पृहया कदाचि-
द्विमानमारुह्य समानवेषम् ।

कृशानुविश्वावसुनामधेयं
गन्धर्वयुग्मं गगने चचार ॥ 3207 ॥

विमानम् ।

७५ । पोपधः ।

अदन्तः पुंसि । धूपः । दीपः । सर्पः ।

७६ । पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ।

इदं पापमित्यादि । समीपान्तरीपे । 'ऋक्पूः' (सू. 940) इत्यप्रत्ययः 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (सू. 941) इति ईत् ।

अस्मिन्नेव ग्रन्थे श्लो० 2176. पापमस्यास्तीति पापः । अर्शआद्यच् ।

अस्मिन्नेव ग्रन्थे श्लो० 3097. उडुपेन ।

अस्मिन्नेव ग्रन्थे श्लो० 2831. नलिनतल्पे ।

७७ । शूर्पकुणपकुतपद्वीपविटपानि नपुंसके च ।

अयं शूर्पः इदं शूर्पमित्यादि ।

अस्मिन्नेव ग्रन्थे श्लो० 2977. कुणपमर्शनदोषम् ।

रघुवंशे—VI. 38.

सङ्ग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥ 3208 ॥

द्वीपः द्वीपम् । 'ऋक्पूः' (सू. 940) इति अप्रत्ययः । 'द्व्यन्तः' (सू. 941) इति ईत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1875. विटपममुम् । विटान्पिबति पातीति च विटपा । 'आतोऽनुपसर्गे कः' (सू. 2915) इति कप्रत्ययः । तदा विशेष्यलिङ्गम् ।

७८ । भोपधः ।

स्तम्भः । कुम्भः ।

७९ । तलमं नपुंसकम् ।

पूर्वस्यापवादः ।

८० । जृम्भं नपुंसके च ।

जृम्भं जृम्भः ।

चम्पूरामायणे—I. 22.

ग.—पुरा खलु मम जृम्भारम्भे सम्भूतवान् जाम्बवानिति ॥ 3209 ॥

८१ । मोपधः ।

सोमः । भीमः ।

८२ । रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।

इदं रुक्ममित्यादि ।

अस्मिन्नेव ग्रन्थे ग. 1296. रुक्ममयकोशम् ।

८३ । सङ्ग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ।

चात्पुंसि । अयं सङ्ग्रामः इदं सङ्ग्रामम् इत्यादि ।

अस्मिन्नेव ग्रन्थे श्लो० 1385. संग्रामः ।

अस्मिन्नेव ग्रन्थे श्लो० 2253. होमः ।

८४ । योपधः ।

समयः । हयः ।

८५ । किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।

स्पष्टम् ।

८६ । गोमयकषायमलयान्वयाव्ययानि नपुंसके च ।

गोमयः गोमयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1492. गोस्तनगोमुखानि ।

८७ । रोपधः ।

क्षुरः । अङ्कुरः ।

८८ । द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीररन्ध्राश्रश्वभ्रभीरगभीरविचित्र-
केयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जरजठराजिरवैरचामरपुष्कर-
गह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्र-
मित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्र-
क्षत्राणि नपुंसके ॥

इदं द्वारमित्यादि ।

८९ । शुक्रमदेवतायाम् ।

इदं शुक्रं रेतः ।

९० । चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिर-
शिशिराणि नपुंसके च ।

चात्पुंसि । चक्रः । चक्रमित्यादि ।

९१ । षोपधः ।

वृषः वृक्षः ।

९२ । शिरीषशीर्षाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।

९३ । यूषकरीषमिषविषवर्षाणि नपुंसके च ।

चात्पुंसि । यूषः यूषमित्यादि ।

९४ । सोपधः ।

वत्सः । वायसः । महानसः ।

९५ । पनसबिसबुससाहसानि नपुंसके ।

९६ । चमसांसरसनिर्यासोपवासकार्पासवासभासकासकांसमांसानि नपुंसके च ।

चात्पुंसि । चमसं चमस इत्यादि ।

९७ । कंसं चाप्राणिनि ।

'कंसोऽस्त्री पानभाजनम्' II. ix. 32. इत्यमरः । प्राणिनि तु कंसो नाम कश्चिद्राजा ।

९८ । रश्मिदिवसाभिधानानि ।

एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 291. दिवसो तु मिलम् ।

९९ । दीधितिः स्त्रियाम् ।

पूर्वस्यापवादः ।

१०० । दिनाहनी नपुंसके ।

अयमप्यपवादः ।

१०१ । मानाभिधानानि ।

एतानि पुंसि स्युः । कुडबः । प्रस्थः ।

१०२ । द्रोणाढकौ नपुंसके च ।

द्रोणं द्रोणः ।

१०३ । खारीमानिके स्त्रियाम् ।

इयं खारी । इयं मानिका ।

१०४ । दाराक्षतलाजासूनां बहुत्वञ्च ।

इमे दाराः ।

१०५ । नाड्यपजनोपपदानि व्रणाङ्गपदानि ।

यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः अपाङ्गः जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ।

१०६ । मरुद्गरुत्तरदृत्विजः ।

अयं मरुत् ।

१०७ । ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिवलिकौलिमौलिरविकविकपिमुनयः ।

एते पुंसि स्युः । अयमृषिः ।

१०८ । ध्वजगजमुञ्जपुञ्जाः ।

एते पुंसि ।

१०९ । हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ।

एते पुंसि । अमरस्तु 'मुहूर्तो द्वादशास्त्रियां' I. iii. 11. इत्याह ।

११० । षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ।

अयं षण्डः ।

१११ । वंशांशपुरोडाशाः ।

अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । 'पौरोडाशपुरोडाशात् ष्ठन्' (सू. 1449) इति विकारप्रकरणे 'व्रीहेः पुरोडाशे' (सू. 1528) इति च निपातनात्, प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1842. पुरोडाशभुजामिष्टम् ।

११२ । ह्रदकन्दकुन्दबुद्बुदशब्दाः ।

अयं ह्रदः ।

चम्पूभारते—XII. 5.

ग.—इत्थं सोदरदायादवरूथिनीनां रणक्षितौ परिक्षयमभिवीक्ष्य महीयसा साध्वसेन मनसि विरचितप्रथमप्रवेशः कचन दुर्ज्ञेयदेशे गूढावस्थितिरेव महती ममायुष्टोमेष्टिरित्यालोच्य झटिति घटितकवचावकुण्ठनः पन्नगकेतनः स्यमन्तपञ्चकसामन्तं सागरगम्भीरं त्वरितनामानं कञ्चन महाह्रदमासाद्य मद्भुजेन चिरधार्यमाणां क्षोणीं त्वय्येव समर्पयिष्यामीति पातालवासिनः पन्नगाधिपतेर्द्विसहस्रविलोचनेषु रहसि वाचा निवेदयितुमिव दूरदूरं निमज्य स्वविद्यया सर्वमप्यम्भः स्तम्भयामास ॥ 3210 ॥

कञ्चन महाह्रदम् ।

११३ । अर्धपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।

अयमर्धः ।

११४ । पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ।

अयं पल्लव इत्यादि ।

११५ । सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ।

एते पुंसि । अयं सारथिः ।

॥ इति पुल्लिङ्गाधिकारः ॥

—:*:—

## अथ नपुंसकलिङ्गाधिकारः

—:※:—

### ११६ । नपुंसकम् ।

अधिकारोऽयम् ।

### ११७ । भावे ल्युडन्तः ।

हसनम् । भावे किम् । पचनोऽग्निः । इध्मव्रश्चनः कुठारः ।

### ११८ । निष्ठा च ।

भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितं गीतम् ।

### ११९ । त्वष्यञौ तद्धितौ ।

शुक्लत्वम् शौक्ल्यम् ।

चातुर्यं चातुरी । सामग्र्यं सामग्री । औचित्यं औचिती । ष्यञन्ष्विवासामर्थ्यात्पक्षे स्त्रीत्वम् ।

### १२० । कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ।

ब्राह्मणस्य कर्म ब्राह्मण्यम् ।

### १२१ । यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि ।

एतदन्तानि क्लीबानि । 'स्तेनाद्यन्नलोपश्च' ( सू. 1790 ) स्तेयम् । 'सख्युर्यः' (सू. 1791 ) सख्यम् । 'कपिज्ञात्योर्ढक्' (सू. 1796) कापेयम् । 'पत्यन्तपुरोहितादिभ्यो यक्' (सू. 1793) आधिपत्यम् । 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' (सू. 1794) औष्ट्रम् । 'हायनान्तयुवादिभ्योऽण्' (सू. 1795 ) द्वैहायनम् । 'द्वन्द्वमनोज्ञादिभ्यो वुञ्' ( सू. 1798 ) पितापुत्रकम् । 'होत्रादिभ्यश्छः' ( सू. 1800 ) अच्छावाकीयम् । 'अव्ययीभावः' ( सू. 659 ) अधिस्त्रि ।

१२२ । द्वन्द्वैकत्वम् ।

पाणिपादम् ।

१२३ । अभाषायां हेमन्तशिशिरावहोरात्रे च ।

स्पष्टम् ।

१२४ । अनञ्कर्मधारयस्तत्पुरुषः ।

अधिकारोऽयम् ।

१२५ । अनल्पे छाया ।

शरच्छायम् । 'छाया बाहुल्ये' ( सू. 825 ) इति वा नपुंसकत्वम् ।

१२६ । राजामनुष्यपूर्वा सभा ।

इनसभमित्यादि । 'सभाराजामनुष्यपूर्वा ( सू. 826 ) इति वा नपुंसकत्वम् ।

१२७ । सुरासेनाच्छायाशालानिशा स्त्रियां च ।

'विभाषासेनासुराच्छायाशालानिशानां ( सू. 828 ) इति क्लीबत्वम् ।

१२८ । परवत् ।

अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् 'रात्राह्नाहाः पुंसि' (सू. 814) इति पुंस्त्वम् ।

१२९ । अपथपुण्याहे नपुंसके ।

'अपथं नपुंसकम्' ( सू. 815 ) इति नपुंसकत्वम् ।

१३० । संख्यापूर्वा रात्रिः ।

त्रिरात्रम् । संख्यापूर्वेति किम् । सर्वरात्रः । 'संख्यापूर्वं रात्रं क्लीबम्' (सू. 814) इति नपुंसकत्वम् ।

१३१ । द्विगुः स्त्रियाञ्च ।

त्र्यवस्थया । पञ्चफली । त्रिभुवनम् ।

१३२ । इसुसन्तः ।

हविः । धनुः ।

१३३ । अर्चिः स्त्रियाम् च ।

इसन्तत्वेऽप्यर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वार्चिः ।

१३४ । छदिः स्त्रियामेव ।

इयं छदिः । छाद्यतेऽनेनेति छदेश्चुरादिण्यन्तात् 'अर्चिशुचि' (सू. 265) इत्यादिना इस् । 'इस्मन्' (सू. 2985) इत्यादिना ह्रस्वः । 'पटलं छदिः' II. ii. 15. इत्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीवतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः ।

१३५ । मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ।

एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादानाह त्रिसूत्र्या ।

१३६ । सीरार्थौदनाः पुंसि ।

अस्मिन्नेव ग्रन्थे श्लो० 1057. सीरः पाणौ यस्य स सीरपाणिः ।

१३७ । वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।

वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् ।

१३८ । अटवी स्त्रियाम् ।

चम्पूभारते—I. 15.

ग—अथ कदाचन मृगयोपलालितहृदयो नरेश्वरोऽयमश्वे शशिश्वेतरोचिषि विजितमातरिश्वनि विश्वातिशायिनि कृताधिरोहः पार्श्वविधृतविश्वकद्रुभिरनेकवागुराद्युपकरणैर्योधैरनुद्रुतो मृदुभद्रविनयाभ्यां यदुभद्रतनयाभ्यामनुरुद्धः सिद्धगणगणनीयमहिमवतो हिमवतो जगाहे महतीमटवीतटवीथिकाम् ॥ 3211 ॥

१३९ । लोपधः ।

कुलं कूलं स्थलम् ।

अस्मिन्नेव ग्रन्थे श्लो० 452. कूलस्थस्य ।

अस्मिन्नेव ग्रन्थे श्लो० 2982. स्थले ।

अस्मिन्नेव ग्रन्थे श्लो० 143. स्थलीः अकृत्रिमा भुवः । 'जानपद' (सू. 500) इत्यादिना अकृत्रिमार्थे ङीष् ।

१४० । तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि ।

अयं तूलः ।

१४१ । शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालबाल-निगलपलालबिडालखिलशूलाः पुंसि च ।

चात्क्लीबे । इदं शीलमित्यादि ।

१४२ । शतादिस्संख्या ।

शतम् । सहस्रम् ।

१४३ । शतायुतप्रयुताः पुंसि च ।

अयं शतः । इदं शतमित्यादि ।

१४४ । लक्षा कोटिः स्त्रियाम् ।

इयं लक्षा । इयं कोटिः । 'वा लक्षा नियुतं च तत्' III. v. 24. इत्यमरात् क्लीबेऽपि । लक्षम् ।

१४५ । शङ्कुः पुंसि ।

सहस्रः क्वचित् । अयं सहस्रः । इदं सहस्रम् ।

१४६ । मन्द्व्यच्कोऽकर्तरि ।

मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । द्व्यच्कः किम् । अणिमा । महिमा । अकर्तरि किम् । ददातीति दामा ।

१४७ । ब्रह्मन्पुंसि च ।

अयं ब्रह्मा । इदं ब्रह्म ।

१४८ । नामरोमणी नपुंसके ।

'मन् द्व्यच्कः' इत्यस्यायं प्रपञ्चः ।

१४९ । असन्तो द्व्यच्कः ।

यशः । मनः । तपः । द्व्यच्कः किम् । चन्द्रमाः ।

१५० । अप्सराः स्त्रियाम् ।

एता अप्सरसः । प्रायेणायं बहुवचनान्तः ।

१५१ । त्रान्तः ।

पत्रम् । छत्रम् ।

१५२ । यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।

१५३ । भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि ।

अयं भृत्रः । न मित्रममित्रः । 'तस्य मित्राण्यमित्रास्ते' इति माघः । 'स्याताममित्रो मित्रे च' इति च ।

माघे—II. 101.

तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः ।
अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥ 3212 ॥

ये च तस्य मित्राणि ये च तेऽमित्राः ।

अस्मिन्नेव ग्रन्थे श्लो० 3026. अमित्रौ मित्रे च ।

१५४ । पत्रपात्रपवित्रसूत्रछत्राः पुंसि च ।

१५५ । बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि ।

बलम् वीर्यम् ।

१५६ । पद्मकमलोत्पलानि पुंसि च ।

पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः । अमरोऽप्याह 'वा पुंसि पद्मं नलिनम्' I.ix. 40. इति ।

१५७ । आहवसङ्ग्रामौ पुंसि । १५८ । आजिः स्त्रियमेव ।

१५९ । फलजातिः ।

फलजातिवाचिशब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् ।

१६० । वृक्षजातिः स्त्रियामेव ।

क्वचिदेवेदम् । हरीतकी ।

१६१ । वियज्जगत्सकृच्छकन्पृषच्छकृद्यकृदुदश्वितः ।

एते क्लीबाः स्युः ।

१६२ । नवनीतावतानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि ।

१६३ । श्राद्धकुलिशदैवपीठकुण्डाङ्कदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्वबीजानि ।

एतानि क्लीबे स्युः ।

१६४ । दैवं पुंसि च ।

दैवम् । दैवः ।

१६५ । धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ।

इदं धान्यमित्यादि ।

१६६ । द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ।

१६७ । अक्षमिन्द्रिये ।

इन्द्रिये किम् । रथाङ्गादौ मा भूत् ।

॥ इति नपुंसकलिङ्गाधिकारः ॥

## ॥ अथ स्त्रीपुंलिङ्गाधिकारः ॥



### १६८ । स्त्रीपुंसयोः ।

अधिकारोऽयम् ।

### १६९ । गोमणियष्टिमुष्टिपाटलिबस्तिशाल्मलित्रुटिमसिमरीचयः ।

इयमयं वा गौः ।

### १७० । मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ।

इयमयं वा मृत्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 68. मृत्युरेव द्विपः मृत्युद्विपः ।

### १७१ । गुणवचनमुकारान्तं नपुंसकञ्च ।

त्रिलिङ्गमित्यर्थः । पटु पटुः । 'वोतो गुणवचनात्' (सू. 502) इति स्त्रियां वा ङीष् । पटुः पट्वी ।

### १७२ । अपत्यार्थतद्धिते ।

औपगवः औपगवी ।

## ॥ इति स्त्रीपुंलिङ्गाधिकारः ॥



## ॥ अथ पुंनपुंसकलिङ्गाधिकारः ॥

—: * :—

१७३ । पुंनपुंसकयोः ।

अधिकारोऽयम् ।

१७४ । घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः

अयं घृतः । इदं घृतम् ।

१७५ । शृङ्गार्घनिदाघोद्यमशल्यदृढाः ।

अयं शृङ्गः । इदं शृङ्गम् ।

१७६ । व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्मार्धर्चदर्भपुच्छाः ।

अयं व्रजः । इदं व्रजम् । 'अर्धर्चाः पुंसि च' (सू. 816) इति पुंलिङ्गोऽपि । अर्धर्चादिः २. १८.

अस्मिन्नेव ग्रन्थे श्लो० 6. मधुः ।

अस्मिन्नेव ग्रन्थे श्लो० 870. मधुम् । मधुशब्दस्यार्धर्चादित्वात्पुंलिङ्गत्वम् ।

'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकाः ।
अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः ॥' इति ।

अर्धर्च इत्यत्र अर्धं ऋचः अर्धर्चः अर्धर्चम् । 'अर्धं नपुंसकं' (सू. 713) इति समासः । 'ऋक्पूः' (सू. 940) इति समासान्त अकारः ।

१७७ । कबन्धौषधायुधान्ताः ।

स्पष्टम् ।

१७८ । दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः ।

एते पुंनपुंसकयोः स्युः । 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च 'जानपद' (सू. 500) इत्ययोविकारे ङीष् । कुशी ।

१७९ । गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ।

॥ इति पुंनपुंसकलिङ्गाधिकारः ॥

—※—

॥ अथावशिष्टलिङ्गाधिकारः ॥

—: * :—

१८० । अवशिष्टलिङ्गम् । १८१ । अव्ययं कतियुष्मदस्मदः ।

१८२ । ष्णान्ता संख्या ।

शिष्टा परवत् । एकः पुरुषः । एका स्त्री । एकं कुलम् ।

१८३ । गुणवचनश्च ।

शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ।

१८४ । कृत्याश्च ।

१८५ । करणाधिकरणयोर्ल्युट् च ।

१८६ । सर्वादीनि सर्वनामानि ।

स्पष्टार्थेयं त्रिसूत्री ।

॥ इत्यवशिष्टलिङ्गाधिकारः ॥

॥ इति लिङ्गानुशासनप्रकरणं समाप्तम् ॥

॥ इति श्रीवीरराघवाचार्यसंपादिता

सोदाहरणश्लोका पाणिनिसूत्रव्याख्या समाप्ता ॥

॥ शुभमस्तु ॥

—×:*:×—

# APPENDIX I

## ॥ सूत्रसूची ॥

—:o:—


| | सं. पृ. |
|---|---|
| **अ** | |
| अंशं हारी | I. ५७७ |
| अकथितं च | I. ५३ |
| अकर्तरि च कारके | II. ५२८ |
| अकर्तर्यृणे पञ्चमी | I. १०५ |
| अकर्मकाच्च | II. १४५ |
| अकर्मकाच्च | II. १५८ |
| अकर्मकाच्च | II. १६५ |
| अकृच्छ्रे प्रियसुखयोः | I. ६७४ |
| अकृत्सार्वधातुकयोः | II. २० |
| अकेनोर्भविष्यदा- | I. १४० |
| अक्षेषु ग्लहः | II. ५४८ |
| अक्ष्णोऽदर्शनात् | I. ३२० |
| अगारान्ताट्ठन् | I. ५०२ |
| अगारैकदेशे | II. ५५१ |
| अग्नेर्ढक् | I. ४१९ |
| अग्नेः स्तुत्स्तोमसोमाः | I. ३०८ |
| अग्नौ चेः | II. ३१० |
| अग्नौ परिचाय्य- | II. २३६ |
| अग्राख्यायामुरसः | I. २४० |
| अग्राद्यत् | II. ५९५ |
| अग्रान्तशुद्धशुभ्र- | I. २८० |
| अङ्गुलेर्दारुणि | I. २६५ |
| अच उपसर्गात्तः | II. ३३३ |
| अचः कर्मकर्तरि | II. १९६ |
| अचतुरविचतुर- | I. ३२० |
| अचित्तहस्तिधेनोः | I. ४२८ |
| अचो यत् | II. २१८ |
| अच्प्रत्यन्ववपूर्वात् | I. ३१९ |
| अजर्यं सङ्गतम् | II. २२४ |
| अजादी गुणवचनादेव | I. ६३२ |
| अजाद्यतष्टाप् | I. १ |
| अजाद्यदन्तम् | I. २९७ |
| अजेर्व्यघञपोः | II. २० |
| अञ्चेः पूजायाम् | II. ३२२ |
| अञ्चेर्लुक् | I. ६२३ |
| अञ्जेः सिचि | II. ७६ |
| अञ् नासिकायाः | I. २६५ |
| अणावकर्मकात् | II. १९१ |
| अणिनुणः | II. ५३७ |
| अण् कर्मणि च | II. ५२७ |
| अण् कुटिलिकायाः | I. ४९४ |
| अण् च | I. ५९१ |
| अत आदेः | II. ६ |
| अत इञ् | I. ३८९ |
| अत इनिठनौ | I. ६०० |
| अतिथेर्ञ्यः | I. ६५४ |
| अतिरतिक्रमणे च | I. ७१ |
| अतिशायने तमबिष्ठनौ | I. ६३० |
| अतेः शुनः | I. २४० |

| | | | |
|---|---|---|---|
| अतो हलादेर्लघोः | II. १७ | अनुग्वलंगामी | I. ५५६ |
| अत्यन्तसंयोगे च | I. १८२ | अनुदात्तङितः | II. १ |
| अत्रिभृगुकुत्स- | I. ४०० | अनुदात्तेतश्च | II. ३६० |
| अत्स्मृदृत्वर- | II. ९० | अनुपदसर्वान्न- | I. ५५४ |
| अर्तिह्रीव्लीरी- | II. ९० | अनुपद्यन्वेष्टा | I. ५८१ |
| अदिप्रभृतिभ्यः शपः | II. ६१ | अनुपराभ्यां कृञः | II. १८६ |
| अदूरभवश्च | I. ४३५ | अनुपसर्गाज्ज्ञः | II. १८४ |
| अदोऽनन्ने | II. २९९ | अनुपसर्गात्फुल्ल- | II. ३१९ |
| अधिकम् | I. ५७७ | अनुपसर्गाद्वा | II. १६४ |
| अधिकरणवाचिनश्च | I. १३० | अनुपसर्गाल्लिम्प- | II. २४३ |
| अधिकरणवाचिना च | I. १९३ | अनुपसर्जनात् | I. ९ |
| अधिकरणे बन्धः | II. ५८७ | अनुप्रतिगृणश्च | I. ८९ |
| अधिकरणे शेतेः | II. २६० | अनुर्यत्समया | I. १७२ |
| अधिपरी अनर्थकौ | I. ७१ | अनुर्लक्षणे | I. ६८ |
| अधिरीश्वरे | I. १५४ | अनुविपर्यभिनि- | II. ३९ |
| अधिशीङ्स्थासां कर्म | I. ६३ | अनुशातिकादीनाञ्च | I. ४६९ |
| अधीगर्थदयेशां | I. ११४ | अनुष्यानन्तर्ये | I. ३९१ |
| अधुना | I. ६१९ | अनेकमन्यपदार्थे | I. २५३ |
| अधेः प्रसहने | II. १५८ | अनो बहुव्रीहेः | I. ६ |
| अध्यायन्यायोद्याव- | II. ५७१ | अनोरकर्मकात् | II. १६७ |
| अध्वनो यत्खौ | I. ५५६ | अनोऽश्मायःसरसां | I. २४० |
| अन उपधालोपिनः | I. ७ | अनौ कर्मणि | II. ३१३ |
| अनत्याधान उरसि- | I. २२१ | अन् | I. ४०२ |
| अनद्यतने र्हिल् | I. ६१९ | अन्तःपूर्वपदाट्ठञ् | I. ४६९ |
| अनभिहिते | I. ५२ | अन्तरदेशे | I. ५६८ |
| अनवक्लृप्त्यमर्ष- | II. २०७ | अन्तरान्तरेण युक्ते | I. ६७ |
| अनश्च | I. १७७ | अन्तर्घनो देशे | II. ५५० |
| अनुकम्पायाम् | I. ६४४ | अन्तर्धौ येनादर्शन- | I. ९९ |
| अनुकाभिकाभीकः | I. ५७७ | अन्तर्वत्पतिवतोर्नुक् | I. २२ |
| अनुगवमायामे | I. ३२८ | अन्तात्यन्ताध्व- | II. २८५ |

| | | | |
|---|---|---|---|
| अन्तिकबाढयो- | I. ६३४ | स्व प्रत्ययात् | II. ५५२ |
| अन्नाण्णः | I. ५०५ | अभिजनश्च | I. ३०७ |
| अन्वेन व्यञ्जनम् | I. १८५ | अभिज्ञावचने लृट् | II. १९९ |
| अन्यथैवंकथमित्थंसु | II. ५८२ | अभिनिविशश्च | I. ६४ |
| अन्यारादितरर्ते- | I. १०१ | अभिप्रत्यतिभ्यः | II. १८६ |
| अन्येभ्योऽपि दृश्यते | II. ३७८ | अभिरभागे | I. ७० |
| अन्येभ्योऽपि दृश्यन्ते | II. ३०० | अभिविधौ भावे | II. ५३७ |
| अन्येषामपि दृश्यते | II. ५९५ | अभेश्चाविदूर्ये | II. ३२७ |
| अन्येष्वपि दृश्यते | II. ३१३ | अभ्यमित्राच्छ च | I. ५५६ |
| अन्वच्यानुलोम्ये | II. ५९३ | अमनुष्यकर्तृके | II. २९१ |
| अन्ववतप्ताद्रहसः | I. ३२७ | अमावस्यदन्य- | II. २३३ |
| अपघनोऽङ्गम् | II. ५५१ | अमूर्धमस्तकात् | I. ३३४ |
| अपचितश्च | II. ३३० | अमैवाव्ययेन | I. २३४ |
| अपथं नपुंसकम् | I. २४५ | अम्बाम्बगोभूमि- | II. २५३ |
| अपपरिबहिरञ्चवः | I. १६७ | अयनं च | II. ५६९ |
| अपपरी वर्जने | I. १०४ | अरण्यान्मनुष्ये | I. ४४७ |
| अपरस्पराः | I. ३८० | अरुर्द्विषदजन्तस्य | II. २७० |
| अपरोक्षे च | II. २०२ | अरुर्मनश्चक्षुः- | I. ६६१ |
| अपवर्गे तृतीया | I. ७६ | अर्तिलूधूसूखन- | II. ३८१ |
| अपस्करो रथाङ्गम् | I. ३८१ | अर्थे विभाषा | I. ३६३ |
| अपह्नवे ज्ञः | II. १६४ | अर्देस्संनिविभ्यः | II. ३२७ |
| अपाच्चतुष्पाच्छकुनि- | II. १३५ | अर्धं नपुंसकम् | I. १९७ |
| अपादाने चाहीय- | I. ६६० | अर्धर्चाः पुंसि च | I. २४५ |
| अपादाने पञ्चमी | I. ९६ | अर्वाच्च | I. २४० |
| अपादाने परीप्सायां | II. ५९० | अर्यः स्वामिवैश्ययोः | II. २२४ |
| अपाद्वदः | II. १८२ | अर्शआदिभ्योऽच् | I. ६०८ |
| अपिः पदार्थसम्भावना- | I. ७२ | अर्हः | II. २५८ |
| अपूर्वपदादन्यतर | I. ४०५ | अर्हः प्रशंसायाम् | II. ३४९ |
| अपे क्लेशतमसोः | II. २९० | अर्हे कृत्यतृचश्च | II. २१२ |
| अपे च लषः | II. ३५८ | अलंकृञ्निराकृञ्- | II. ३५० |

अलंखल्वोः II. ५७६
अल्पाख्यायाम् I. २७८
अल्पाच्तरम् I. २९७
अल्पे I. ६४५
अवद्यपण्यवर्या- II. २२२
अवयवे च प्राण्यौषधि- I. ४८१
अवसमन्धेभ्यस्तमसः I. ३२५
अवाच्चालम्बन- II. १४
अवात्कुटारच्च I. ५६२
अवाद् ग्रः II. १६८
अवारपारात्यन्त- I. ५५५
अवेः कः I. ६५५
अवे ग्रहो वर्ष- II. ५३९
अवोदोर्नियः II. ५३२
अव्यक्तानुकरणात् I. ६६५
अव्ययं विभक्ति- I. १५७
अव्ययसर्वनाम्नां I. ६४३
अव्ययात्त्यप् I. ४४३
अव्ययीभावः I. १५७
अव्ययीभावश्च I. १६६
अव्ययीभावे चाकाले I. १६६
अव्ययीभावे शरत्- I. १७६
अव्ययेऽयथाभिप्रेत- II. ५९२
अशनायोदन्य- I. ११०
अशब्दे यत्खौ I. ४६७, ४७२
अशाला च I. २५१
अश्वक्षीरवृष- II. ११७
अश्वपत्यादिभ्यश्च I. ३८४
अश्वस्यैकाहगमः I. ५५७
अषडक्षाशितङ्गु- I. ६४९
अषष्ठ्यतृतीया- I. ३६३
अष्टनः संज्ञायाम् I. ३७५
असूर्यललाटयोः II. २७५
अस्तं च I. २२०
अस्ताति च I. ६२२
अस्ति नास्ति दिष्टं I. ५००
अस्मदो द्वयोश्च I. २४६
अस्मायामेधास्रजः I. ६०५
अस्य च्वौ I. ६६०
अस्यतिवक्तिख्याति- II. ६३
अहंशुभमोर्युस् I. ६१३
अहस्सर्वैकदेश- I. २३६
अह्नष्टखोरेव I. २३७
अह्नोऽदन्तात् I. २३८
अह्नोऽह्न एतेभ्यः I. २३८

## आ

आकर्षादिभ्यः कन् I. ५७७
आकालिकडाद्यन्त- I. ५३२
आक्रोशे नञ्यनिः II. ५६७
आक्रोशेऽवन्योर्ग्रहः II. ५३७
आ क्वेस्तच्छील- II. ३४९
आख्यातोपयोगे I. ९९
आङ उद्गमने II. १६२
आङि ताच्छील्ये II. २५८
आङि युद्धे II. ५४९
आङो दोऽनास्य- II. १३२
आङो यमहनः II. १४६
आङो यि II. २२०
आङ्मर्यादाभिविध्योः I. १६८

| | |
|---|---|
| आङ्मर्यादावचने | I. १०४ |
| आ च हौ | II. ६९ |
| आज्ञायिनि च | I. ३३१ |
| आढ्यसुभगस्थूल- | II. २९३ |
| आतश्चोपसर्गे | II. २४२ |
| आतश्चोपसर्गे | II. ५६२ |
| आतोऽनुपसर्गे | II. २५० |
| आतो मनिन्क्वनिप्- | II. ५९४ |
| आतो युक् चिण्कृतोः | II. १९४ |
| आतो युच् | II. ५७५ |
| आत्मनश्च | I. ३३२ |
| आत्मनेपदेष्वन्य- | II. ५९ |
| आत्मनेपदेष्वन्य- | II. १४८ |
| आत्माने खश्च | II. ३०६ |
| आत्मन्विश्वजन- | I. ५१७ |
| आत्माध्वानौ खे | I. ५१७, ५१८ |
| आदरानादरयोः | I. २२० |
| आदिकर्मणि क्तः | II. ३२४ |
| आदितश्च | II. ३२० |
| आदृगमहनजनः | II. ३७५ |
| आधारोऽधिकरणम् | I. १४६ |
| आनङ् ऋतो द्वन्द्वे | I. ३०६ |
| आनय्योऽनित्ये | II. २३५ |
| आने मुक् | II. ३४४ |
| आन्महतः समानाधिकरण- | I. २४२ |
| आपोऽन्यतरस्याम् | I. २८६ |
| आप्ज्ञप्यृधामीत् | II. १०१ |
| आप्रपदं व्याप्नोति | I. ५५४ |
| आभीक्ष्ण्ये णमुल् च | II. ५८१ |
| आम्प्रत्ययवत्कृञः | II. ५ |
| आयुक्तकुशलाभ्यां | I. १५० |
| आयुधाच्छ च | I. ४९३ |
| आरगुदीचाम् | I. ३९८ |
| आर्धधातुके | II. ६२ |
| आलजाटचौ | I. ६०७ |
| आवश्यकाधमर्ण्ये | II. ५७६ |
| आवसथात्ष्ठल् | I. ५०२ |
| आशंसायां भूतवच्च | II. २०५ |
| आशिते भुवः | II. २८३ |
| आशिषि च | II. २४८ |
| आशिषि नाथः | I. १२० |
| आशिषि हनः | II. २८९ |
| आश्चर्यमनित्ये | I. ३८१ |
| आसन्दीवदष्ठीवत् | I. ५८३ |
| आसुयुवपिरपि- | II. २३४ |
| आस्पदं प्रतिष्ठायां | I. ३८० |
| आहस्थः | II. ६४ |
| आहि च दूरे | I. ६२५ |
| **इ** | |
| इकः काशे | I. ३७४ |
| इको ह्रस्वोऽङ्यः | I. ३५० |
| इगन्ताच्च लघुपूर्वात् | I. ५४८ |
| इगुपधज्ञाप्री- | II. २४१ |
| इङश्च | II. ५३० |
| इङ्धार्योः | II. ३४८ |
| इच्कर्मव्यतिहारे | I. २७३ |
| इच्छार्थेभ्यो विभाषा | II. २११ |
| इच्छार्थेषु लिङ्- | II. २१० |
| इजादेश्च गुरुमतः | II ५ |

इणो गा लुङि II. ६५
इणो यण् II. ६४
इण्णशिजिसर्तिभ्यः II. ३७०
इतश्चानिञः I. ३९३
इतराभ्योऽपि I. ६१७
इतरेतरान्योन्य- II. १२९
इतो मनुष्यजातेः I. ४७
इत्थंभूतलक्षणे I. ७८
इदं किमोरीश्की I. ३६०
इदमस्थमुः I. ६२१
इदमो र्हिल् I. ६१९
इदमो हः I. ६१७
इदितो नुम्धातोः II. ७
इद्दरिद्रस्य II. ६७
इद्वृद्धौ I. ३०९
इनः स्त्रियाम् I. २८४
इनण्यनपत्ये I. ४२२
इनित्रकट्यचश्च I. ४३२
इन्द्रवरुणभवशर्व I. ३९
इरितो वा II. ८
इवे प्रतिकृतौ I. ६४८
इषुगमियमां छः II. ५६
इष्टकेषीकामालानां I. ३५३
इष्टादिभ्यश्च I. ५८०
इष्ठस्य यिट् च I. ६३९
इसुसुक्तान्तात्कः I. ४१६

ई

ई च खनः II. २२७
ई च गणः II. ९२
ईदग्नेः सोमवरुणयोः I. ३०८
ईदासः II. ३४६
ईद्यति II. २१९
ईयसश्च I. २८७
ईषदकृता I. २१५
ईषदर्थे I. ३६४
ईषदसमाप्तौ I. ६४१
ईषद्दुस्सुषु II. ५७२

उ

उगवादिभ्यो यत् I. ५१५
उगितश्च I. २
उगितश्च I. ३४३
उग्रम्पश्येरम्मद- II. २७६
उताप्योस्समर्थयोः II. २०९
उत्क उन्मनाः I. ५७९
उत्करादिभ्यश्छः I ४३९
उत्तमैकाभ्यां च I. २४०
उत्तराच्च I. ६२५
उत्तराधरदक्षिणा- I. ६२३
उत्सादिभ्योऽञ् I. ३८५
उदकस्योदः संज्ञायाम् I. ३४७
उदङ्कोऽनुदके II. ५७१
उदन्वानुदधौ च I. ५८४
उदश्चरस्सकर्मकात् II. १६९
उदश्वितोऽन्यतरस्यां I. ४१६
उदि कूले रुजिवहोः II. २७३
उदि ग्रहः II. ५३४
उदितो वा II. ५७९
उदि श्रयतियौति- II. ५३८

| | |
|---|---|
| उदीचामिञ् | I. ४०७ |
| उदुपधाद्भावादि- | II. ३२५ |
| उदोऽनूर्ध्वकर्मणि | II. १४१ |
| उद्घनोऽत्याधानम् | II. ५५१ |
| उद्विभ्यां काकुदस्य | I. २८१ |
| उद्विभ्यां तपः | II. १४५ |
| उन्न्योर्ग्रः | II. ५३२ |
| उपघ्न आश्रये | II. ५५२ |
| उपजानूपकर्ण- | I. ४६४ |
| उपज्ञाते | I. ४७९ |
| उपज्ञोपक्रमम् | I. २४८ |
| उपदंशस्तृतीयायां | II. ५८९ |
| उपपदमतिङ् | I. २२६ |
| उपपराभ्यां | II. १६१ |
| उपमानाच्च | I. २७८ |
| उपमानादाचारे | II. ११२ |
| उपमानानि सामान्य- | I. २०६ |
| उपमाने कर्मणि च | II. ५८८ |
| उपमितं व्याघ्रादिभिः | I. २०६ |
| उपर्यध्यधसः | I. ६७१ |
| उपर्युपरिष्टात् | I. ६२३ |
| उपसर्गप्रादुर्भ्यां | II. ६६ |
| उपसर्गस्य घञ्यमनुष्ये | I. ३७१ |
| उपसर्गस्यायतौ | II. २८ |
| उपसर्गाच्च | I. २६७ |
| उपसर्गात्खल्घञोः | II. ५७४ |
| उपसर्गात्सुनोति | II. १० |
| उपसर्गादध्वनः | I. ३२८ |
| उपसर्गादसमासे | II. १९ |
| उपसर्गाद्बहुलम् | I. २६८ |
| उपसर्गे घोः किः | II. ५५५ |
| उपसर्गे च संज्ञायां | II. ३१३ |
| उपसर्गेऽदः | II. ५४३ |
| उपसर्गे रुवः | II. ५३० |
| उपसर्या काल्या- | II. २२४ |
| उपाच्च | II. १८८ |
| उपात्प्रतियत्न- | II. ७८ |
| उपात्प्रशंसायाम् | II. २२१ |
| उपाद्यमः स्वकरणे | II. १७३ |
| उपाधिभ्यां त्यकन् | I. ५६३ |
| उपान्मन्त्रकरणे | II. १४३ |
| उपान्वध्याङ्वसः | I. ६४ |
| उपेयिवाननाश्वान्- | II. ३४२ |
| उपोऽधिके च | I. ६९ |
| उप्ते च | I. ४६६ |
| उभयप्राप्तौ कर्मणि | I. १२७ |
| उभादुदात्तो नित्यम् | I. ५७२ |
| उरःप्रभृतिभ्यः कप् | I. २८२ |
| उरसोऽण् च | I. ५०८ |
| उषविदजागृभ्यः | II. ३३ |
| उषासोषसः | I. ३०९ |
| उष्ट्राद्वुञ् | I. ४८४ |


ऊ


| | |
|---|---|
| ऊङुतः | I. ४७ |
| ऊतियूतिजूतिसाति- | II. ५५७ |
| ऊदनोर्देशे | I. ३१९ |
| ऊधसोऽनङ् | I. २१ |
| ऊरूत्तरपदादौपम्ये | I. ४८ |
| ऊर्ध्वाद्विभाषा | I. २७३ |

ऊर्ध्वे शुषिपूरोः II. ५८७
ऊर्यादिच्विडाचश्च I. २१८
ऊषसुषिमुष्कमधोः I. ५९३

ऋ

ऋक्पूरब्धूःपथामानक्षे I. ३१६
ऋतश्छञ् I. ४७३
ऋतूक्थादिसूत्रान्तात् I. ४३३
ऋतोरण् I. ५३१
ऋतो विद्यायोनि- I. ३४०
ऋदुपधाच्चाक्लृपि- II. २२७
ऋदृशोऽङि गुणः II. ५७
ऋद्धनोः स्ये II. ५०
ऋष्यन्धकवृष्णि- I. ३९२
ऋहलोर्ण्यत् II. २३१

ॠ

ॠदोरप् II. ५४१

ए

एकं बहुव्रीहिवत् I. ६७२
एकगोपूर्वाट्ठञ् I. ६०४
एकधराल्लुक् च I. ५०४
एकस्य सकृच्च I. ६५२
एकहलादौ पूरयितव्ये I. ३४९
एकाच्च प्राचाम् I. ६४७
एकादाकिनिच्च I. ६२९
एकाद्धो ध्यमुञ् I. ६२६
एङ् प्राचां देशे I. ४४७
एजेः खश् II. २७०
एण्या ढञ् I. ४८४
एतिस्तुशास्वृ- II. २२७
एधाच्च I. ६२६
एनपा द्वितीया I. ११३
एनबन्यतरस्यां I. ६२३
एरच् II. ५४१

ऐ

ऐषमो ह्यःश्वसः ४४५

ओ

ओजस्सहोऽम्भः I. ३३१
ओजस्सहोऽम्भसा I. ४९५
ओदितश्च II. ३१६
ओरञ् I. ४८२
ओरावश्यके II. २३४
ओर्गुणः I. २६२
ओषधेरजातौ I. ६५७

औ

औक्षमनपत्ये I. ४०५

क

कंशंभ्यां बभयुः I. ६१२
कंसीयपरशव्ययोः I. ४८६
ककुदस्यावस्थायां I. २८१
कच्छादिभ्यश्च I. ४४८
कडङ्करदक्षिणाच्छ I. ५२५
कण्ड्वादिभ्यो यक् II. १२६
कन्यादिभ्यो ढकञ् I. ४४०
कथादिभ्यष्ठक् I. ५११
कन्यायाः कनीन च I. ३९३
कपिज्ञात्योर्ढक् I. ५४५
कपिष्ठलो गोत्रे II. ३३४
कम्बोजाल्लुक् I. ४११

करणाधिकरणयोश्च II. ५६८
करणे च स्तोकाल्प- I. १०७
करणे यजः II. ३०७
करणेऽयोविद्रुषु II. ५५१
करणे हनः II. ५८५
कर्कलोहितादीकक् I. ६४९
कर्णललाटात्कनलङ्कारे I. ४७२
कर्णे लक्षणस्याविष्ट- I. ३६७
कर्तरि कर्म- II. १२७
कर्तरि कृत् II. २१५
कर्तरि च I. १९५
कर्तरि भुवः खिष्णुच् II. २९४
कर्तर्युपमाने II. ३०४
कर्तुः क्यङ् सलोपश्च II. ११२
कर्तुरीप्सिततमं कर्म I. ५२
कर्तृकरणयोस्तृतीया I. ७३
कर्तृकरणे कृता I. १८४
कर्तृकर्मणोः कृति I. १२४
कर्तृकर्मणोश्च II. ५७४
कर्तृस्थे चाशरीरे II. १५९
कर्त्रोर्जीवपुरुषयोः II. ५८७
कर्मण उकञ् I. ५३०
कर्मणा यमभिप्रैति I. ८०
कर्मणि घटोऽठच् I. ५६४
कर्मणि च I. १९४
कर्मणि च येन II. ५६७
कर्मणि दृशिविदोः II. ५८२
कर्मणि द्वितीया I. ५३
कर्मणि भृतौ II. २६७
कर्मणि हनः II. ३०८
कर्मणो रोमन्थ- II. ११८
कर्मण्यग्न्याख्यायाम् II. ३१०
कर्मणीनि विक्रियः II. ३११
कर्मण्यण् II. २४८
कर्मण्यधिकरणे च II. ५५५
कर्मण्याक्रोशे कृञः II. ५८१
कर्मन्दकृशाश्वादिनिः I. ४७८
कर्मप्रवचनीययुक्ते I. ६८
कर्मप्रवचनीयाः I. ६८
कर्मवत्कर्मणा II. १९६
कर्मव्यतिहारे II. ५३७
कल्याण्यादीनामिनङ् I. ३९५
कवं चोष्णे I. ३६४
कषादिषु यथाविध्यनु- II. ५८९
कष्टाय क्रमणे II. ११७
कस्येत् I. ४१७
काण्डाण्डादीरन्नीरचौ I. ५९६
का पथ्यक्षयोः I. ३६४
कापिश्याः ष्फक् I. ४४३
कामप्रवेदनेऽकच्चिति II. २१०
काम्यच्च II. १११
कारके I. ५२
कारस्करो वृक्षः I. ३८२
कारे सत्यागदस्य I. ३५४
कार्मस्ताच्छील्ये I. ५०१
कालसमयवेलासु II. ५२६
कालाट्ठञ् I. ४५३
कालात् I. ५२८
कालात्साधुपुष्प्यत् I. ४६५
कालाध्वनोरत्यन्त- I. ७२

| | | | |
|---|---|---|---|
| काश्यादिभ्यष्ठञ्ञिठौ | I. ४४७ | कुलात्खः | I. ४०५ |
| कासूगोणीभ्यां ष्टरच् | I. ६४६ | कुशाग्राच्छः | I. ६४८ |
| कास्तीराजस्तुन्दे | I. ३८२ | कुषिरञ्जोः प्राचां | II. १९७ |
| काम्प्रत्ययादाममन्त्रे | II. २२ | कुसीददशैकादशात् | I. ४९६ |
| किंकिलास्त्यर्थेषु | II. २०८ | कुस्तुम्बुरूणि जातिः | I. ३८० |
| किं क्षेपे | I. २०९ | कृच्छ्रगहनयोः | II. ३२७ |
| किंयत्तदो निर्धारणे | I. ६४६ | कृञः प्रतियत्ने | I. ११९ |
| किंवृत्ते लिङ्लृटौ | II. २०७ | कृञः श च | II. ५५८ |
| किति च | I. ३८४ | कृञो द्वितीयतृतीय | I. ६६६ |
| किमः क्षेपे | I. ३२९ | कृञो हेतुताच्छील्य- | II. २६३ |
| किमः सङ्ख्यापरिमाणे | I. ५७० | कृञ्चानुप्रयुज्यते | II. ५ |
| किमश्च | I. ६२१ | कृतलब्धक्रीत- | I. ४६४ |
| किमिदंभ्यां वो घः | I. ५७० | कृते ग्रन्थे | I. ४७९ |
| किमेत्तिङव्यय- | I. ६३१ | कृत्यचः | II. २१६ |
| किमोऽत् | I. ६१७ | कृत्यल्युटो बहुलम् | II. २१७ |
| किरतौ लवने | II. ७४ | कृत्याः | II. २१५ |
| किरश्च पञ्चभ्यः | II. १०१ | कृत्यानां कर्तरि वा | I. १४२ |
| किसरादिभ्यः ष्ठन् | I. ४९९ | कृत्याश्च | II. ५७६ |
| कुगतिप्रादयः | I. २१७ | कृत्यैरधिकार्थवचने | I. १८४ |
| कुटीशमीशुण्डाभ्यो रः | I. ६४५ | कृत्वोर्थप्रयोगे | I. १२३ |
| कुत्वा डुपच् | I. ६४६ | कृपो रो लः | II. ४० |
| कुत्सिते | I. ६४३ | कृभ्वस्तियोगे | I. ६६० |
| कुमति च | I. ३७९ | कॄ धान्ये | II. ५३३ |
| कुमहद्भ्यामन्यतरस्यां | I. २४१ | केकयमित्रयुप्रलयानां | I. ३९९ |
| कुमारशीर्षयोः | II. २९० | केदाराद्यञ् च | I. ४२६ |
| कुमुदनडवेतस- | I. ४३७ | केशाद्वोऽन्यतरस्यां | I. ५९५ |
| कुम्भपदीषु च | I. २७९ | केशाश्वाभ्यां यञ्छौ | I. ४२८ |
| कुर्वादिभ्यो ण्यः | I. ४०७ | कोः कत्तत्पुरुषेऽचि | I. ३६३ |
| कुलकुक्षिग्रीवाभ्यः | I. ४४१ | कोपधाच्च | I. ४८१ |
| कुलटाया वा | I. ३९६ | कोशाड्ढञ् | I. ४६५ |

कौमारापूर्ववचने I. ४१५
कौसल्यकार्मार्याभ्यां I. ४०७
क्तक्तवतू निष्ठा II. ३१४
क्तस्य च वर्तमाने I. १२९
क्तादल्पाख्यायाम् I. ४१
क्तेन च पूजायाम् I. १९२
क्तेन नञ्विशिष्टेनानञ् I. २०७
क्तोऽधिकरणे च II. ३३६
क्त्वा च I. २३६
क्त्वि स्कन्दिस्यन्दोः II. ५७७
क्याच्छन्दसि II. ३७५
क्रतौ कुण्डपाय्य- II. २३६
क्रमः परस्मैपदेषु II. २६, २७
क्रमश्च क्त्वि II. ५७९
क्रमादिभ्यो वुन् I. ४३३
क्रव्ये च II. ३००
क्रियार्थोपपदस्य I. ९१
क्रियासमभिहारे II. २१३
क्रीङ्जीनां णौ II. ९९
क्रीडोऽनुसं- II. १३३
क्रुधद्रुहेर्ष्यासूया- I. ८५
क्रुधद्रुहोरुपसृष्टयोः I. ८७
क्रुधमण्डार्थेभ्यश्च II. ३६१
क्रौड्यादिभ्यश्च I. ४१२
क्र्यादिभ्यः श्ना II. ८०
क्लिशः क्त्वानिष्ठयोः II. ३२३
क्वणो वीणायां च II. ५४६
क्वसुश्च II. ३४०
क्वाति I. ६१७
क्विप्च II. ३०१
क्षत्राद्धः I. ४०५
क्षायो मः II. ३१९
क्षिप्रवचने लृट् II. २०६
क्षुद्राभ्यो वा I. ३९८
क्षुद्राभ्रमरवटर I. ४७९
क्षुब्धस्वान्तदान्त- II. ३२५
क्षुभ्नादिषु च I. २३८
क्षेत्रियच्परक्षेत्रे I. ५८१
क्षेमप्रियमद्रे II. २८३

ख

खः सर्वधुरात् I. ५०४
खचि ह्रस्वः II. २७८
खट्वा क्षेपे I. १८२
खनो घ च II. ५७२
खलगोरथात् I. ४३१
खलयवमाषतिल- I. ५१६
खित्यनव्ययस्य II. २७१

ग

गतिबुद्धिप्रत्यवसानार्थ I. ५६
गत्यर्थकर्मणि द्वितीया I. ९४
गत्यर्थाकर्मक- II. ३३५
गत्वरश्च II. ३७१
गदमदचरयमश्च II. २२१
गन्धनावक्षेपण- II. १५६
गन्धस्येदुत्पूति- I. २७७
गमश्च II. २८५
गमहनजनखन II. ४८
गम्भीराञ्ञ्यः I. ४६८
गर्गादिभ्यो यञ् I. ३९१

गर्हायां च II. २०९
गर्हायां लडपि II. २०६
गवाश्वप्रभृतीनि च I. ३०३
गवियुधिभ्यां स्थिरः I. ३३३
गस्थकन् II. २४७
गहादिभ्यश्च I. ४४८
गाङ् लिटि II. ६५
गाण्ड्यजगात्संज्ञायां I. ५९५
गातिस्थाघुपाभूभ्यः II. ४
गाथिविदथिकेशि- I. ४३४
गापोष्टक् II. २५६
गिरेश्च सेनकस्य I. १७९
गुडादिभ्यष्ठञ् I. ५११
गुणवचनब्राह्मण- I. ५४०
गुणो यङ्लुकोः II. १०४
गुपूधूपविच्छि- II. २२
गुतिज्किद्भ्यस्सन् II. ५४
गुरोश्च हलः II. ५६०
गृधिवञ्च्योः II. १८१
गृहपतिना संयुक्ते I. ५०५
गेहे कः II. २४७
गोचरसञ्चरवह- II. ५६९
गोत्रोक्षोष्ट्रोरभ्र- I. ४२३
गोधाया ढ्रक् I. ३९८
गोपयसोर्यत् I. ४८५
गोपुच्छाट्ठञ् I. ४९०
गोरतद्धितलुकि I. २०४
गोश्च पुरीषे I. ४८३
गोष्ठात्खञ्भूतपूर्वे I. ५५७
गोष्पदं सेवितासेवित I. ३८०
ग्रहवृदृनिश्चि- II. ५४२
ग्रहिज्यावयिव्यधि II. ५७
ग्रामकौटाभ्यां च I. २४०
ग्रामजनबन्धुभ्यः I. ४२६
ग्रामाद्यखञौ I. ४४०
ग्राम्यपशुसंघेष्वतरुणेषु I. ३१५
ग्रीवाभ्योऽण् च I. ४६८
ग्लाजिस्थश्च क्स्नुः II. ३५३

घ

घकालतनेषु I. ३३६
घञपोश्च II. ५४३
घञि च भावकरणयोः II. ५२९
घरूपकल्पचेलड् I. ३४३
घुषिरविशब्दने II. ३२७

ङ

ङ्यापोः संज्ञाछन्दसोः I. ३५१

च

चक्षिङः ख्याञ् II. ६२
चटकाया ऐरक् I. ३९७
चतुर्थी चाशिष्यायुष्य I. १४५
चतुर्थी तदर्थार्थ I. १८५
चतुर्थी सम्प्रदाने I. ८०
चतुष्पाद्भ्यो ढञ् I. ३९९
चरणे ब्रह्मचारिणि I. ३५९
चरति I. ४९०
चरफलोश्च II. १०६
चरेष्टः II. २६१

